# *BENARES SANSKRIT SERIES;*

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PAṆḌITS OF THE BENARES SANSKṚIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH M. A.,

LATE DIRECTOR OF PUBLIC INSTRUCTION, N. W. P. & OUDH,

& G. THIBAUT PH. DR.,

PRINCIPAL, BENARES COLLEGE.

*Nos. 8, 10, 18, 21, 26 & 31.*

## कात्यायनमहर्षिप्रणीतम् शुक्लयजुःप्रातिशाख्यम् ।
## उव्वटकृतभाष्ययुतम् ।

प्रतिज्ञासूत्रं अनन्तदेवभाष्ययुतम् । त्रिकण्डिकाभाषिकसूत्रं तत्कृतभाष्यान्वितञ्च । जटाद्यष्टविकृतिलक्षणं सोदाहरणं सव्याख्यानम् । मूलमात्रं ऋग्यजुःपरिशिष्टसूत्रम् । तावन्मात्रं अनुवाकाध्यायपरिशिष्टसूत्रञ्च । शौनकोक्तं चरणव्यूहपरिशिष्टसूत्रं महिदासविवृत्तिसमेतम् ।

श्रीकाशिकप्रधानपाठालयाधीतविद्येन श्रीमिथिलामण्डलाधीशतो लब्धवैदुष्यप्रतिष्ठेन पाठकोपाह्वश्रीयुगलकिशोरशर्म्मणा निर्मितप्रातिशाख्यकीर्त्तिप्रकाशाख्यटिप्पण्या समेतम् ।

KATYAYANA'S PRATIŚAKHYA OF THE WHITE YAJUR VEDA, WITH THE COMMENTARY OF UVAṬA;

THE PRATIJNÁ SÚTRAS WITH THE COMMENTARY OF ANANTADEVA; THE TRIKANDIKÁ BHÁSHIKA SÚTRAS ALSO WITH ANANTADEVA'S COMMENTARY; DEFINITIONS OF JATÁ &c. OR EIGHT-FOLD PERMUTATIONS OF VAIDIK TEXT, WITH ILLUSTRATIONS AND COMMENTARY; THE PARIŚISHṬA SÚTRAS OF RIK & YAJUSH; THE PARIŚISHṬA SÚTRAS OF THE ANUVÁKÁDHYÁYA; AND ŚAUNAKA'S CHARAṆAVYÚHA PARIŚISHṬA SÚTRAS WITH THE EXPOSITION OF MAHIDÁSA.

EDITED BY PAṆḌIT YUGALKIŚORA PÁṬHAKA,

LATE SCHOLAR OF THE BENARES SANSKRIT COLLEGE.

*BENARES:*

**PUBLISHED BY MESSRS. BRAJ B. DAS & CO.**

1888.

श्रीः

# विज्ञापनम्

श्रीमद्विश्वेश्वरपालितायां परमपवित्रायां वाराणस्यां प्रत्यग्दिशि छोटीपीयरीनामवीथिकावास्तव्यसरयूपारिण: पाठकोपाह्वपण्डित नाथूरामशर्मण: प्रपौत्रेण, श्रीमद्रामफलपाठकस्य पौत्रेण, श्रीमद्रामचन्द्रचरणाब्जसेवकव्यासोपाह्वश्रीमद्विश्वेश्वरपाठकस्य कनिष्ठसुतेन, विद्वद्वरमण्डलमण्डितेन, वेदशास्त्रसम्पन्नेन च श्रौतस्मार्तग्रन्थाध्ययनाध्यापनशीलेन, वेदविद्याप्रदसारस्वतान्वयाबालब्रह्मचारिश्रीमद्रामानन्दगुरुचरणारविन्दपादुकासेवकेन च, गवर्मेण्ट संस्थापितराजकीयपाठालयाधीतविद्येन रामघट्टस्थबालूजीफरसाभिधसुप्रसिद्धस्थानीयपुराणवाचकेन श्रीमद्दर्भङ्गानगराद्यनेकसुप्रतिष्ठधार्मिकशाङ्गेरिष्ठवैदिकधर्मानुयानवरिष्ठमहाराजेभ्यो लब्धवैदुष्यप्रतिष्ठेन च व्यासोपाह्वश्रीमद्युगलकिशोरपाठकेन श्रीमद्योगिवरयाज्ञवल्क्यदत्तकपुत्रेण श्रीमत्कात्यायनप्रणीताष्टाध्याय्यात्मकं वज्रटसुतोव्वटकृतभाष्ययुतं शुक्लयजुर्वेदीयप्रातिशाख्यपुस्तकं सभाष्यप्रतिज्ञासूत्रसभाष्यत्रिकण्डिकाभाषिकसूत्रजटापटलयजु:परिशिष्टसूत्रानुवाकाध्यायपरिशिष्टसूत्रैः समेतं महर्षिशौनकप्रणीतचरणव्यूहपरिशिष्टसूत्रं महिदासकृतभाष्यसहितं पूर्वममुद्रितं वेदशास्त्रव्युत्पन्नानां विदुषां मैथिलाद्यनेकदेशीयछात्राणां च सौकर्य्यार्थं आधुनिकशुष्कवैदिकस्वरवर्णोच्चारणपरिपाटीशोधनार्थं च आदर्शपञ्चकसाहाय्यमवलम्ब्य विषयसूचनपत्रशुद्धाशुद्धपत्रान्वितं च सीसकाक्षरैः संस्कृत्य स्वरचितप्रातिशाख्यकीर्तिप्रकाशाख्यटिप्पण्या सह संविशोध्य वैश्यवर्यछन्नूलालसंस्थापितसीरीजभागीयमुद्रालये शर्मण्यदेशीयसु-

प्रख्यातमहाशयडाक्टरथिबोसाहिबानुमत्या १६४५ पञ्चचत्वारिंशदुत्तरैकोनविंशतिशततमवैक्रमाब्दीयमहमासावदातदलतिथितिथौ प्रकाशितम् ॥ अत्र च प्रथमपुस्तकं मया १९१९ एकोनविंशत्युत्तरैकोनविंशतिशततमवैक्रमाब्दीयं पण्डितेश्वरीदत्तत्रिपाठिहस्तलिखितमतीवशुद्धं लब्धम् ॥ अपरं श्रीमद्गङ्गाधरपाठककानिष्ठापत्यश्रीगौरीनाथशास्त्रिहस्तादष्टनवत्युत्तराष्टादशशततम १८९८ वैक्रमाब्दीयं प्राप्तम् ॥ तृतीयपुस्तकं गवर्मेण्टसंस्थापितराजकीयपाठशालीयसंस्कृतपुस्तकालयस्थपण्डितवरश्रीमद्रमानाथशर्मणः करकमलात्प्राचीनं काश्मीरलिपिकमेकाशीत्युत्तराष्टादशशततम १८८१ वैक्रमाब्दीयं गृहीतम् ॥ तुरीयं गौडदेशे उपाह्व श्रीप्रभाकरभट्टस्य हस्तादतीवशुद्धं सटिप्पणं षडशीत्युत्तरसप्तदशशततम १७८६ शालिवाहनशाकाब्दीयम् ॥ पञ्चमपुस्तकं मथुरामण्डलवर्तिवृन्दावननगरवास्तव्यवेदार्थकरणक्षमस्वर्गवासिनः श्रीमद्यालालशर्मणः कृपयातीवप्राचीनं, शुद्धं ज्योत्स्नाख्यव्याख्यानयुतं वैदिकमानभञ्जन्याख्यटिप्पण्यान्वितं च षोडशोत्तराष्टादशशततम १८१६ वैक्रमाब्दीयमुपलब्धम् ॥ यदस्मिन्ग्रन्थे प्रमादेनान्यथा स्यात्तच्छोधने यत्नं न तद्बुद्धिमन्तः सम्यगध्ययनाध्यापनादिना प्रचारयन्तु कृपया शोधयन्तु चेति शम् ॥

---

अथ प्रातिशाख्यसूत्रप्रतिज्ञासूत्रभाषिकसूत्राणां विषयसूचनपत्रस्य अध्यायपृष्ठसूत्राङ्का लिख्यन्ते ॥



इति प्रातिशाख्यादिग्रन्थविषयसूचीपत्रं समाप्तम् ॥

---

# शुक्लयजुःप्रातिशाख्यम् ।

## उव्वटकृतभाष्यसहितम् ॥

श्रीगणेशाय नमः ।

यस्य भृङ्गावलिः कण्ठे स्रुतदानाम्बुपूरिते ।
भाति रुद्राक्षमालेव स वः पायाद् गणाधिपः ॥१॥
प्रणम्य परमात्मानं व्याख्यास्ये प्रातिशाख्यकम् ।
सरस्वतीं च जगतस्तमोनाशनदीपिकाम् ॥ २ ॥
जपादौ नाधिकारो ऽस्ति सम्यक्पाठमजानतः ।
प्रातिशाख्यमतो ज्ञेयं सम्यक्पाठस्य सिद्धये (१) ॥३॥

**स्वरसंस्कारयोश्छन्दसि नियमः ॥१॥**

स्वर उदात्तानुदात्तस्वरितप्रचितलक्षणः। संस्कारो लोपागमवर्णविकारप्रकृतिभावलक्षणः। तयोः स्वरसंस्कारयोः छन्दसि विषये नियमो ऽधिकृतो वेदितव्यः। प्रतिज्ञासूत्रमेतत् प्रतिज्ञा च शिष्यबुद्धिसमाधानार्था॥

**लौकिकानामर्थपूर्वकत्वात् (२) ॥२॥**

लोके विदिता लौकिकाः लौकिकानां शब्दानामर्थपूर्वकत्वात्प्रयोजनपूर्वकत्वादस्मिन् शास्त्रे नियमो न

---

(१) के चिदिदं पद्यं मूले पठन्ति ॥

(२) उत्तरसूत्रावस्थितनकारः काकाक्षिवदत्र सम्बध्यते । लौकिकानां शब्दानां

क्रियते कथं प्रयोजनपूर्वकत्वम् कथं प्रयोजनपूर्वकाणां शब्दानां नियमो न क्रियते आह देवदत्त गामभ्याज शुक्लां दण्डेनेति यस्य पुरुषस्य देवदत्तकर्तृका गोत्वजात्युपलक्षितशुक्लद्रव्यकर्मिका दण्डकरणिका ऽभ्याजनक्रिया ऽभिप्रेता स एवैतद्वाक्यं ब्रवीति । न तत्सर्वः (१) अतो ऽर्थपूर्वकत्वं लौकिकानां शब्दानाम् अर्थपूर्वकत्वे सत्यर्थाभावे नोच्चारणं लौकिकानां शब्दानां, छन्दसि पुनरहरहः स्वाध्यायमधीयीतेति श्रुतिचोदनात् अतः सदाकालं छान्दसानां शब्दानामभ्यासः श्रुत्या विधीयते पुरुषस्याभ्युदयार्थम् अतस्तद्विषय एव स्वरसंस्कारयोर्नियम आरभ्यते न लौकिकानामर्थपूर्वकत्वात् ॥

## न समत्वात् ॥ २ ॥

नकारः प्रतिषेधवाच्युभयत्र सम्बध्यते काकाक्षिवत् न चैतद् यद्वैदिकानां शब्दानां स्वरसंस्कारनियमोऽभ्युदयहेतुः किं तर्हि लौकिकानामपि नियमो ऽभ्युदयहेतुरेव कुतः समत्वात् तुल्यत्वाच्छब्दानां यएव वैदिकास्तएव लौकिकास्त एव तेषामर्था इति अतो यदुक्तं वैदिकानामेव स्वरसंस्कारणमभ्युदयहेतुरित्येतन्न समत्वात् (२) ॥

---

अर्थबोधनार्थं प्रयोगात्तत्तदनुसारिप्रकृतिप्रत्ययकल्पनया व्याकरणानुसारेण स्वरसंस्कारवर्णनिर्णयः । छन्दसस्तु अपौरुषेयत्वाद्यथोच्चारितं तस्यैव स्वरवर्णस्य च साधुत्वं कल्पनीयम् । तदर्थमिदं प्रातिशाख्यम् । प्रातिशाख्यशब्दस्य व्युत्पत्तिमग्रे वादिष्यामि ॥

(१) न सर्वतः । इति 'क' 'ख' पुस्तके पाठः ॥

(२) साधूनेव प्रयुञ्जीत नासाधूनिति । एकः शब्दः सम्यगुच्चारितः स्वर्गे लोके

## स्याद्वाम्नायधर्मित्वाच्छन्दसि नियमः ॥ ४ ॥

आम्नायो वेदस्तस्य धर्म आम्नायधर्मः आम्नायधर्मो विद्यते यस्य शब्दग्रामस्य स आम्नायधर्मी तस्य भाव आम्नायधर्मित्वम् तस्मादाम्नायधर्मित्वात् भवेद्वा छन्दसि शब्दानां स्वरसंस्कारनियमो ऽभ्युदयाय महते स्याच्छन्दसि नियमो महोदयः कतमत्तदाम्नायधर्मित्वं नाम आह आम्नायः क्रियार्थो यज्ञार्थस्य। तद्यथा ब्राह्मणं विध्यर्थवादरूपम् मन्त्रस्तु कर्माङ्गभूतद्रव्यदेवतास्मारकः मन्त्रेण स्मृतं कर्म कर्तव्यमिति नियमार्थं वचनम् मन्त्रस्तु यदि मनागपि स्वरतो वर्णतो वा हीनो भवति अथ कर्मासमृद्धिः न केवलं कर्मासमृद्धिः किन्तर्हि दुरिष्टहेतुः प्रत्यवायः स्यात्। उक्तं च मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधादिति दुष्प्रयुक्तमन्त्रविषयो निन्दार्थवादः तथा स्वाध्यायविषयः फलार्थवादो भवति घृतकुल्यामधुकुल्याः पितॄन्त्स्वधा अभिवहन्तीति न तु लौकिकशब्दविषयमिदं (१) किञ्चिदुपलभ्यते अतः स्वरसं-

---

कामधुग् भवति इति भाष्यकारोक्तेश्च यएव वैदिकास्तएव लौकिकास्तएव तेषामर्था इति अन्यथा पाणिन्यादिप्रणयनं व्यर्थमिव स्यादिति।

(१) मीदृक् इति 'ख' 'ग' पुस्तके पाठः।

स्वारयोश्छन्दसि नियमो महोदय इति (१) ॥

यत्तन्न (२) ॥ ५ ॥

एवं स्वरसंस्कारौ छन्दसि विषये प्रतिज्ञातौ छन्दोविषये महोदयफलावित्यवधार्य, अधुना शब्दस्वरूपजिज्ञापयिषयेदमाह । यत् न ज्ञायते शब्दस्य कारणभूतं तद्ध वक्ष्याम इति सूत्रशेषः ॥

---

(१) वा शब्दः पूर्वोक्तसमनियमत्वनिरासनेन निर्द्धारणार्थः ।

मन्त्रब्राह्मणात्मको यो वेदः सो ऽपि विध्यर्थवादमन्त्रनामधेयभेदैश्चतुर्विधो यज्ञादिक्रियार्थः । विधिस्तु प्रवर्त्तनात्मकः यावज्जीवमग्निहोत्रञ्जुहुयादिति ! अर्थवादो विधिस्तावकः प्ररोचनाविशेषजनकः । ब्रह्मवर्च्चसीहैव भवति य एवं विद्वानग्निहोत्रं जुहोतीत्यादि । मन्त्रस्तु कर्म्माङ्गभूतद्रव्यदेवतादिस्मारकः । मन्त्रेण स्मृतं कर्म्म कर्त्तव्यमिति नियमार्थं वचनम् । मन्त्रान्तैः कर्म्मादिः सान्निपात्यो ऽभिधानादिति । नामधेयं तु गुणफलोपबन्धार्थं वेदः । अग्निहोत्रं जुहोतीत्यादि । एवं चतुर्विधस्याम्नायस्य धर्म्मः । अहरहः स्वाध्यायमधीयीत । तस्मात् स्वाध्यायोऽध्येतव्य इत्यादि । घृतकुल्यामधुकुल्याः पितॄन्त्स्वधाऽभिवहन्ति । प्रज्ञावृद्धियशोलोकपाक्तिरित्याद्यभ्युदयहेतुफलार्थवादो भवति । अति ह वै पुनर्मृत्युमुच्यते गच्छति ब्रह्मणः सात्मतामित्युपक्रम्य तथाभूतेभ्यो न हीयत इत्यादि दुरिष्टहेतुः प्रत्यवायपरिहारो ऽपि भवतीत्याहस्म वेदः । तथा वर्णतः स्वरतो युक्तो महते ऽभ्युदयायेत्याह । तस्य हैतस्य साम्नो यो वेदो भवति हास्यत्वं तस्य वै स्वरएव स्वमित्युपक्रम्य भवति हास्यत्वमित्यादि । यथा वेद उक्तवान् उक्तोऽन्यद्वां कर्म्मीकृतामित्यादि तद्वास्यां ततः क्षियतएवेति । तथा यन्ति वा आपएत्यादित्यएति चन्द्रमायन्ति नक्षत्राणि यथा ह वा एता देवता नेयुर्नकुर्य्युरेवर्ठ. हैव तदहर्ब्राह्मणो भवति यदहः स्वाध्यायन्नाधीते तस्मात् स्वाध्वायन्नाधीते तस्मात् स्वाध्यायोऽध्येतव्यस्तस्मादप्यृचं वा यजुर्वा साम वा गाथां वा कुंव्यां वाभिव्याहरेद्व्रतस्याव्यवच्छेदायेति दुरिष्टपरिहारः ।

(२) वर्णात्मकश्छन्दस्तु स्वरसंस्कारनियमविधानाद् वर्णवच्छब्दकारणमुपक्रमते । पुनराधीयते न च व्याख्यायते यत् न ज्ञायते पृथिव्यादिभिश्चक्षुरादिभिः स चात्मा तत्प्रभवं च खं च ज्ञेयम् एतस्मादात्मन आकाशः सम्भूत इति श्रुतेः ।

## वायुः खात् ॥ ६ ॥

वायुः कारणभूतः शब्दस्य स च खादाकाशादुत्पद्यते ॥

## शब्दस्तत् (१) ॥ ७ ॥

शब्दस्तदात्मको वाय्वात्मक इत्यर्थः ॥

## सङ्करोप (२) ॥ ८ ॥

यदि वाय्वात्मकः शब्दः वायोः सर्वगतत्वात् सदाकालं सर्वत्रोपलब्धिः प्राप्नोतीत्याशङ्क्याह । संकरोपेति । सम्यक्करणैरुपहितो हृदि वायुर्वेणुशङ्खादिभिः शब्दीभवति (३) ॥

## ससङ्घातादीन् वाक् ॥ ९ ॥

यो वायुः सम्यक्करणैरुपहितो वेणुशङ्खादिभिः शब्दीभवति स एव सङ्घातादीन् प्राप्य वाग् भवति सङ्घातः पुरुषप्रयत्नः स आदौ येषां स्थानादीनां ते सङ्घातादयः

---

(१) तदिति प्रातिपदिकं सामान्ये । यथाह याज्ञवल्क्यः । सर्गादौ तु यथाकाशं वायुं ज्योतिर्जलं महीम् । सृजत्येकोत्तरगुणांस्तथादत्ते भवन्नपि । वायोर्गुणद्वयत्वाद्गुणगुणिनोरभेदेन सामान्येन शब्दात्मको वायुरित्यर्थः ।

(२) सङ्करोपहितः इति 'ग' 'घ' पुस्तकपाठः ।

(३) उक्तं च पाणिनिना । आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् । मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरमिति ॥

तान् प्राप्य वाग्भवति वर्णो भवतीत्यर्थः (१) ॥

त्रीणि स्थानानि ॥ १० ॥

सङ्घातः पुरुषप्रयत्न इत्युक्तम् । अधुना सङ्घात आदिभूतो येषां स्थानादीनां तान्युच्यन्ते त्रीणि स्थानानि वायोर्भवन्ति उरःकण्ठशिरआत्मकानि शरीरे ॥

द्वे करणे ॥ ११ ॥

संवृतविवृताख्ये वायोर्भवतः ॥

शरीरात् ॥ १२ ॥

ये एते करणे संवृतविवृताख्ये यानि च त्रीणि स्था-

---

(१) सा वाक् चतुर्द्धा । ऐन्द्रवायवग्रहब्राह्मणे उक्तम् । मनुष्यपशुपक्षिक्षुद्रसरीसृपेषु तुरीयभागेनावस्थिता परा पश्यन्ती मध्यमा वैखरीति । तथा च श्रुतिः । शतपथब्राह्मणे ४ काण्डे १ प्रपाठके ३ ब्राह्मणे । वाग्घवा अस्यैन्द्रवायव इत्युपक्रम्य तौ प्रजापतिं प्रतिप्रश्नएवेति च तुरीयमेव भाजयां चकारेत्याधिकृत्य तदेतत्तुरीयं वाचो निरुक्तं यन्मनुष्या वदन्त्यथैतत्तुरीयं वाचो निरुक्तं यत्पशवो वदन्त्यथैतत्तुरीयं वाचो निरुक्तं यद्वयाꣳसि वदन्त्यथैतत्तुरीयं वाचो निरुक्तं यदिदं क्षुद्रꣳ सरीसृपन्तस्मादेतदृषिणाऽभ्यनूक्तम् ॥ चत्वारि वाक्परिमितापदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ॥ गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ अथैतासां लक्षणानि ॥ वैखरी शब्दनिष्पत्तिर्ध्वनिरूपा तु मध्यमा । पश्यन्ती ज्ञानरूपा च वाग्विशुद्धा परा स्मृता इति यथा । या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्ठिवर्णानान्तःकरणसदनैः प्राणसङ्गप्रसूती । तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये । सोदीर्णो मूर्द्धन्यभिहतो वक्त्रमापद्य मारुतः । वर्णान् जनयते तेषां विभागः पञ्चधा स्मृतः । स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः । इति वर्णविदः प्राहुर्निपुणं तन्निबोधत इति पाणिनिः ॥

नानि शरीराद्वायोर्निर्गच्छतस्तानि भवन्ति यानि पुनरुपरिष्टाद्वक्ष्यति स्थानकरणानि तानि मुखस्थानानि अत एवमाह शरीरादिति ॥

शरीरम् ॥ १३ ॥

एवमेतेन प्रकारेण शरीराद्वायुर्निर्गच्छन् कादिवर्णविशेषव्यक्तिमापद्यते ॥

शरीरे ॥ १४ ॥

किं शरीराद्वायुर्निर्गच्छन्मात्रादिवर्णविशेषव्यक्तिमापद्यते नेत्याह शरीरे शरीरैकदेशे मुखे प्राप्तो वायुस्ताल्वादिस्थानेषु निषक्तः करणेन विशेषव्यक्तिरूपेण वर्णत्वमापद्यते ॥

तेषाꣳ समूहात् स उदयँस्त्रैकाल्यम् ॥ १५ ॥

तेषां स्थानकरणप्रयत्नानां सम्बन्धिनः समूहात् स उदयन् वायुरुद्गच्छन् त्रैकाल्यमभिधत्ते त्रयः कालाः समाहृताः त्रिकालम् त्रिकालमेव त्रैकाल्यं स्वार्थे ष्यङ् । त्रिकालसम्बद्धमर्थजाते भवद्भूतभविष्यत्सम्बद्धमर्थजातम् । वायुर्वर्णीभूतः पदवाक्यैरभिधत्ते त्रिकालसम्बद्धस्यार्थजातस्य वायुः शब्दरूपेण प्रकाशको भवतीत्यर्थः । वायोरियं विभतिर्या त्रयी विद्येति ॥

ओङ्कारः स्वाध्यायादौ ॥ १६ ॥

यत्तन्नेत्येवमादिना वायुः पदवाक्यरूपेण सर्वं प्रकाशयतीत्युक्तम्। अधुना स्वाध्यायविधिरुच्यते ओङ्कारः स्वाध्यायादौ कर्त्तव्य इति सूत्रशेषः। तथा चाह मनुः ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा। स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते इति (१) ॥

ओङ्काराथकारौ ॥ १७ ॥

ओङ्कारोच्चारणं स्वाध्यायादौ प्रतिज्ञातमेव तत्तुल्यफलोऽथशब्दो ऽपीति सूत्रार्थः। तथा चोक्तम्। ओङ्कारश्चाथकारश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तेनेमौ मङ्गलावुभौ (२) ॥

ओङ्कारं वेदेषु ॥ १८ ॥

एवमधस्तनसूत्रेण ओङ्काराथशब्दयोः स्वाध्यायादावविशेषेणोच्चारणमुक्त्वाऽनेन सूत्रेण व्यवस्था क्रियते ओङ्कारं वेदेषु प्रयुञ्जीतेति सूत्रशेषः ॥

अथकारं भाष्येषु ॥ १९ ॥

भाष्येषु ग्रन्थेषु अथकारं प्रयुञ्जीतेति सूत्रशेषः (३) ॥

---

(१) शिक्षायां याज्ञवल्क्योऽपि। प्रणवं प्राक् प्रयुञ्जीत व्याहृतिस्तदनन्तरम्। सावित्रीं चानुपूर्व्येण ततो वेदं समारभेत् इति।

(२) विनिष्क्रान्तौ तस्मान्माङ्गलिकावुभौ इति 'ग' 'घ' पुस्तके पाठः।

(३) वैदिकोऽर्थो भाष्यते येषु कल्पसूत्रादिषु तेष्वथशब्दं प्रयुञ्जीतेति।

## प्रयतः ॥ २० ॥

प्रयतः शुचिरुच्यते पादशौचाचमनादिना शुचिरधीयीतेत्यर्थः (१) ॥

## शुचौ ॥ २१ ॥

शुचौ विविक्तदेशेऽधीयीत । उक्तञ्च । द्वावेव वर्ज्जयेन्नित्यमनध्यायौ प्रयत्नतः । स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः ॥

## इष्टम् ॥ २२ ॥

अभिरुचितमासनमासीनः (२) ॥

## ऋतुं प्राप्य ॥ २३ ॥

हेमन्तमृतुं प्राप्य रात्र्याश्चतुर्थप्रहरेऽधीयीत (३) ॥

## योजनान्न परम् ॥ २४ ॥

अधीयानो योजनात् परमध्वानं न गच्छेत् (४) ॥

---

(१) प्राथमिकाष्टमिकाभ्यां सूत्राभ्यामन्तर्बहिश्चाचमन [illegible] शुचिरधीयीतेत्युच्यते ।

(२) मासीन इति 'घ' पुस्तकपाठः ।

(३) प्रथमेऽपि यामेऽध्ययनं कुर्वीत तदुक्तं याज्ञवल्क्येन । [illegible] वेदाभ्यासेन यो नयेत । यामद्वयशयानश्च ब्रह्मभूयाय कल्पते । [illegible] र्द्धरात्रार्द्धशायिनाम् । नहि विद्यार्थिनां निद्रा [illegible] ॥

(४) अत्र कश्चिद् अध्ययनं कुर्वन् योजनात्परमध्वानं न गच्छेदिति [illegible] योज-

भोजनं मधुरᳬ स्निग्धम् ॥ २५ ॥

मधुररसप्रायं घृतप्रायं चान्नं(१)भुञ्जीत ॥

वर्णदोषविवेकार्थम् ॥ २६ ॥

अकारादयो वर्णाः तेषां दोषाः तेषां विवेचनाय नानाकरणाय तद्यथा त्रिमात्रिकस्य स्वरस्य द्विमात्रता द्विमात्रिकस्य मात्राकालता अनुनासिकस्य स्वरस्यैकदेशरङ्गता यथा महाँ इन्द्र इति तथा व्यञ्जनानामनेकप्रकारा दोषाः संभवन्ति अयमपि वक्ष्यति ऊष्मभ्यः पञ्चमेषु यमापत्तिर्दोष इति ॥

तिङ्कृत्तद्धितचतुष्टयसमासाः

---

नपर्यन्तं मध्ये मार्गे पठेदित्याह तत्र यदि ह वा अप्यभुक्तोऽलङ्कृतः सुहितः सुखे शयने शयानः स्वाध्यायमधीयीत । आहैव सनखाग्रेभ्यस्तप्यत इति श्रुतावध्ययनस्यागममादर्शनात् । कूर्म्मपुराणे । नोच्छिष्टः संवसेन्नित्यं न नग्नः स्नानमाचरेत् । न गच्छन्वै पठेद्वापि न चैव स्वशिरः स्पृशेत् । तथा भविष्योत्तरपुराणीयशिवरात्रिकथायां मृगसंवादे शतपथब्राह्मणेषु चास्यार्थस्योक्तत्वात् । यः पठेत्स्वरहीनं तु लक्षणेन विवर्जितम् । रथ्यां च सञ्चरन्विप्रो वेदमुद्गीरयेत्तथा । विप्रस्य पठनं क्वापि शृणोति तावतान्त्यजः । तेन पापेन लिप्यामि यदि नायामि ते गृहमिति ॥

(१) वान्नमिति 'घ' पुस्तकपाठः । भोजनपरिमाणं चाह याज्ञवल्क्यः । अन्नव्यञ्जनयोर्भागौ भागैकमुदकस्य च । वायोः सञ्चारणार्थाय भागैकमवशेषयेत् । तथा आम्रपालाशबिल्वानामपामार्गशिरीषयोः । वाग्यतः प्रातरुत्थाय भक्षयेद्दन्तधावनम् । खदिरश्च कदम्बश्च करवीरकरञ्जकौ । सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः । तेनास्यकरणं सूक्ष्मं माधुर्य्यं चोपजायते । आदरं कुरु यत्नेन करणं हितकाम्यया इति ॥

## शब्दमयम् ॥ २७ ॥

यत्किञ्चिच्छब्दमयमुपलभ्यते त्रयीलक्षणं तत् तिङ्कृत्तद्धितचतुष्टयसमासाः तिङ् खलु आख्यातका भवन्ति पचति पठतीत्येवमादयः । कृतः कर्त्ता कारक इत्येवमादयः । तद्धिताः आग्नेयः सारस्वत इत्येवमादयः । चतुःप्रकाराः समासाः अव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहयः । अव्ययीभावो यथा समंभूमि उपरिनाभि । तत्पुरुषो यथा प्रजापतिः इत्वहा । द्वन्द्वो यथा इन्द्राग्नी मित्रावरुणौ । बहुव्रीहिर्यथा शुद्धवालः सर्वशुद्धवालः (१) ॥

## तां वाचमोङ्कारं पृच्छामः ॥ २८ ॥

तिङ्कृत्तद्धितचतुष्टयसमासलक्षणां तामित्थं भूतां वाचम् ओङ्कारं पृच्छामः ओङ्कारो वाचः पुत्रः स पृष्टः सन् स्वाध्यायादावुच्चारणेन स्वां मातरमर्थतो ग्रन्थतश्च कथयिष्यति(२) अतः स्वाध्यायादौ प्रणवः कार्यः । द्विकर्मा च पृच्छतिर्धातुः । अतो वाक्शब्दे ओङ्कारशब्दे च द्वितीया । माणवकं पन्थानं पृच्छतीति यथा (३) ॥

---

(१) द्विगुकर्म्मधारयौ तत्पुरुषान्तर्भूतौ ज्ञेयौ ॥

(२) तथा च शौनकः यथेह गौर्वत्सरुतं निशम्य हुं कृत्यवत्साभिमुखं प्रयाति । ब्रह्मापि तद्वत्प्रणवाभिज्ञं तं वक्तारमागच्छति चाप्यभुक्तमिति फलम् ॥

(३) ओङ्कारोच्चारणं विना कर्म्मफलन्न भवति तदुक्तं नरसिंहपुराणे ब्रह्मयज्ञे जपे होमे देवर्षिपितृकर्म्मणि । अनोङ्कृत्य कृतं सर्वं न भवेत्सिद्धिकारकमिति । ओङ्कारमा-

अथ शिक्षा विहिताः ॥ २९ ॥

अथेत्ययं शब्दो विशेषाधिकारार्थः शिक्षाविहिताः स्थानकरणास्यप्रयत्नादयोऽभिधीयन्ते इत उत्तरमधिकारद्वयानुवृत्तिर्द्रष्टव्या । स्वरसंस्कारानुवृत्तिः शिक्षाविहितानुवृत्तिश्च ॥

सवनक्रमेणोरःकण्ठभ्रूमध्यानि ॥ ३० ॥

अधस्तादुक्तं सम्ज्ञातादीन् प्राप्य वाक् तस्यास्त्रीणि स्थानानि । ननु कतमानि तानीत्युक्तम् इह तु शिक्षाप्रक्रमात्तत्पर्य्यायेणोच्यन्ते सवनक्रमेणोरःकण्ठभ्रूमध्यानि । प्रातःसवनमाध्यन्दिनतृतीयसवनक्रमेण उरःकण्ठभ्रूमध्यानि त्रीणि स्थानानि वायोर्भवन्ति (१) ॥

आयाममार्द्दवाभिघाताः ॥ ३१ ॥

एवमेतेषु स्थानेषु वर्णेषूच्चार्य्यमाणेषु त्रयो विकाराः शरीरस्य पर्य्यायेण भवन्ति आयाममार्द्दवाभिघाताः आयामो नाम ऊर्द्ध्वगमनं शरीरस्य । मार्द्दवं नामाधोगमनं गात्राणाम् अभिघातस्तिर्य्यग्गमनं गात्राणाम् ॥

---

हात्म्यमुक्त्वाऽधुना हरिशब्दमाहात्म्यमुच्यते तदुक्तं हरिवंशे वेदे रामायणे चैव पुराणेषु च भारते । आदिमध्यावसानेषु हरिः सर्वत्र गीयत इति ॥

(१) अमुमेवार्थं पाणिनिरप्याह । प्रातः सवनयोगं तं छन्दो गायत्रमाश्रितम् । कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम् । तारं तार्तीयसवनं शीर्षण्यं जागतानुगमिति ॥

## उच्चनीचविशेषः ॥३२॥

योऽयन्नामाभिघातः स्वरितः स उच्चनीचविशेषः उच्चनीचाभ्यामभिनिवर्त्यन्ते । एवं शरीरस्य प्रयत्नेन ये निवर्त्यन्ते तेषामुपरिष्टात् सञ्ज्ञां वक्ष्यति उच्चैरुदात्त इत्येवमादिना ॥

## अथाख्याः समाम्नायाधिकाः प्राग्रिफितात् ॥ ३३ ॥

अथशब्दो मङ्गलार्थः सञ्ज्ञाः समाम्नायाधिकाः वर्णसमाम्नायं वक्ष्यति अथातो वर्णसमाम्नायं व्याख्यास्याम इति । तस्मादधिकाः प्राग्रिफितात् रिफितसंशब्दनात्प्राक् वक्ष्यति विसर्ज्जनीयो रिफित इति तस्मात्प्राक् उपलक्षणार्थमेतत् परिभाषाप्यत्र भविष्यति तद्यथा ह्रस्वग्रहणे दीर्घप्लुतौ प्रतीयात् प्रथमग्रहणे वर्गमिति॥

## उपदिष्टा वर्णाः ॥ ३४ ॥

वर्णसमाम्नाये कथिता वर्णाः तद्यथा किति खिति गिति घिति ङिति कवर्गः अथवा ये पदेषूपदिष्टा वर्णास्तएव प्रत्येतव्याः अन्यद्वचनाद्भविष्यति तद्यथा इषे त्वा अत्र संहितायामपि न वर्णान्यत्वम् वचनात्संहितायां विकारा भविष्यन्ति तांस्तत्रैव वक्ष्यामः । अथवा पदेषु सङ्ख्योपदिष्टा वर्णाः कर्तव्याः तद्यथा इषे त्रिवर्णं पद-

म् । त्वा त्रिवर्णं । पदम् । ऊर्ज्जं पञ्चवर्णं पदम् । उक्तं च स्वरो वर्णोऽक्षरं मात्रा तत्प्रयोगार्थ एव च । मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे इति ॥

## अन्त्याद्वर्णात्पूर्व उपधा ॥ ३५ ॥

अन्ते भवोऽन्त्यो वर्णः ककारादिः अन्त्याद्वर्णात्पूर्व उपधासंज्ञो भवति तद्यथा महान् इन्द्र इति अत्र नकारस्याकार उपधासञ्ज्ञकः । सञ्ज्ञाकरणे प्रयोजनं वक्ष्यति अनुनासिकमुपधा प्रागन्तस्थाया इति ॥

## निर्द्देश इतिना ॥ ३६ ॥

वर्णानां निर्द्देश इतिना भवति तद्यथा किति खिति गिति घिति ङिति कवर्ग इति ॥

## कारेण च ॥ ३७ ॥

कारप्रत्ययेन च वर्णानां निर्द्देशो भवति तद्यथा यकारवकारयोर्जोंस्त्वे पद इति (१) ॥

## अव्यवहितेन व्यञ्जनस्य ॥ ३८ ॥

अकारव्यवहितेन कारप्रत्ययेन व्यञ्जनस्य निर्द्देशो भवति यथा ककारपकारयोः सकारमिति व्यञ्जनस्येति किम् अकार इकार उकार इति ॥

(१) अत्र पाणिनिनापि वर्णात्कार इत्यनेन रेफं विना व्यञ्जनानां निर्द्देशः कृतः । चकारादितिना स्वरैश्च निर्द्देशो ज्ञातव्यः ॥

## र एफेन च ॥ ३९ ॥

रः रेफस्य एफेन च निर्दिश्यते यथा रेफऽ० स्वरधाविति चशब्दादितिना च यथा यितिरितिलितिविति ॥

## स्वरैरपि ॥ ४० ॥

स्वरैरपि व्यञ्जनानां निर्देशो भवति यथा नु चछयोः शम् तथयोः समिति (१) ॥

## नानुस्वारयमविसर्जनीयजिह्वामूलीयोपध्मानीयाः ॥ ४१ ॥

बच्यंति अं इत्यनुस्वारः तथा कुंखुंगुंघुं इति यमाः तथा अः इति विसर्ज्जनीयः । तथाऽक इति जिह्वामूलीयः । ऽ पइत्युपध्मानीयः एते न कारप्रत्ययेन निर्द्देष्टव्याः यथा अनुस्वारऽ० रोष्मसु मकार इति अनुस्वारस्य स्वशब्देनैव निर्देशः तथा ऊष्मभ्यः पञ्चमेषु यमापत्तिर्द्दोष इति यमस्य स्वशब्देनैवोपादानम् । तथा विसर्ज्जनीयस्य विसर्ज्जनीय इति । तथा जिह्वामूलीयोपध्मानीयौ शाकटायन इति ॥

## दन्त्यस्य मूर्द्धन्यापत्तिर्न्नतिः ॥ ४२ ॥

(१) अपिशब्दादितिना कारेण च ॥

दन्त्यस्य मूर्द्धन्यभावो नतिरुच्यते तद्यथा परिसिञ्चन्ति परिषिञ्चन्ति सञ्ज्ञाकरणे प्रयोजनं स्विति चानताविंत्यादि ॥

## समानस्थानकरणास्यप्रयत्नः सवर्णः ॥ ४३ ॥

समानमेकं स्थानं करणमास्यप्रयत्नश्च यस्य स एवमुच्यते यो यस्य वर्णस्य समानस्थानः समानकरणः समानमुखप्रयत्नः स तस्य सवर्णसञ्ज्ञो भवति । तद्यथा प्र अर्प्पयतु प्रार्प्पयतु तव अयम् तवायठ० सोमः स्रुचि इव स्रुचीव घृतम् अभि इन्धताम् अभीन्धतां मुखे अनु उञ्जेषम् अनूञ्जेषं वाजस्य अनु उज्जयताम् अनूज्जयताम् ऋकारलृकारयोरपि सवर्णदीर्घत्वमेव भवति यद्युदाहरणं छन्दसि लभ्यते सञ्ज्ञाकरणे प्रयोजनं वक्ष्यति । सिठं० सवर्णे दीर्घमिति ॥

## सिमादितोऽष्टौ स्वराणाम् ॥ ४४ ॥

वर्णसमाम्नायस्यादौ अष्टानां स्वराणां सिम् सञ्ज्ञा भवति अष्टाविति विभक्तिव्यत्ययेन षष्ठीबहुवचनं द्रष्टव्यं स्वराणामितिसामानाधिकरण्यात् यथा अआइईउऊ ऋऋृ वर्णसमाम्नाये त्रिमात्रा अपि वक्ष्यन्ते इह संधौ तु तेषां ग्रहणं न संभवति प्रयोजनाभावात् (१) त्रिमा-

(१) आपिशलिमते ऋलृकारयोरविशेषेण दीर्घता महाभाष्ये तु लृकारस्य दीर्घाभावः

त्वात् हि स्वयमेव वक्ष्यति सर्वमग्नाऽइ३ लाजीं३ श्छा-ची३निति त्रिमात्राणि चेत्यादिना सवर्णदीर्घत्वं च सञ्ज्ञाकरणे प्रयोजनम् न च सवर्णदीर्घत्वमुक्तानां प्लुतानां च संभवति अतः प्लुता न गृह्यन्ते । संज्ञाकरणे प्रयोजनं वक्ष्यति सिद्धं० सवर्णे दीर्घमिति ॥

## सन्ध्यक्षरं परम् ॥ ४५ ॥

स्वराणामित्यनुवर्तते स्वराणां यत्परमन्त्यमक्षरं तत्सन्ध्यक्षरसञ्ज्ञं भवति सन्ध्यक्षरमिति जातावेकवचनम् यथा पक्वो यव इति सन्ध्यक्षराणि पराणीत्यर्थः तानि चत्वारि द्विमात्राणि गृह्यन्ते न प्लुतान्यपि प्रयोजनाभावात् प्रयोजनार्थं च सञ्ज्ञापरिभाषाः क्रियन्ते ।·अतो द्विमात्राण्येव गृह्यन्ते । न सर्वाणीति । वर्णसमाम्नाये तु सर्वेषां वर्णानां पाठो युक्तरूप एव तत्र हि एतावन्तो वर्णाः संभवन्तीत्येतदेव ख्याप्यते अतस्तत्र सर्वेषां पाठो युक्तरूप एवेत्यदोषः इह तु कार्यवन्त एवोपदिश्यन्ते । तद्यथा ए ऐ ओ औ सञ्ज्ञायाः प्रयोजनं सन्ध्यक्षरमयवायावमिति ॥

---

प्रयोगाभावात् इति गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचामित्यनेन कृप्रशिखेत्यादौ प्रयोगे सत्वादस्ति वा सूत्रकारमते भाषिकमते च यथोक्तत्रयोऽपि भेदाः सन्ति । अकारैकारौकारर्कारल्कारा अवर्णधारणाः अइउऋऌ एते पञ्चवर्णा अवर्णेन समानधारणा इति शतपथब्राह्मणस्य स्वरसंस्कारप्रतिपादकवक्ष्यमाणपरिशिष्टभाषिकसूत्रोक्तेन ऋकारसावर्ण्यात् ऌकारस्य ऋकारान्तर्भावः ॥

## अकण्ठ्यो भावी ॥ ४६ ॥

स्वराणामित्येव कण्ठ्यौ अकाराकारौ वर्ज्जयित्वा स्वराणां भाविसञ्ज्ञा भवति तद्यथा इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ । सञ्ज्ञाकरणे प्रयोजनं वक्ष्यति भाव्युपधस्वरिद्विसर्ज्जनीय इति ॥

## व्यञ्जनं कादि ॥ ४७ ॥

ककारादि ऊष्मान्तं यद्वर्णजातं तद्व्यञ्जनसञ्ज्ञं भवति किति खिति गिति घिति ङिति इत्यादि अं इत्यनुस्वार एतदन्तम् सञ्ज्ञाकरणे प्रयोजनं व्यञ्जनमर्द्धमात्रेत्यादि ॥

## अनन्तरꣳ संयोगः ॥ ४८ ॥

अनन्तरमव्यवहितं व्यञ्जनं व्यञ्जनेन सह संयोगसञ्ज्ञं भवति तद्यथा पक्वम् किति किति विति अश्वः श्विति श्विति विति सञ्ज्ञाकरणे प्रयोजनं वक्ष्यति स्वरात् संयोगादिर्द्विरुच्यते सर्वत्रेति ॥

## स्पर्शेष्वेव सङ्ख्या ॥ ४९ ॥

ककारादयः पञ्चवर्गाः पञ्चवर्णाः समाम्नाये स्पर्शसञ्ज्ञा उक्ताः तेषु वर्गेषु सङ्ख्या ज्ञातव्या वक्ष्यति असस्थाने मुदि द्वितीयꣳ शौनकस्य पञ्चमे पञ्चम-

मिति परिभाषासूत्रमेतत् ॥

## द्वौद्वौ प्रथमौ जित् ॥ ५० ॥

स्पर्शेष्वेवसङ्ख्येति परिभाषितमेव अतस्तस्याः परिभाषाया इहोपस्थानम् द्वौद्वौ प्रथमौ वर्णौ वर्गे वर्गे जित्सञ्ज्ञौ यथा । क ख च छ ट ठ त थ प फ सञ्ज्ञाकरणे प्रयोजनम् लुङ् मुदि जित्पर इति ॥

## ऊष्माणश्च हवर्ज्जम् ॥ ५१ ॥

ऊष्माणश्च जित्सञ्ज्ञका भवन्ति । हकारं वर्जयित्वा तद्यथा शषसाः चशब्दात् द्वौद्वौ प्रथमौ वर्गे वर्गे क ख च छ ट ठ त थ प फ एते त्रयोदशवर्णा जित्सञ्ज्ञा वेदितव्याः ॥

## मुच्च ॥ ५२ ॥

मुत्सञ्ज्ञकाः शषसा भवन्ति च शब्दाज्जित्सञ्ज्ञकाश्च शषसेष्वेव मुत्सञ्ज्ञा यथा स्यादिति पृथग्योगकरणम् । सञ्ज्ञायाः प्रयोजनं लुङ्मुदि जित्पर इति ॥

## धिशेषः ॥ ५३ ॥

कृतसञ्ज्ञकेतरवचनः शेषशब्दः शेषो यो वर्णराशिः स धिसञ्ज्ञो भवति तद्यथा वर्गाणामुत्तरास्त्रयो यरलवहकाराश्चेति विंशतिवर्णा धिसञ्ज्ञा भवन्ति

सञ्ज्ञाकरणे प्रयोजनम् रेफऌ॰ स्वरधाविति (१) ॥

## द्वितीयचतुर्थाः सोष्माणः ॥ ५४ ॥

द्वितीयाः ख छ ठ थ फाः चतुर्थाः घ झ ढ ध भाः एते दशवर्णाः सोष्मसञ्ज्ञा भवन्ति इह यासां सञ्ज्ञानां शास्त्रे संव्यवहारो नोपलभ्यते पूर्वाचार्य्यसञ्ज्ञास्ता वेदितव्याः शिष्यसंव्यवहारार्थाः शिष्या आभिः संव्यवहरेयुरिति पूर्वाचार्य्यसञ्ज्ञानुकथनमस्मिन् शास्त्रे मङ्गलार्थं च पूर्वाचार्य्यशास्त्रकीर्त्यपरिणाशार्थं वा यद्वा यथा एते वर्णा नित्या एवमेता अपि सञ्ज्ञा नित्या एव एवं च कृत्वा सर्वशास्त्रेष्वेताएव सञ्ज्ञा उपलभ्यन्ते द्वि-

---

(१) आस्यप्रयत्नापरपर्य्यायं चतुर्विधं करणमाह स्पृष्टमसंस्पृष्टं संवृतं विवृतं चेति । स्पृष्टप्रयत्नाः कादिमान्ताः असंस्पृष्टप्रयत्नाः स्वराः तेषां मध्ये ऋऌकारौ ईषत्स्पृष्टौ ज्ञेयौ ऋऌोर्मध्ये भवत्यर्द्धमात्रा रेफऌकारयोः । तस्मादस्पृष्टता वर्ज्या ऋऌकारस्य सम्भवे १ ऋऌवर्णे रेफऌकारौ सऌ॰श्लिष्टावश्रुतिधरावेकवर्णाविति चतुर्थाध्यायस्थवक्ष्यमाणसूत्रेण सूत्रकारज्ञापनात् पाणिनिस्तु ईषन्नेमस्पृष्टे अधिके आह उक्तं च अचोऽस्पृष्टा यणस्त्वीषन्नेमिस्पृष्टाः शलस्तथा । शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः । अनुप्रदानमिति स्वस्थानादिना घोषादि अनुप्रकर्षेण दीयत इति अनुप्रदानतो हेतोर्निबोध जानीहि वर्णानां भेदम् । ञमोऽनुनासिका नादौ नादिनो हझषः स्मृता । ईषन्नादा यण् जशः श्वासिनस्तु खफादयः । ईषच्छ्वासाँश्चरो विद्याद्गोर्धामैतत् प्रचक्षते । अमोऽनुनासिका इति वा पाठः ञम् इति प्रत्याहारः । ञमङणन एत अनुनासिकामनुगताः सानुनासिका इत्यर्थः । अमोऽनुनासिका इति पाठे अम् प्रत्याहारः तन्मध्ये हकाररेफौ न नादिनो हझषः स्मृताः गोर्धाम गोर्वाचः धाम स्थानं एतत् प्रचक्षते शब्दशास्त्रविदः, पाणिनिना च निष्याद्यन्ते यमप्रभृतयः, अमोञम् पाठद्वयात् अमान्त रेफहकारवर्जितानां विकल्पेनानुनासिकत्वम् अमान्तु नित्यं पाणिनीयानां ये स्वरास्त्रयोदशविवारश्वासघोषप्रयत्नास्तेऽत्र जित्सञ्ज्ञाः ये तु हशः विंशतिसम्वारनादघोषप्रयत्नास्ते सञ्ज्ञा वर्गेषु ॥

तीयचतुर्थाः सोष्माणः तथा ककारादीनां स्पर्शसञ्ज्ञा तथा यकारादीनामन्तस्थसंज्ञा आभिः संज्ञाभिर्व्यवहरतां धर्म्मो भवति यद्वा नैव संज्ञा किन्तर्हि वर्णस्वरूपमनेन सूत्रेण कथ्यते ऊष्मा वायुः ऊष्मणा सह वर्त्तन्त इति सोष्माणः अतिशयार्थं वचनं महाप्राणा इत्यर्थः । अत एवैषां संयोगपीडने वायुर्न्निर्गच्छति तन्निर्द्धारयेत् । यथा । दद्ध्ना दकारो धकारप्रकृतिर्यमः नकार इति संयोगः अत्र धकारप्रकृतित्वात् यमस्य पीडने ऊष्मा निष्क्रामति तं सन्धारयेत् तदात्मकत्वात्तस्य वर्णस्याचार्य्योऽपि यमस्य स्फोटनें दोषं वक्ष्यति ऊष्मर्थ्यैः पञ्चमेषु यमापत्तिर्द्दोष इति, स्फोटनं च ककारवर्गे वा स्पर्शादिति (१) ॥

## अमात्रस्वरो ह्रस्वः ॥ ५५ ॥

अकारमात्रस्वरो ह्रस्वसञ्ज्ञो भवति तद्यथा अ इ उ ऋ ऌ सञ्ज्ञाकरणे प्रयोजनं वक्ष्यति अनुस्वारो ह्रस्वपूर्वोऽध्यर्द्धमात्रा पूर्वा चार्द्धमात्रेति ॥

## मात्रा च ॥ ५६ ॥

मात्रा च यत्र श्रूयते तत्र अकारकालः मात्रस्वरः

---

(१) अन्वर्था चेयं सञ्ज्ञा एवं च सति वर्गेषु प्रथमतृतीयपञ्चमानां अङणनमानां यरलवानां चाल्पप्राणरूपमेकप्रयत्नत्वं उक्तं च अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः । युग्माः शलोऽयोगवाहा महाप्राणा इतीरिताः ॥

प्रत्येतव्यः ह्रस्वो मात्रेति पर्यायावित्यर्थः ॥

द्विस्तावान् दीर्घः ॥ ५७ ॥

ह्रस्वात् द्विगुणकालो वर्णो दीर्घसञ्ज्ञो भवति यथा आ ई ऊ ॠ ॡ ए ऐ ओ औ इति सञ्ज्ञाकरणे प्रयोजनं दीर्घार्द्धमात्रा पूर्वा चाध्यर्द्धेति ॥

प्लुतस्त्रिः ॥ ५८ ॥

ह्रस्वत्रिगुणकालः प्लुतसञ्ज्ञो भवतीति यथा आ३ ई३ ऊ३ ॠ३ ॡ३ ए३ ऐ३ ओ३ औ३ सञ्ज्ञाकरणे प्रयोजनं प्लुतमितावित्यादि ॥

व्यञ्जनमर्द्धमात्रा ॥ ५९ ॥

कादीनां व्यञ्जनसञ्ज्ञा कृता व्यञ्जनं कादीति अधुना तस्यार्द्धमात्राकालतोच्यते यथा प्राङ् प्रत्यङ् ङकारावर्द्धमात्रौ ॥

तदर्द्धमणु ॥ ६० ॥

अर्द्धमात्रार्द्धमणुसञ्ज्ञं भवति सञ्ज्ञाकरणे प्रयोजनम् मात्रार्द्धमात्राणुमात्रावर्णापत्तीनामिति (१) ॥

परमाण्वर्द्धाणुमात्रा ॥ ६१ ॥

---

(१) अयस्पिण्डादिसप्तविधपिण्डा याज्ञवल्क्येनोक्ताः तेषां सोदाहरणलक्षणान्यग्रे कथयिष्यन्ते ॥

अर्द्धाणुमात्रा परमाणुसञ्ज्ञं भवति (१) ॥

स्थाने ॥ ६२ ॥

अधिकरणं वर्णानां स्थानशब्देनोच्यते यदित ऊर्ध्वमनुक्रमिष्यामः स्थाने इत्येवं तद्वेदितव्यम् अधिकारसूत्रमेतत् ॥

ह्रस्वग्रहणे दीर्घप्लुतौ प्रतीयात् ॥ ६३ ॥

ह्रस्वस्य वर्णस्य ग्रहणे दीर्घप्लुतावपि वर्णौ ग्रहीतौ द्रष्टव्यौ परिभाषेयं स्थानाधिकारार्था ॥

प्रथमग्रहणे वर्गम् ॥ ६४ ॥

वर्गादौ प्रथमवर्णग्रहणे वर्गं जानीयात् परिभाषेयम् ॥

ऋ॒कौ जिह्वामूले ॥ ६५ ॥

ऋऋृऋ३ इति त्रयः जिह्वामूलीयः कवर्ग इत्येते नव वर्णा जिह्वामूलस्थानाः ॥

इचशेयास्तालौ ॥ ६६ ॥

---

(१) तदतिसूक्ष्मं वाङ्मनसयोरगोचरं ब्रह्मैव तदुक्तं तेनैव । निमेषो मात्राकालः स्याद्विद्युत्कालोऽपि वा परे । अक्षरातुल्ययोगात्तु मतिः स्यात्सोमशर्म्मणः । सूर्य्यरश्मिप्रतीकाशाकणिका यत्र दृश्यते । अणुत्वस्य तु सा मात्रा मात्रा तु चतुराणवी । मानसे चाणवं विद्यात्कण्ठे विद्याद्विराणवम् । त्रिराणवं तु जिह्वाग्रे निःसृतं मात्रिकं विदुरिति ॥

इईई ३ इति त्रयः चवर्गः शकार एकारो यकार-इत्येते एकादशवर्णास्तालुस्थानाः ॥

## षटौ मूर्द्धनि ॥ ६७ ॥

षकारटवर्ग इत्येते षड्वर्णा मूर्द्धन्या द्रष्टव्याः ॥

## रो दन्तमूले ॥ ६८ ॥

रेफो दन्तमूलस्थानः प्रत्येतव्यः ॥

## ऌलसिता दन्ते ॥ ६९ ॥

ऌॡॡ ३ एते त्रयः लकारः सकारस्तवर्ग इत्येते दशवर्णा दन्त्याः ॥

## उवोपोपध्मा ओष्ठे ॥ ७० ॥

उऊऊ ३ एते त्रयः वकार ओकार उपध्मानीयः पवर्ग एते एकादशवर्णा औष्ठ्याः ॥

## अहविसर्ज्जनीयाः कण्ठे ॥ ७१ ॥

अकारो मात्रिको द्विमात्रिकस्त्रिमात्रिक इत्येते त्रयः हकारविसर्जनीयौ इत्येते पञ्चवर्णाः कण्ठ्याः प्रत्येतव्याः (१) ॥

---

(१) सँय्युक्तस्तु हकार औरसः, हकारं पञ्चमैर्य्युक्तमन्तस्थाभिश्च सँय्युतम् । औरस्यं तं विजानीयात्कण्ठ्यमाहुरसँय्युतामिति याज्ञवल्क्येनैवोक्तम् ॥

## सवर्णवच्च ॥ ७२ ॥

अकुहविसर्जनीयाः कण्ठे इति अकारस्य मात्रिकस्य द्विमात्रिकस्य त्रिमात्रिकस्य च कण्ठस्थानता उक्ता यथा कण्ठ्या मध्येनेति समानकरणता बयास्यामपि आस्यप्रयत्नस्तु भिद्यते कोऽसावास्यप्रयत्नो नाम संवृतता विवृतता च अस्पृष्टता स्पृष्टता च ईषत्स्पृष्टता अर्द्धस्पृष्टता च इत्यास्यप्रयत्नः तद्यथा संवृतास्यप्रयत्न अकारः विवृतास्यप्रयत्ना इतरे(१) स्वराः यथा अस्पृष्टास्यप्रयत्नाः स्वराः(२)स्पृष्टास्यप्रयत्नाः स्पर्शाः तथा ईषत्स्पृष्टास्यप्रयत्ना अन्तस्थाः अर्द्धस्पृष्टास्यप्रयत्ना ऊष्माणः अनुस्वारश्च अयमास्यप्रयत्नः शिक्षाविङ्क्तिरुक्त इह गृह्यते अतोऽकारस्य मात्रिकस्य संवृतास्यप्रयत्नस्य इतरयोश्च विवृतास्यप्रयत्नयोर्द्विमात्रिकत्रिमात्रिकयोः सह सावर्ण्यं तुल्यं न सम्भवतीति तदर्थमिदमारभ्यते सवर्णवच्च कार्य्यं भवति सवर्णदीर्घत्वं भवतीत्यर्थः तद्यथा सोमऽ आभूयो भर, मात्वा अग्निः मात्वाग्निर्ध्वनयीत् एवमन्यत्रापि सवर्णवत्कार्य्यं द्रष्टव्यम् ॥

## ऐकारौकारयोः कण्ठ्या पूर्वामात्रा तात्वोष्ठयोरुत्तरा ॥ ७३ ॥

(१) अत्रेतरशब्देन दीर्घाकारप्लुताकारयोर्ग्रहणम् ॥

(२) इकाराद्यौकारान्ताः ह्रस्वदीर्घप्लुतभेदयुताः ॥

ऐकारस्य औकारस्य च कण्ठ्यापूर्वामात्रा अकारमात्रा उभयोरपि पूर्वा उत्तरा प्रथमस्य तालुस्थाना उत्तरा पूर्व एकार इत्यर्थः । तद्यथा अए ऐ इति द्वितीयस्योत्तरा ओष्ठस्थाना द्वितीयस्योत्तरा ओकार इत्यर्थः तद्यथा अओ औ इति। अत्र केचिदाहुः अकारस्यार्द्धमात्रा एकारस्याध्यर्द्धा ऐकारे अकारस्यार्द्धमात्रा ओकारस्याध्यर्द्धा औकारे इति तथा चोक्तम् अर्द्धमात्रा तु कण्ठ्यस्य ऐकारौकारयोर्भवेत् इति० अनेनैव क्रमेण एकारौकारौ व्याख्यातौ ॥

यमानुस्वारनासिक्यानां नासिके ॥ ७४ ॥

चत्वारो यमाः अनुस्वारनासिक्यौ चेति षड्वर्णा नासिकास्थाना इति (१) ॥

मुखनासिकाकरणोऽनुनासिकः ॥ ७५ ॥

मुखसहितया नासिकया क्रियते इति मुखनासिकाकरणः मुखनासिकाकरणो वर्णोऽनुनासिकसञ्ज्ञो भवति जातावेकवचनम् स्वराणामयं वैकल्पिको धर्मः

---

(१) कुं खुं गुं घुं इति चत्वारो यमाः । अम् इत्यनुस्वारः । हुँ इति नासिक्यः । एतेषां सूत्राणि अष्टमाऽध्याये वक्ष्यन्ते ॥

अन्तस्थानां रेफवर्ज्जितानां च वाचनिकश्चायं धर्मः तद्यथा अनुनासिकमुपधा प्रागन्तस्थायाः यथा मह्ाँ २॥ ऽइन्द्रः उन्नयामि स्वाँ २ ॥ ऽअहम् ये वा वनस्पतीँ ॥ रनु अग्ने क्रत्वा क्रतूँ १॥ रनु अन्तस्थासु भवति वक्ष्यति अन्तस्थामन्तस्थास्वनुनासिकां परसस्थानाम् (१) सँय्यौमि सँव्वपामि तँल्लोकम्पुण्यं प्रज्ञेषमिति इत उत्तरं करणाधिकारो भविष्यति ॥

## दन्त्या जिह्वाग्रकरणाः ॥ ७६ ॥

दन्त्या जिह्वाग्रेण क्रियन्ते तद्यथा तथेति ॥

## रश्च ॥ ७७ ॥

रेफश्च जिह्वाग्रेण क्रियते अन्यस्थानोऽपि ॥

## मूर्द्धन्याः प्रतिवेष्ट्याग्रम् ॥ ७८ ॥

मूर्द्धन्याः षकारटवर्गौ एतौ प्रतिवेष्ट्य जिह्वाग्रेण क्रियन्ते (२) ॥

## तालुस्थाना मध्येन ॥ ७९ ॥

तालुस्थाना इचशेया एते जिह्वामध्येन क्रियन्ते (३) ॥

---

(१) परस्परसंस्थानामिति 'घ' पुस्तकपाठः ।

(२) अभियुक्ता जिह्वामूलीयकवर्गीयप्रतिरूपकस्थानकरणापरित्यागेन नेमस्पृष्टं षकारं परम्परया पठन्ति तदप्याविरोधीति । सुष्ठु तृतीयवर्गसँय्योगे तु स्पृष्टप्रयत्नस्य प्राबल्यात् नेमस्पृष्टतानुपलब्धेः स्वरे पर एव तथेति ॥

(३) इकार अस्पृष्टप्रयत्नः, चवर्गः स्पृष्टप्रयत्नः, शकार अर्द्धस्पृष्टप्रयत्नः, एकारोऽ-

## समानस्थानकरणा नासिक्यौष्ठ्याः ॥ ८० ॥

ङँकारो नासिक्यः स च नासिकास्थानः उवो प्रोपध्मा ओष्ठ इत्योष्ठस्थानाः एतेषां यदेव स्थानं तदेव करणम् ॥

## वो दन्ताग्रैः ॥ ८१ ॥

वकारस्तु ओष्ठोपि दन्ताग्रैः क्रियते (१) ॥

---

स्पृष्टः, यकार ईषत्स्पृष्टः, पादान्तादौ पादादौ पदादौ तु स्पृष्ट एव, तदुक्तं याज्ञवल्क्येन यकारवकारावधिकृत्य, पादाद्यन्तं पदाद्यन्तं तथाऽवग्रहकालिकम् । संस्पृष्टं तं विजानीयात् तस्मिन्काले तु कारयेत् । पदाद्यन्तमिति द्वे पदे यकारं वकारं च पादाद्यभूतं पदाद्यभूतं अवग्रहकालिकं संस्पृष्टं विजानीयात् तस्मिन्काले अवग्रहकाले तु संस्पृष्टप्रयत्नं कारयेत् । न संहिताकाले, पादादौ यथा यज्ञेन, पदादौ यथा यज्ञम् तच्च. किम्, अयजन्त, सँय्योगादिति आदेरनुवृत्तौ परन्तु रेफहकाराभ्यामित्यादिभूतस्यैव यः, नृपाय्यम् सूर्य्यः सिᳪह्यासि । तच्च किम् । अग्निर्ज्योतिः, दुश्च्यवनः, ऊवध्यम्, पादान्तस्थं पदान्तस्थं तथाऽवग्रहकालिकम् । ईषत्स्पृष्टं विजानीयात्तस्मिन् काले तु कारयेत् । उपसर्गात्परो यस्तु पदादिरपि दृश्यते । ईषत्स्पृष्टो यथा वियत् प्रयत्नं तु परं भवेत् । पादादौ च पदादौ च सँय्योगाऽवग्रहेषु च । यः शब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः । अतः सम्प्रदायविद एवं विधे यकारे स्पृष्टप्रयत्नज्ञानाय मध्ये बिन्दुं प्रक्षिपन्ति स्पृष्टप्रयत्नं पठन्ति च ॥

(१) एवं वकारो दन्त्योष्ठ्यः स च त्रिविधः, पदान्ते पदमध्ये च वकारो दृश्यते यदि । संहितायां लघुर्ज्ञेयो ह्यन्यत्रापि लघूतरः । वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः । पदमिति सर्वत्रानुवर्त्तनीयम् छन्दोऽनुरोधेन, व्वोढव इति वोढवे, दीर्घत्वं पदादिगुरुः, पदमध्ये लघुः, पदान्ते च वकारो लघूतरः, गुरुरिति संस्पृष्टप्रयत्न उच्चारयितव्यः, पादाद्यन्तं पदाद्यन्तं तथाऽवग्रहकालिकम् । संस्पृष्टं तं विजानीयात्तस्मिन् काले तु

## नासिकामूलेन यमाः ॥ ८२ ॥

यमाश्चत्वारो नासिकामूलेन क्रियन्ते यथा यक्ष्मः याँश्च चक्रुः इति ॥

## जिह्वामूलीयानुस्वारा हनुमूलेन ॥ ८३ ॥

जिह्वामूलस्थाना अनुस्वारश्च हनुमूलेन क्रियते यथा ऋक्सामयोः अꣳशुना ते अꣳशुः ॥

## कण्ठ्या मध्येन ॥ ८४ ॥

कण्ठ्या वर्णा मध्येन हन्वोरेव क्रियन्ते यथा अह इति ॥

## प्रथमोत्तमाः पदान्तीया अचञौ ॥ ८५ ॥

एवं तावदधस्तनेन वर्णानां स्थानानि करणानि चोक्तानि आस्यप्रयत्नस्तु शिक्षान्तराद् गृह्यते सवर्णसञ्ज्ञाङ्गभूतत्वात् अधुना पदान्तीयवर्णनिरूपणायाह प्रथमोत्तमाः पदान्तीया भवन्ति चकारञकारौ वर्ज्जयित्वा प्रथमा यथा प्राक् अपाक् विराट् सम्राट् यत् तत् त्रिष्टुप् अनुष्टुप् उत्तमा यथा प्राङ् प्रत्यङ् वीन् समुद्रान्

---

कारयेत् । इति याज्ञवल्क्येनोक्तत्वात् अन्यत्र तु ईषत्स्पृष्टः, पादान्तस्थं पदान्तस्थं तथाऽवग्रहकालिकम् । ईषत्स्पृष्टं विजानीयादिति चोक्तत्वात्, व्वसोः पवित्रम्, व्वायवस्त्थ, अत्रादिर्गुरुः, द्वितीयो लघुः, देवो वः, अत्रान्त्यो लघूतरः, चित्रश्रवस्तममिति चित्रश्रवः तमम्, अत्र संहितायामपि ॥

तम् यज्ञम् ॥

## विसर्जनीयः ॥ ८६ ॥

विसर्जनीयः पदान्तीयो भवति यथा अग्निः धर्मः ॥

## स्वराश्च ऌकारवर्जम् ॥ ८७ ॥

स्वराश्च पदान्तीया भवन्ति ऌकारं वर्जयित्वा यथा दीप्याय नीप्याय अश्विना मित्रावरुणा स्रुचि इन्द्राग्नी मधु अनु वृषण्वसू चमू द्वे विरूपे पृथिव्यै भूम्यै इन्द्रो अश्विनौ एतानि स्वरान्तान्युदाहरणानि ॥

## णकारऋकारावग्रहे ॥ ८८ ॥

प्रथमोत्तमाः पदान्तीया इत्यनेन णकारः पदान्तीयः प्राप्तः स्वराश्च ऌकारवर्जमित्यनेन ऋकारश्च पदान्तीयः प्राप्तः अतस्तावुभौ पदान्तीयावापद्येते अवग्रह एव स्याप्येते यथा पूषण्वान् वृषण्वसू पितृसदनाः पितृसदनम् (१) ॥

## अनुनासिकाश्चोत्तमाः॥ ८९॥

वर्गोत्तमाः ङञणनमा अनुनासिका भवन्ति। चकारात्स्वस्थानाद्यपरित्यागद्वारेण नासिकास्थानं द्वि-

(१) समासेऽवग्रहो ह्रस्वसमकाल इति पञ्चमाध्यायस्थादिमसूत्रेणाऽवग्रहोऽभिहितः तस्मिन्नवग्रहकाले अवग्रहः पदान्तवदित्यनेन शास्त्रेण पदकालीनणकारऋकारघटितोदाहरणचतुष्टये पदान्तत्वं बोध्यम् ॥

तीयमेषामित्यर्थः । वर्णस्वरूपज्ञापनार्थमिदम् । सञ्ज्ञार्थमित्यपरे ॥

## स्पर्शान्तस्य स्थानकरणविमोक्षः ॥ ९० ॥

स्पर्शान्तस्य पदस्य स्थानकरणविमोक्षः कर्त्तव्यः अन्येन प्रयत्नेनान्यत्पदमारब्धव्यम् अन्यथा पदादेर्द्वित्वं भवति तद्यथा तत् नः, तन्नो मित्रो वरुणः, सम् यौमि, सँय्यौमीदमग्ने ॥

## अवसाने च ॥९१॥

समाप्तौ च अर्द्धर्चादौ स्वरान्तानामपि पदानां स्थानकरणविमोक्षः कर्त्तव्यः यथा संमधुमतीर्म्मधुमतीभिः पृच्यन्ताम् शुक्रन्दुदुह्रेऽअह्नयः ॥

## प्रगृह्यम् ॥ ९२ ॥

प्रगृह्यमित्ययमधिकारः । यदित ऊर्द्ध्वमनुक्रमिष्यामः प्रगृह्यमिति तद्वेदितव्यम् प्रगृह्यसञ्ज्ञायाः प्रयोजनं प्रगृह्यं स्वरे इत्यादि ॥

## एकारेकारोकारा द्विवचनान्ताः॥९३॥

एकार ईकार ऊकार एते द्विवचनप्रतिपादकाः सन्तः प्रगृह्यसञ्ज्ञा भवन्ति यथा एकारस्य भवति द्वे इति

धीर्षे इति यथा ईकारान्तस्य भवति उर्वी इति पृथ्वीइ-
इति यथा ऊकारान्तस्य भवति अध्वर्यू इति बाहू इति ॥

## ओकारश्च पदान्तेऽनवग्रहः ॥ ९४ ॥

ओकारश्च पदान्ते वर्त्तमानोऽवग्रहवर्जितः प्रगृह्य-
सञ्ज्ञो भवति यथा अध्वर्योऽअद्रिभिः चित्रभानो इति
इन्द्रायाहि चित्रभानो सुताः अनवग्रह इति किम् गो-
व्यच्छमिति गो। व्यच्छम्। गोघातमिति गो। घातम् (१)

## उकारोऽपृक्तः ॥ ९५ ॥

उकारोऽपृक्तः प्रगृह्यसञ्ज्ञो भवति । उकारोऽपृक्तो
दीर्घमनुनासिकमिति वक्ष्यति एतेनेत्थं रूपं भवति
यथा ऊँ, मन्वेतवाउ नवाउऽएतत् अपृक्त इति किम्
नु इन्द्र योजान्विन्द्रते ॥

## चमू अस्मे त्वे ॥ ९६ ॥

चमू अस्मे त्वे एतानि पदानि प्रगृह्यसञ्ज्ञकानि भ-
वन्ति यथा चमू इति चमू सोममिन्द्रचमूसुतम् अस्मेइ-
त्यस्मे इन्द्रोऽअस्मेऽआरात् त्वेइति त्वे बन्धुस्त्वे रायः ॥

## मे उदात्तम् ॥ ९७ ॥

---

(१) ऋग्यजुस्सौत्रातिरिक्तोऽयमारम्भः । अवग्रहइति किम् । ३४।२३ गविष्टाविति गो । इष्टौ । अवग्रहत्वादवादेशः ॥ अत्राङ्कलेखनस्यायमाशयः पूर्वाङ्केन शुक्लयजुस्संहिताध्यायपरिचयः द्वितीयाङ्केन मन्त्रो ज्ञातव्य एवं सर्वत्रोह्यम् ॥

मे इत्येतत्पदमुदात्तं चेत्प्रगृह्यसञ्ज्ञं भवति यथा मे इति मे, मे रायो मा व्ययम् उदात्त इति किं इमम्मे वरुण ॥

## अमी पदम् ॥९८॥

अमी इत्येतत्पदं चेत्प्रगृह्यसञ्ज्ञं भवति यथा अमी-इत्यमी, एष वोऽमी राजा, ये वामी रोचने दिवः, पदमिति किम् पदावयवस्य माभूत् अमीषाञ्चित्तम् ॥

## स्वरोऽक्षरम् ॥ ९९ ॥

स्वरोऽक्षरसञ्ज्ञो भवति यथा अइति इइति अक्षरसञ्ज्ञायाः प्रयोजनम् प्रागुवर्णादक्षराणामेकीभाव इति वक्ष्यति। तथा चोक्तम्, सव्यञ्जनः सानुस्वारः शुद्धो वापि स्वरोऽक्षरमिति ॥

## सहाद्यैर्व्यञ्जनैः ॥ १०० ॥

आद्यैर्व्यञ्जनैः सहितः स्वरोऽक्षरं प्रत्येतव्यम् यथा मो ओकारसहितोऽक्षरं प्रत्येतव्यम् यथा इअन्नः इन्नः उकारो दकाररेफसहितोऽक्षरम् ॥

## उत्तरैश्चावसितैः ॥ १०१ ॥

आद्यैर्व्यञ्जनैः उत्तरैश्चावसानगतैः सहितः स्वरोऽक्षरम् यथा वाक् वकारककारसहित आकारोऽक्षरम्

प्राङ् पकाररेफङकारसहित आकारोऽक्षरम् एव-
न्तावद्यमेकः स्वरो भवति तदधस्तनान्युपरितनानि च
व्यञ्जनानि तदङ्गानि भवन्तीत्येतत्प्रतिपादितम्, अधु-
ना स्वरयोर्मध्ये द्विप्रभृतीनां व्यञ्जनानामङ्गत्वनिरूप-
णायाह ॥

## सँय्योगादिः पूर्वस्य ॥ १०२ ॥

सँय्योगादिभूतो वर्णः पूर्वस्य स्वरस्याङ्गं भवति यथा
अभ्भ्वः द्वौ भकारौ वकारश्च सँय्योगः तत्र सँय्योगादिः
पूर्वस्येति कृत्वा पूर्वः भकारः पूर्वस्य स्वरस्याङ्गम् उत्त-
रभकारवकारावुत्तरस्य स्वरस्याङ्गम् यथा ह्व्व्रम् द्वौ
वकारौ यकारश्च सँय्योगः तत्रैको वकारः सँय्योगादिः
पूर्वस्येति कृत्वा पूर्वस्याङ्गम् वकारयकारावुत्तरस्य ॥

## यमश्च ॥ १०३ ॥

यमः पूर्वस्याङ्गं भवति चशब्दात्पूर्ववर्णसहितः यथा
रुक्क्मम् ककारद्वययममकाराः सँय्योगः तत्र कका-
रयमौ पूर्वस्य मकार उत्तरस्य ॥

## क्रमजश्च ॥ १०४ ॥

क्रमाज्जातं क्रमजम् यत्सँय्योगादेः परस्य वर्णस्य
द्विरुक्तया जायते तत् क्रमज मित्युच्यते यथा पार्ष्भ्व्र्यम्
रेफो द्वौ भकारौ वकारो यकारश्च सँय्योगः तत्र रेफः

सँय्योगादिः क्रमजश्च प्रथमः षकारः पूर्वाङ्गम्, द्वितीयः षकारो वकारो यकारश्चोत्तराङ्गम् व्यष्य्याय रेफो द्वौ षकारौ यकारश्च सँय्योगः तत्र रेफः सँय्योगादिः पूर्वषकारः क्रमज एतौ पूर्वाङ्गम् अपरः षकारो यकारश्चोत्तराङ्गम् ॥

## तस्माच्चोत्तरꣳ स्पर्शे ॥ १०५ ॥

तस्मात् क्रमजाद्यदुत्तरं व्यञ्जनं तत्पूर्वाङ्गं भवति स्पर्शे परभूते यथा पार्ण्ग्रा रेफषकारौ द्वौ णकारौ यकारश्च सँय्योगः तत्र रेफः संयोगादिरिति कृत्वा षकारः क्रमजमिति कृत्वा तस्माच्चोत्तरꣳ स्पर्शे इति कृत्वा पूर्वणकारश्च एते पूर्वाङ्गम्, द्वितीयणकारो यकारश्चोत्तरस्य स्वरस्याङ्गम् ॥

## अवसितं च ॥ १०६ ॥

अवसानगतं पूर्वाङ्गं भवति यथा वार्क् ककारोऽवसितः, ऊर्क् अत्र रेफककारयोः संयोगः रेफः संयोगादिः ककारोऽवसितः एतौ पूर्वस्य स्वरस्याङ्गम्, पूर्वाङ्गपराङ्गचिन्तायाः प्रयोजनमाह ॥

## व्यञ्जनꣳ स्वरेण सस्वरम् ॥ १०७ ॥

व्यञ्जनं यद्यस्य स्वरस्याङ्गं तत्तेनैव स्वरेण समानस्वरम्भवति अधस्तनान्येवोदाहरणानि तथा चोक्तम् स्व-

र उच्चः स्वरो नीचः स्वरः स्वरित एव च, स्वरप्रधानं (१) त्रैस्वर्यं व्यञ्जनं तेन सस्वरमिति १ अथ शिक्षा त्रिस्थिता इत्युपक्रम्य उरःकण्ठभ्रूमध्यानि प्रातःसवनमाध्यन्दिनतृतीयसवनेषु यथा क्रमं स्थानानि भवन्तीति प्रतिपादितम् तत एकैकस्मिन्स्थाने वर्णेषु उच्चार्य्यमाणेषु त्रयो विकाराः शरीरस्य भवन्ति पर्य्यायेण ते प्रतिपादिता एव आयाममार्द्दवाभिघाता इत्यनेन सूत्रेण, अधुना तेषु शरीरविकारेषु सत्सु ये स्वरा निष्पद्यन्ते तन्निरूपणायाह ॥

## उच्चैरुदात्तः ॥१०८॥

आयामेनोर्द्ध्वगमनेन गात्राणां यः स्वरो निष्पद्यते स उदात्तसञ्ज्ञो भवति यथा (२) अग्ना३इ (३) ला-जी३न् उदात्तत्वानुदात्त इत्येवमादयः ॥

## नीचैरनुदात्तः ॥ १०९ ॥

नीचैर्मार्द्दवेणाधोगमनेन गात्राणां यः स्वरो नि-ष्पद्यते सोऽनुदात्तसञ्ज्ञो भवति (४) यथा आर्षेयऽ ऋ-षीणाम् अनुदात्तप्रदेशाः उदात्तानुदात्तर्ठ० स्वरित-मित्येवमादयः ॥

(१) स्वरप्रधाने इति 'घ' पुस्तकपाठः ॥

(२) ८ । १० ॥

(३) २२ । ७ ॥

(४) २१ । ६१ ॥

## उभयवान्त्स्वरितः ॥११०॥

उदात्तस्योर्द्ध्वगमनं गात्राणां प्रयत्न अनुदात्तस्याधो गमनं गात्राणां प्रयत्न आभ्यां प्रयत्नाभ्यां समाहारीभूताभ्यां यः स्वर उच्चार्य्यते स स्वरितसञ्ज्ञो भवति यथा (१) धान्यमसि,(२) वैष्णव्यौ स्थः (३) ॥

## एकपदे नीचपूर्वः सयवो जात्यः ॥१११॥

एकस्मिन् पदे नीचपूर्वोऽनुदात्तपूर्वो यकारेण वकारेण सहितो जात्यः स्वरः प्रत्येतव्यः नीचपूर्व इति सम्भवद्विशेषणम् । अपूर्वोऽपि भवति नीचपूर्वो यथा (४) कन्या इव (५) धान्यमसि । अपूर्वो (६) यथा स्वर्हेवेषु (७) ॥

---

(१) १ । २० ॥

(२) १ । १२ ॥

(३) अष्टानां स्वरितस्वराणां भेदो याज्ञवल्क्येनापि दर्शितः यथा अष्टौ स्वरान् प्रवक्ष्यामि तेषामेव च लक्षणम् । जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टश्च तथाऽपरः । तैरो व्यञ्जनसञ्ज्ञश्च तथा तैरो विरामकः । पादवृत्तो भवेत्तद्वत्ताथाभाव्य इति स्वराः ।

(४) १७ । ८७ ॥

(५) १ । २० ॥

(६) १८ । ६४ ॥

(७) एकपदे नीचपूर्वः सयवो जात्य इष्यते । अपूर्वोऽपि परस्तद्वदान्वं कन्या स्वरित्यपि अमुमेवार्थं नारदोऽप्युक्तवान् स्वशिक्षायाम् ॥

## उदात्तादयः परे सप्त ॥११२॥

उदात्तादयः परे सप्त स्वराः प्रत्येतव्या यथा अभिनिहित,क्षैप्र,प्रश्लिष्ट,तैरोव्यञ्जन,तैरोविराम,पादवृत्त,ताथाभाव्याः (१) ॥

## त्रयो नीचस्वरपराः ॥११३॥

त्रयो नीचस्वरपरा (२) ज्ञेयाः अभिनिहित,क्षैप्र,-प्रश्लिष्टाः ॥

## एदोद्भ्यामकारो लुगभि-निहितः ॥ ११४ ॥

एकारौकाराभ्यामुदात्ताभ्यामकारोऽनुदात्तो यत्र लुक् लुप्यते तत्राभिनिहितः स्वरो भवति यथा एकारस्य भवति, (३) ते अप्सरसाम् तेऽप्सरसाम्, (४) ते अवन्तु तेवन्त्वस्मान् ओकारस्य भवति यथा (५) वेदः असि वेदोसि, (६) तुथः असि तुथोऽसि (७) ॥

(१) परे वक्ष्यमाणाः स्वरितभेदा उदात्तादय उदात्त आदौ येषां स्वराणामिति ॥

(२) अनुदात्तस्वरपरा इति ॥

(३) २४ । ३७ ॥

(४) १९ । ५८ ॥

(५) २ । २१ ॥

(६) ५ । ३१ ॥

(७) ए ओ आभ्यामुदात्ताभ्यामकारो रिफितश्चयः । अकारो लुप्यते यत्र तं

## युवर्णौ यवौ क्षैप्रः ॥ ११५ ॥

इस्व उस्व यू युवर्णौ उदात्तावनुदात्तस्वरोदयौ यकारवकाराभ्यां यथासङ्ख्येन युक्तौ यदा तदा क्षैप्रसंज्ञः स्वरो भवति इवर्णस्य यथा (१) त्रि अम्बकम् त्र्यम्बकं यजामहे, (२) वाजी अर्वन् आशुर्भव वाज्यर्वन् उवर्णस्य यथा (३) नु इन्द्र योजान्विन्द्र ते हरी, (४) हु अन्तः ह्वन्तः सर्प्पिः (५) ॥

## इवर्ण उभयतो ह्रस्वः प्रश्लिष्टः ॥ ११६ ॥

पूर्वो ह्रस्व इकार उदात्तः परश्च ह्रस्व इकारोऽनुदात्तस्तयोः परस्परप्रश्लिष्टे प्रश्लिष्टः स्वरो भवति यथा (६) अभि इन्धताम् अभीन्धताम्, (७) स्रुचि इव स्रु-

---

चाभिनिहितं विदुरिति तौ चेदुदात्तावनुदात्ते स्वरिताविति चतुर्थाध्यायस्थसूत्रेण स्वरितो भवति ॥

(१) ३ । ६० ॥

(२) ११ । ४४ ॥

(३) ३ । ५१ ॥

(४) ११ । ७० ॥

(५) इ उ वर्णौ यदोदात्तावापद्येते यवौ क्वचित् । अनुदात्ते परे नित्यं विद्यात् क्षैप्रस्य लक्षणमिति । उदात्तस्यान्तस्थीभावे परमनुदात्तं स्वरितमिति तदध्यायस्थशास्त्रेण च स्वरितो विहितः ॥

(६) ११ । ६१ ॥

(७) २० । ७० ॥

च्वीव घृतम् (१) ॥

## स्वरो व्यञ्जनयुतस्तैरो व्यञ्जनः ॥ ११७ ॥

उदात्तात्पूर्वस्मात्परो यः स्वरो व्यञ्जनयुतः स तैरोव्यञ्जनसञ्ज्ञकः स्वरो भवति यथा (२) ईडे रन्ते हव्ये काम्ये (३) ॥

## उदवग्रहस्तैरो विरामः ॥ ११८ ॥

उदात्तावग्रहस्तैरो विरामसञ्ज्ञकः स्वरो भवति अयं च समस्तपदेषु भवति अवग्रहवचनात् अवग्रहाभावे तु तैरोव्यञ्जन एव यथा (४) गोपताविति गो । पतौ (५) यज्ञपतिमिति यज्ञ । पतिम् (६) ॥

---

(१) इकारो दृश्यते यत्र इकारेण च संयुतः। उदात्तश्चानुदात्तेन प्रश्लिष्टो भवति स्वर इति। इवर्णमुभयतो ह्रस्वमुदात्तपूर्वमनुदात्तं स्वरितमित्यनेनापि तदध्यायस्थेनैव सूत्रेण स्वरितः स्वरो भवति ॥

(२) ८। ४३ ॥

(३) उदात्तपूर्वं यत्किञ्चिद्व्यञ्जनेन युतं पदम्। एष सर्वबहुस्वारस्तैरो व्यञ्जन उच्यते इति ॥

(४) १। १ ॥

(५) ६।११॥ यस्य यकारस्याधो भागे विन्दुरस्ति तस्य जकारोच्चारणमिति वक्ष्यमाणप्रतिज्ञापरिशिष्टसूत्रभाष्यकारेण यकारस्य मध्ये विन्दुप्रक्षेपोऽभिहितः परन्तु तन्मध्ये प्रक्षेपे सति षकारोच्चारणभ्रान्तिस्तस्मात्तदधो भागे विन्दुचिह्नं विहितम् ॥

(६) अवग्रहात्परो यस्तु स्वरितः स्यादनन्तरम्। तैरो विरामं तं विद्यादुदात्तो य-

## विवृत्तिलक्षणः पादवृत्तः ॥११९॥

स्वरयोरन्तरयोरन्तरं विवृत्तिरुच्यते तया लक्ष्यत इति विवृत्तिलक्षणः स पादवृत्तसञ्ज्ञः स्वरो भवति विवृत्त्या व्यवहित इत्यर्थः । यथा (१) ध्रुवा ऽअसदनृतस्य (२) का ईम् काऽईमरे पिशङ्गिला (३) ॥

## उदाद्यन्तो(४)न्यवग्रहस्ताथा-

## भाव्यः ॥१२०॥

उदात्तादिरुदात्तान्तो नीचावग्रहस्ताथाभाव्यसञ्ज्ञः स्वरो भवति यथा (५) तनूनप्त्रऽइति तनू । नप्त्रे- (६) तनूनपादिति तनू । नपात् अयं तु स्वरितानां मध्ये पठ्यते नत्विह माध्यन्दिनानां स्वरित उपलभ्यते

व्यवग्रहः इति । उदात्ताश्चानुदात्त (७) स्वरितमिति चतुर्थाध्यायस्थेनैव शास्त्रेणापि स्वरितो विहितः ॥

(१) २ । ६ ॥

(२) २३ । ५५ ॥

(३) स्वरे च स्वरिते चैव विवृत्तिर्यत्र दृश्यते । पादवृत्तो भवेत्स्वारो ष्विनऽइन्द्रेति निदर्शनमिति । स्वरयोरन्तरे काले विवृत्तिर्यत्र दृश्यते । स स्वारः पादवृत्तः स्यात्काऽईमिति निदर्शनमिति ॥

(४) उदात्ताद्यन्त इति 'घ, पुस्तकपाठः ॥

(५) ५ । ५ ॥

(६) २१ । १० । अयं दशमाङ्कः पदपाठादवगन्तव्यः कुतः वेष्टनस्य पदपाठे सद्भावात् ॥

उदात्तानुदात्तौ तु पृथग्भूतावुपलभ्येते स्वरितश्चोदात्तानुदात्तयोरेकीभावे सति तस्मिँश्च तिर्य्यग्गमनं गात्राणां भवति न च तदिह किञ्चिदुपलभ्यते अतो माध्यन्दिनानां पदकाले ताथाभाव्यसञ्ज्ञकः कम्पो (१) भवति तथा चोक्तमौञ्जिहायनकैर्माध्यन्दिनमतानुसारिभिः । अवग्रहो यदा नीच उच्चयोर्म्मध्यतः क्वचित् । ताथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम्, यस्तु ताथाभाव्यस्य स्वरितानाम्मध्ये पाठः अयमन्येषामाचार्य्याणां मतेन तेषां हि मतेन तनूशब्दः संहितावद्भवति अतोऽसौ स्वरितो भवति तदभिप्रायेण स्वरितानां मध्ये पाठः (२) अयमपि चोपरिष्टाद्वक्ष्यति, निहितमुदात्तस्वरितपरमनवग्रहे, स्वरितस्य चोत्तरो देशः प्रणिहन्यत इति तदभिप्रायेण वक्ष्यति; एवमुदात्तानुदात्तस्वरितलक्षणविधानानन्तरं हस्तलक्षणमाह ॥

## हस्तेन ते ॥१२१॥

अनेन प्रकारेण हस्तेन ते स्वराः प्रदृश्यन्ते तत्रोदात्ते ऊर्ध्वगमनं हस्तस्य अनुदात्तेऽधोगमनं हस्तस्य एतत्स-

---

(१) कम्पो नाम नीचत्वमिति ॥

(२) माध्यन्दिनविरोधी स्यात्ताथाभाव्यस्तु यः स्वरः । भिन्नौ यतोऽत्र दृश्येते तावुदात्तानुदात्तकौ । तस्मान्माध्यन्दिनीयानां पदे कम्पो विधीयते । संहिताकाले विरोधः पदपाठे तु भवत्येवेति ॥

वैषामाचार्य्याणां मतेन स्थितं, (१) स्वरिते तु विप्रतिपद्यन्ते तत्प्रकाशनार्थमिदमाह ॥

चत्वार स्तिर्य्यक्स्वरिताः ॥१२२॥

(१) हस्तचालनलक्षणं याज्ञवल्क्येनोक्तम् । हस्तौ सुसँय्यतौ धार्य्यौ जान्वोरुपरि संस्थितौ । गुरोरनुमतिं कृत्वा पठन्नान्यमतिर्भवेत् । १ ऊरुभागे तृतीये तु करन्यस्याथ दक्षिणम् । प्रसन्नमानसो भूत्वा किञ्चिन्नम्रमधो मुखः २ कूर्मोऽङ्गानीव संहृत्य हस्तदृष्टिर्दृढं मनः । स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद् बुधः ३ नाभ्याहन्यान्न निर्हन्यान्न गायेन्न च कम्पयेत् । यथादावुच्चरेद्वर्णांस्तथैवैतान समापयेत् ४ निवेश्य दृष्टिं हस्ताग्रे शास्त्रार्थमनुचिन्तयन् । सम्यगुच्चारयेद्वर्णान् हस्तेन च मुखेन च ५ स्वरश्चैव तु हस्तश्च द्वावेतौ युगपत् स्थितौ । हस्ताद्भ्रष्टः स्वराद्भ्रष्टो न वेदफलमश्नुते ६ न करालो न लम्बोष्ठो नाव्यक्तो नानुनासिकः । गद्गदो बद्धजिह्वश्च न वर्णान्वक्तुमर्हति ७ चुलुनीका स्फुटो दण्डी स्वस्तिको मुष्टिकाकृतिः । एते वै हस्तदोषाः स्युः परशुश्चेति सप्तमः ८ हस्तहीनं तु योऽधीते मन्त्रं मन्त्रविदो विदुः । न साधयति यजूꣳषि भुक्तमव्यञ्जनं यथा । ९ ऋचो यजूꣳषि सामानि हस्तहीनानि यः पठेत् । अनृचो ब्राह्मणस्तावद्यावत्स्वारं न विन्दति १० हस्तेनाधीयमानस्तु स्वरवर्णप्रयोगतः । ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ११ न कुर्वीत पदं दीर्घं न चात्यन्ताविलम्बितम् । पदस्य प्रहमोक्षस्तु यथा शीघ्रगतिर्हयः १२ यथा वाणी तथा पाणीरिक्तं तु परि वर्ज्जयेत् । यत्र यत्र स्थिता वाणी पाणिस्तत्रैव तिष्ठति १३ यथा धनुष्यावितते शरे क्षिप्ते पुनर्गुणः । स्वस्थानं प्रति पर्येत तद्वद्धस्तगतः स्वरः १४ उत्तानं सोन्नतं किञ्चित्सुव्यक्ताङ्गुलिरञ्जितम् । स्वरविच्च स्वरं कुर्यात्प्रादेशोद्देशगामिनम् १५ मनुष्यतीर्थोर्ध्वं कृत्वा पितृतीर्थोदकं व्रजेत् । नामितं करपृष्ठं तु सुव्यक्ताङ्गुलिमोक्षणम् १६ अङ्गुष्ठस्योत्तरे पर्वे (पर्वे इत्यार्षपाठः) यवस्योपरि यद्भवेत् । प्रादेशस्य तु सो देशस्तन्मात्रं (सो देश इत्यपि तथैव ज्ञातव्यः) चालयेत्करम् १७ उदात्तं तु भ्रुवः प्रान्ते प्रचयं नासिकाग्रतः । हृत्प्रदेशेऽनुदात्तं तु तिर्यग्जात्यादिरीरितः १८ स्वरिते त्र्यङ्गुलं विद्यान्निपाते तु षडङ्गुलम् । उत्थाने तु नवाङ्गुल्यमेतत् स्वारस्य लक्षणम् १९ षडङ्गुलं तु जात्यस्य हस्तस्यानुपथस्य च । तच्चतुर्भागमात्रं तु भूयस्तेनैव वर्त्तयेदिति २० । दक्षिणजानूरुसन्धौ कूर्परं धृत्वा मिलितचतुरङ्गुल उत्तानो हस्तो धार्य्य इति ॥ उदात्तादिस्वरेषु हस्तप्रक्षेपप्रकारः कात्यायनेनापि वक्ष्यमाणप्रतिज्ञापरिशिष्टसूत्रे हृद्यनुदात्तो मूर्द्धन्युदात्तः श्रुतिमूले स्वरित इति कथितः ॥

जात्याभिनिहितक्षैप्रप्रश्लिष्टा एते चत्वारस्तिर्य्यग्घस्तं कृत्वा स्वरणीयाः पितृदानवद्धस्तं कृत्वेत्यर्थः ॥

## अनुदात्तं चेत्पूर्व्वं तिर्य्यङ् निहत्य काण्वस्य ॥१२३॥

एतेषां चतुर्णां जात्यादीनां यद्यनुदात्तं पूर्व्वं भवति तदा तिर्य्यग्घस्तं कृत्वा स्वरयितव्याः काण्वाचार्य्यस्य मतेन उदात्तपूर्वे अपूर्वे च न भवति अनुदात्तपूर्वो यथा (१) वैष्णव्यौ (२) धान्यमसि (३) स्नुपोसि (४) व्वेदोसि (५) अभ्यर्षत (६) योजान्विन्द्र ते (७) अभीन्धतामुखे (८) स्नुचीव घृतम् एतेषु तिर्य्यग्घस्तः क्रियते उदात्तपूर्वेष्वपूर्वेषु च जात्यादिषु तैरो व्यञ्जनवद्धस्तः क्रियते उदात्तपूर्वो भवति यथा (९) पञ्चदशो

(१) १ । १२ ॥
(२) १ । २० ॥
(३) ५ । ३१ ॥
(४) २ । २१ ॥
(५) १७ । ९८ ॥
(६) ३ । ५१ ॥
(७) ११ । ६१ ॥
(८) २० । ७९ ॥
(९) १४ । २३ ॥

व्योम (१) कतिधा व्यकल्पयन् अपूर्वो भवति (२) यथा त्र्यम्बकम् (३) इन्द्रः सम्मिरासुतिः ॥

## ऋजुन्निहत्य प्रणिहन्यते उदात्ते ॥१२४॥

ऋजुन्निहत्य (४) ह्रस्तमनुदात्तवत् ततः प्रकर्षेण निहन्यते नीचो क्रियते जात्याभिनिहितक्षैप्रप्रश्लिष्टा उदात्ते परभूते यथा (५) भूर्भुवः स्वर्द्यौरिव (६) देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम् (७) यासहिमर्श्वन्यविर्णाम् (८) स्रुचीवेति उदात्त इति कस्मात् (९) धान्यमसि धिनुहि देवान् (१०) पवित्रे स्थो वै-

(१) ३१ । १० ॥

(२) ३ । ६० ॥

(३) ११ । ७० । यत्र विसर्गसमीपे '(' एतच्चिह्नमस्ति तत्रोदात्तानुदात्तस्वरितक्रमेणाङ्गुलिप्रक्षेपः कर्त्तव्य इत्यत्र प्रमाणं विसर्ज्जनीय इति सूत्रव्याख्याऽवसरे द्रष्टव्यम् ॥

(४) उपरितो ह्रस्तमवतार्य्येत्यर्थः ॥

(५) ३ । ५ ॥

(६) १ । १० ॥

(७) १७ । १६ ॥

(८) २० । ६९ । अयमङ्कः पदपाठादवगन्तव्यः ॥

(९) १ । २० ॥

(१०) १ । १२ ॥

व्याव्यौ (१) ॥

तीक्ष्णोऽभिनिहितः परम्परम्मृदुस्त्वन्यः ॥ १२५ ॥

तीक्ष्ण उच्चारणतो ह्रस्वेन चाभिनिहितः स्वरो भवति ततोऽन्यो मृदुप्रयत्नो भवति किमविशेषेणेत्याह परम्परम् शब्दोऽव्ययम् पूर्वमपेक्ष्य परः परमपेक्ष्य पर इत्येवम् यथा अभिनिहितमपेक्ष्य क्षैप्रः क्षैप्रमपेक्ष्य प्रश्लिष्टः क्षैप्रे जात्यस्यान्तर्भावो द्रष्टव्यः तथा चोक्तम् सर्वतीक्ष्णोऽभिनिहितः प्रश्लिष्टस्तदनन्तरम् । ततो मृदुतरौ स्वारौ जात्यक्षैप्रावुभौ स्मृतौ १ ततो मृदुतरः स्वारस्तैरो व्यञ्जन उच्यते । पादवृत्तो मृदुतमस्त्वेतत् स्वारबलाबलमिति २ ॥

तस्यादित उदात्तꣳ स्वरार्द्धमात्रम् ॥ १२६ ॥

स्वरितस्य स्वरस्यादावुदात्तं ज्ञातव्यं तच्च स्वरार्द्धमात्राकालम् यद्येकमात्रो यदि द्विमात्रो यदि त्रिमात्रः स्वरस्तथाप्यर्द्धमुदात्तं परमनुदात्तं अयं तु स्व-

---

(१) निहितमुदात्तस्वरितपरमिति वक्ष्यमाणत्वात्स्वरिते च परे द्रष्टव्यम् । अनुदात्तपूर्ववति स्वरितपूर्वे चेदं नीचीकरणं हृदयादप्यधो मनुष्यदानवन्न्युब्जकरं कृत्वा कर्त्तव्यमिति ॥

रिते उदात्तानुदात्तप्रविभागो द्रष्टव्यः स्वरितशब्देनोदात्तानुदात्तं निर्वर्त्य पृथक् श्रुतिस्वरान्तरमभिधीयते यथा त्रपुताम्रयोः सँय्योगे धात्वन्तरस्य कांस्यस्योत्पत्तिः यथा च गुडदध्नोरेकीभावे मार्ज्जिकोत्पत्तिः एवमुदात्तानुदात्तसंयोगे स्वरितोत्पत्तिः ॥

## सप्त ॥१२७॥

सामसु सप्तस्वरानाहुः षड्ज-ऋषभ-गान्धार-मध्यम-पञ्चम-धैवत-निषादान् (१) ननु यजुर्वेदलक्षणप्रक्रमे एवं उदात्तानुदात्तसंय्योगे स्वरितोत्पत्तौ कः सामलक्षणप्रसङ्ग उच्यते अग्नौ यजुर्वेदे अध्वर्य्योः सामगानं विहितम् । नान्योध्वर्य्योर्गायेदिष्टका वा एता विहितश्चितो ह्यस्याद्यदन्योऽध्वर्योर्गायेत् इति ब्रा० २ । शा-

(१) सप्तानां निषादादीनां स्वराणामुच्चारणप्रकारः तेषामुदात्तादिस्वरमध्येऽन्तर्भावश्च पाणिनियाज्ञवल्क्यावुक्तवन्तौ । चाषस्तु वदते मात्रां द्विमात्रां वायसो ब्रवीत् । शिखी रौति त्रिमात्रं तु नकुलस्त्वर्द्धमात्रिकम् । षड्जं मयूरो वदति ऋषभं वृषभो वदेत् । अजा वदति गान्धारं मध्यमं दर्दुरो वदेत् । धैवतं चातको ब्रूते तत्तद्वायुगतः स्वरः । प्रावृट्काले तु सम्प्राप्ते कोकिला पञ्चमं वदेत् ॥ निषादं वदते हस्ती स्वरान् सप्त विनिर्द्दिशेत् । अस्योत्पत्तिर्य्यथा । सङ्गीतदामोदरे । वायुः समुद्गतो नाभेः कण्ठशीर्षसमाहतः । नानागन्धवहः पुण्यो गान्धारस्तेन हेतुना ॥ नाभेः समुद्गतो वायुर्गन्धश्रोत्रे च चालयन् । स शब्दस्तेन निर्य्याति गान्धारस्तेन कथ्यते । चतस्रः पञ्चमे षड्जे मध्यमे श्रुतयो मताः । ऋषभे धैवते तिस्रो द्वे गान्धारनिषादके इति एषां सर्वेषां लक्षणानि ग्रन्थविस्तरभिया न लिखितानीति, उदात्ते निषादगान्धारावनुदात्त ऋषभधैवतौ । स्वरितप्रभवाः शेषाः षड्जमध्यमपञ्चमा इति । अथ च शतपथब्राह्मणीयवक्ष्यमाणत्रिकण्डिकासूत्रपरिशिष्टेऽपि कात्यायनेनोक्तम् ॥

तपथे ६ सञ्चितिकाण्डे, अतोऽध्वर्य्युकर्त्तृकमिति कृत्वा कश्चिल्लक्षणांशः कृतः सामसु, अपरे त्वाहुः जात्याभिनिहितक्षैप्रप्रश्लिष्टतैरोव्यञ्जनतैरोविरामपादवृत्ताः सप्तस्वरा अत्रावधार्य्यन्ते ताथाभाव्यस्तु वाजसनेयिनां निवार्य्यते ॥

## त्रीन् ॥१२८॥

उदात्तानुदात्तस्वरितान्यजुर्वेदे त्रीन्स्वरानाहुः, (१) तथा च उक्ता एव सन्तोऽनूद्यन्ते एवेदानीमपवादार्थम् ॥

## द्वौ ॥ १२९ ॥

किमविशेषेण यजुर्वेदे त्रीन्स्वरानाहुः नेत्युच्यते द्वौ स्वरावुदात्तानुदात्तौ भाषितलक्षितौ शतपथब्राह्मणे आहुः । पारिशेष्यान्मन्त्रेषु त्रैस्वर्य्यम् (२) ॥

---

(१) प्रचितस्त्वनुदात्तान्तर्भूत एवेति पृथङ्नोक्तः तल्लक्षणं चतुर्थाध्याये स्वरितात्परमनुदात्तमुदात्तमयामित्यनेन सूत्रेणोक्तम् तद्धस्तचालनप्रकारः प्रतिज्ञापरिशिष्टसूत्रीयकात्यायनकृताशिक्षायां सर्वास्ये प्रचयः स्मृत इति याज्ञवल्क्येन प्रचन्नासाग्र एव चेत्युक्तं पाणिनिनापि कात्यायनाकूलमेवोक्तं परन्तु याज्ञवल्क्योक्त्या सहाविरोध एवेति बोध्यम् ॥

(२) अन्यब्राह्मणे तु भाषिकोक्ताः स्वरा ज्ञेयाः । ते चामन्त्रस्वरवद्ब्राह्मणस्वरक्षरकाणां त्रैस्वर्य्यमित्यर्थः । तेषां खाण्डकीयौखीयानां चातुःस्वर्य्यमिति क्वचित् । तेषां चरकाणां मध्ये अवान्तरभेदभिन्नानां खाण्डकीयानां औखीयानां शाखिनामुदात्तानुदात्तस्वरितप्रचितलक्षणं चातुःस्वर्य्यं भवति क्वचिद् ग्रहणात् त्रैस्वर्य्यं चेति ॥

एकम् ॥१३०॥

तानलक्षणमेकं स्वरमाङ्ग्यं यज्ञकर्म्मणि (१) ॥

सामजपन्न्यूँखवर्ज्जम् ॥१३१॥

प्रगीतं मन्त्रवाक्यं सामशब्देनोच्यते विश्वेदेवा: शृणुतेति जपः, न्यूँखो बह्वृचि प्रसिद्धः एतानि वर्जयित्वा यज्ञकर्म्मण्येकः स्वरो भवति तानलक्षणः (२) ॥

प्रावचनो वा यजुषि ॥१३२॥

प्रवचनशब्देनार्षपाठ उच्यते तत्र भवः स्वरः प्रावचनः स च यजुषि भवति वा तान इति विकल्पः स च त्रैस्वर्य्यलक्षण एव भवति प्रगृह्यं चर्चायामितिना पदेष्वित्यनेनैकस्मात्पर आर्ष इति (३) ॥

---

(१) तानोऽन्येषां ब्राह्मणस्वरः अतोऽन्येषां पञ्चविंशत् षड्विंशत् वाष्कलादि ब्राह्मणानां तान एकश्रुतिस्वरो भवति तान एवाङ्गोपाङ्गानामिति तानस्वराणि छन्दोवत् सूत्राणीति वक्ष्यमाणप्रतिज्ञासूत्रपरिशिष्टेऽप्युक्तम् ॥

(२) सुसमिद्धायेत्यादिः मयीदमित्यादिश्च जपः । न्यूँखो वह्वृचशाखासु ऋग्वेदीयप्रणवोच्चारः । न्यूँखः सम्यङ्मनोज्ञे च साम्नः षट् प्रवणेऽपि चेति मेदिनीकोशे । न्यूँखः सामवेदे निपातित ओकार इति अमरकोशीयतृतीयकाण्डस्य रामानन्दकृतटीकायां स्पष्टमुक्तम् ॥

(३) एवं शातपथिकस्य मन्त्रस्य भाषिकस्वरेण पाठः । सांहितिकस्य चातुःस्वर्य्येण महासमाख्ययोपसङ्गृहीतत्वात् । मन्त्रकाण्डपठितानामपि ब्राह्मणभागानामश्वस्तूपर इत्यादीनां त्रैस्वर्य्यमेव । ब्राह्मणकाण्डपठितानां विश्वेदेवाः शोस्तनमापथेहेत्यादीनां भाषिकस्वर एवेति । भाषिकस्वरलक्षणं अथ ब्राह्मणस्वरसंस्कारनियम इत्यारभ्य तानऽएवाङ्गोपाङ्गानामित्यन्तेन त्रिकाण्डिकाभाषिकसूत्रवक्ष्यमाणपरिशिष्टका-

## तमितिविकारः ॥१३३॥

तमित्युत्सृष्टसर्वनामका द्वितीया विभक्तिर्गृह्यते द्वितीयया यो निर्द्दिश्यते स विकारः प्रत्येतव्यः । यथा अनुस्वारꣳ रोष्मसु मकार इति मकारोऽनुस्वारविकारमापद्यते भाविष्यः स षꣳ समानपद इति सकारः षकारविकारमापद्यते (१)

## तस्मिन्निति निर्द्दिष्टे पूर्व्वस्य ॥१३४॥

तस्मिन्निति सप्तम्यन्तं परिगृह्यते सप्तम्या निर्द्दिष्टे पूर्व्वस्य कार्य्यं वेदितव्यम् पूर्वस्य पदान्तस्य विधिः प्रत्येतव्यः यथा ककारपकारयोः सकारमिति तथयोः समिति ॥

## तस्मादित्युत्तरस्यादेः ॥१३५॥

तस्मादिति पञ्चमी निर्द्दिष्टात्परस्य कार्य्यं वेदितव्यम् यथा ओकारात्सु, परेः सिञ्चतेः ॥

## षष्ठीस्थाने योगा ॥१३६॥

षष्ठी विभक्तिः स्थाने योगिनी वेदितव्या षष्ठ्यन्तस्य कार्य्यं भवतीत्यर्थः यथा यवयोः पदान्तयोः स्वरमध्ये लोपः ऐकारौकारयोः कण्ठ्यापूर्वामात्रा ताल्वोष्ठयो

---

त्यायनोक्तेन बोध्यम् ॥

(१) तमित्यारभ्य सूत्रसप्तकं पारिभाषीयम् । स्थाने जायमानो विकारो ज्ञातव्य इति ॥

रुत्तरा इति (१) ॥

## तेनेत्यागमः ॥१३७॥

तेनेति तृतीयाग्रहणम् तृतीयया यो निर्दिश्यते स आगमः प्रत्येतव्यः यथा ङ्नौ क्राभ्याम् सकार इति प्रगृह्यं चर्चायामितिना पदेषु (२)

## अन्तरेण पर्वणी ॥१३८॥

पर्वशब्देन पदमुच्यते पदयोर्मध्ये आगमो भवति यथा प्राङ्सोमः(३) प्राङ्क्सोमः प्रत्यङ्सोमः(४) प्रत्यङ्क्सोमः त्रीन्समुद्रान् (५) त्रीन्त्समुद्रान् अस्मान्सीते (६) अस्मान्त्सीते ॥

## पर एकस्मात् ॥१३९॥

एकस्य पदस्य मध्ये य आगमो विधीयते स परो भवति यथा(७) हे इति शीर्षे इति प्रगृह्यं चर्चायामितिना पदेष्वित्यनेनैकस्मात्पदात्पर इतिकार आगमो

(१) स्थानमुच्चारणप्रसङ्गः ।

(२) समीपे जायमान आगमो बोध्य इति ॥

(३) १० । ३१ ॥

(४) १९ । ३ ॥

(५) १३ । ३० ॥

(६) १२ । ७० ॥

(७) १७ । ९३ ॥

विधीयते इति ॥

## उभयोर्विकारः ॥१४०॥

द्वितीयया निर्द्दिष्टो विकार इत्यधस्तादुक्तम् । स उभयोर्भवति अन्तरेण पर्वणी च पदान्तपदाद्योरित्यर्थः एकस्य वा वर्णस्य निर्द्दिश्यते यथा आ इदम् (१) एदम् इह ऊर्ज्जम् (२) इहोर्ज्जम्द्घातन एकवर्णस्य भवति यथा मो षु नः (३) 'मोषूणऽइन्द्रात्र' सुसाव (४) सुषाव सोमम् (५) ॥

## वर्णस्यादर्शनं लोपः ॥१४१॥

दर्शिरुपलब्धिवचनः । अनुपलब्धिरदर्शनं वर्णस्य लोप इत्युच्यते वक्ष्यति "लोपं धौ" यथा अयक्ष्माः मा (६) अयक्ष्मामा वस्तेनः, सत्याः नः (७) सत्या नःसन्त्वाशिषः ॥

## विकारी यथासन्नम् ॥१४२॥

---

(१) ४ । १ ॥

(२) १९ । ६३ ॥

(३) ३ । ४६ ॥

(४) १९ । २ ॥

(५) स्थाने जायमानो विकार इति भेदः ॥

(६) ४ । १२ ॥

(७) २ । १० ॥

विकारोऽस्यास्तीति विकारी विकारी वर्णोऽवचने यथासन्नम् यो य आसन्नस्तमापद्यते वक्ष्यति स्वरे भाव्यन्तस्थाम् यथा त्रि अम्बकम् त्र्यम्बकम् दृ अन्नः दृन्नः वचनादन्यदपि भवति यथा अनसो वाहौ सकारो डकारमिति अनड्वान् वचनात् सकारस्य डकारः । परिभाषासूत्रमेतत् ॥

## सङ्ख्यातानामनूद्देशो यथासङ्ख्यम् ॥ १४३ ॥

समानसङ्ख्यानां यः पश्चादुद्देशः स यथासङ्ख्यम् भवति यस्य या सङ्ख्या प्रथमस्य प्रथमः द्वितीयस्य द्वितीयः तृतीयस्य तृतीय इत्यर्थः । वक्ष्यति सदो द्यौर्नमस्कृतं पिता पथेषु यथा (१) सदः कृतम् सदस्कृतम् (२) तेभ्यः सर्प्पेभ्यो नमः (३) "द्यौः पिता" द्यौष्पितोपमाम् (४) नमः पथे, शर्म्म सप्रथा नमस्पथे परिभाषासूत्रमेतत् ॥

## सन्निकृष्टविप्रकृष्टयोः सन्निकृ-

---

(१) १९ । १८ ।
(२) १३ । ६ ।
(३) २ । ११ ।
(४) १८ । ५१ ।

## ष्टस्य ॥१४४॥

यत्रोदाहरणसंशयः तत्रेयं परिभाषोच्यते सन्निकृष्टविप्रकृष्टयोरुदाहरणयोः सन्निकृष्टस्यैवोदाहरणस्य कार्य्यं प्रत्येतव्यम् न तु विप्रकृष्टस्य यथा असि शिवा सुषदेत्येवमादिषु परभूतेषु असि शब्द आद्युदात्त उक्तः तत्र सन्देहः किं सुम्मा चासि शिवा चासि स्योना चासि सुषदेत्यत्रासि शब्द आद्युदात्तो भवति उत स्योना चासिसुषदेति उभयोरप्यसि शब्दः परभूतः तत्रानेनावधारणं क्रियते यत्रान्यत्रापि सन्निकृष्टानि पदानि भवन्ति तत्र कार्य्यं भवति तद्यथा असि शिवा सुषदा पयस्वतीत्यत्र पयस्वतीसन्निधानात् सुम्मा चासि शिवा चासि स्योना चासि सुषदेत्ययमेवाद्युदात्तो भवति न तु स्योनासुषदेति विप्रकृष्टत्वात् (१) ॥

## पूर्वोत्तरयोरुत्तरस्य ॥१४५॥

यत्र पूर्वस्योत्तरस्य च युगपत्कार्य्यं प्राप्नोति तत्रोत्तरस्यैव भवति न तु पूर्वस्य ह्रस्वमुदाहरणम् (२) आ च शाखा च अत्र स्वरिताकार उदात्तः तत्र युगपत्कार्यमुभयोः सन्धावुदात्त एव स्वरविषयकं चैतत्सूत्रम् ॥

## द्विरुक्तमाम्रेडितं पदम् ॥१४६।

(१) सहचरितासहचरितयोर्म्मध्ये सहचरितस्यैव कार्य्यहेतुत्वं स्यात् ॥
(२) २१ । ६१ ॥

द्विरभ्यस्तं पदमाम्रेडितसञ्ज्ञं भवति यथा (१) यज्ञायज्ञावो ऽअग्नये, तत्र आम्रेडितसञ्ज्ञायाः प्रयोजनम् आम्रेडितं चोत्तरमित्यादि ॥

## सꣳहितꣳ स्थितोपस्थितम् ॥१४७॥

इत उत्तरं पदसंहिता वर्तिष्यते द्विरुक्तमित्यनुवर्त्तते । द्विरुक्तं यत्पदमिति करणेन मध्यस्थितेन आद्यन्तसंहितेन पूर्वमादिसंहितमुत्तरपदमन्तसंहितं स्थितोपस्थितसञ्ज्ञं भवति यथा (२) इ, इति इ, (३) शीर्षे इति शीर्षे, (४) पुनरिति पुनः । (५) वह्नितममिति वह्नि । तमम् । (६) सस्नितममिति सस्नि । तमम् । (७) पप्रितममिति पप्रि । तमम् । तथा चोक्तम् । उपस्थितं सेतिकारं केवलं तु पदं स्थितम् । तत्स्थितोपस्थितन्नाम यत्रोभे आह संहिते । १ । अस्यार्थः । इतिकरणसहितमुपस्थितसञ्ज्ञं पदं भवति । केवलमिति करणसहितं स्थितसञ्ज्ञं भवति यत्र पदान्तप-

---

(१) २७ । ४२ ॥

(२) १७ । ९३ । अयमङ्कः पदपाठाद् ज्ञातव्यः ॥

(३) १७ । ९३ । अयमपि तथैव ॥

(४) ४ । १५ ॥

(५) १ । ८ ॥

(६) १ । ८ ॥

(७) १ । ८ ॥

दादी इतिकरणेन सहितौ आह । तत्स्थितोपस्थित-पदमुच्यते । स्थितोपस्थितप्रदेशाः, । पूर्वोक्तसंहितस्य स्थितोपस्थितमवगृह्यस्येति स्थितोपस्थितस्यैव सावग्रहस्य स्वरविशेषविधानार्थमाह ॥

## सꣳहितावदवग्रहः स्वरविधौ परं च सर्वं चेदनुदात्तम् ॥१४८॥

अवग्रहशब्देन सावग्रहस्य पदस्य पूर्वपदमभिधीयते । अवग्रहः स्वरविधौ स्वरचिन्तायां संहितावत्स्वरं लभते । इतिकरणेन सह सन्धौ तस्मिंश्च सावग्रहे पदे द्वे भवतः तत्र पूर्वपदं तावदिति करणेन सह सन्धौ संहितावत्स्वरं लभते । परं च अवग्रहात्परं पदं संहितावत्स्वरं लभते । यदि तत्सर्वमनुदात्तं भवति । यदि स्वतन्त्रं किं चिदक्षरमुदात्तं वा स्वरितं वा भवति । तदा स्वकीयया प्रकृत्या भवति । यथा वह्नितममिति वह्नि । तमम् । गृहपत ऽइति गृह । पते । प्रजावतीरिति प्रजा । वतीः । परं च सर्वञ्चेदनुदात्तमिति कस्मात् ऊर्णाम्रदसेत्यूर्णा । म्रदसा । व्यिकरुचुरिति वि । करुचुः । द्रोणकलश ऽइति द्रोण । कलशः । उदात्तोदाहरणम्, राजस्व ऽइति राज । स्वः । स्वरितपदोदाहरणम्, स्वरविधाविति किम् । वर्णविधौ संहितावन्न भवति । महद्भ्य ऽइति महत् । भ्यः । तिष्ठु-

ष्ठ ऽइति तिष्ठतु । अध्यः । (१) धावेष्ठ ऽइति धावतु । अध्यः ॥

## इति परस्तिर्यङ्नीचोऽन्तोदात्ते मध्योदात्ते पर्वणि काण्वस्य वा ॥१४९॥

इति परस्तिर्यङ्नीचो भवति अनुदात्तो भवतीत्यर्थः । अन्तोदात्ते मध्योदात्ते वा पदे वा शब्दो भिन्नक्रमो विकल्पार्थः । काण्वस्याचार्यस्य मतेन । (२) ऊर्णासूत्रेणेत्यूर्णा । सूत्रेण, (३) द्रोणकलश ऽइति द्रोण । कलशः ॥

## उदात्तमयोऽन्यत्र नीच एव ॥१५०॥

काण्वस्येति वर्त्तते अन्तोदात्तमध्योदात्तयोः पर्वणोरन्यत्र इति करणात्परो नीच उदात्तमय एव भवति । प्रचित एव भवतीत्यर्थः । यथा । (४) सोमगोपा इति सोम । गोपाः । (५) सखितममिति सखि । तमम् । पप्रितममिति पप्रि । तमम् ॥

---

(१) १६ । २३ । अयमङ्कः पदपाठाद् ज्ञातव्यः ॥

(२) १९ । ७८ । तथा ॥

(३) १९ । २५ । अयमपि तथा ॥

(४) १२ । २० ॥

(५) १ । ७ ॥

## एकवर्णः पदमपृक्तम् ॥ १५१ ॥

एकवर्णस्याष्टक्तसञ्ज्ञा विधीयते पदस्य यथा (१) आ (२) उ अपृक्तसञ्ज्ञायाः प्रयोजनं । अपृक्तमध्यानि त्रीणि स त्रिक्रमः ॥

## स एवादिरन्तश्च ॥ १५२ ॥

स एवैको वर्णः पदसञ्ज्ञः सन् पदादिसम्बन्धीनि पदान्तसम्बन्धीनि च कार्याणि लभते । यथा । (३) इन्द्रं आ इहि । इन्द्रे हि ॥

## अवग्रहः पदान्तवत् ॥ १५३ ॥

अवग्रहशब्देन पूर्वपदमिहाभिधीयते । अवग्रहः पदान्तसम्बन्धीनि कार्याणि लभते वर्णविधौ, स्वरविधौ तु अधस्तादुक्तम् संहितावदवग्रहः स्वरविधाविति, यथा (४) भरद्वाज ऽइति भरत् । वाजः । (५) तिष्ठ्यःऽ इति तिष्ठत् । श्यः ॥

---

(१) १ । १ ॥

(२) ७ । ४१ । तथा ॥

(३) ३३ । २५, अयमङ्कः पदपाठादवगन्तव्यः । एहीत्यादौ अन्तरथा दीर्घाकारादीनि स एवादिरन्तश्चेत्यतिदेशाद् भवन्ति २० । ७८ । इन्द्र आ याहीत्युदाहरणं बोध्यम् ॥

(४) १३ । ५० ॥

(५) १६ । २३ ॥

## न त्विति करणम् ॥१५४॥

अवग्रहः पदान्तवदित्युपदेशादिति करणमपि प्राप्नोति तन्निषिध्यते । यथा । (१) अन्तःश्लेष ऽइत्यन्तः । श्लेषः । रिफितं च संहितायामनिरुक्तमित्यनेनेति करणमपि प्राप्नोति तन्निषिध्यते (२) ॥

## पूर्वेणोत्तरः संहितः ॥ १५५ ॥

इत उत्तरं संहितोच्यते पूर्वेण पदान्तेन उत्तरः पदादिः संहिता यदा क्रियते स्वरतो वर्णतश्च तदा द्विपदसंहितोच्यते यथा (३) इषे त्वा, त्वोर्ज्जे क्रमसंहितेयम् ॥

## पदविच्छेदोऽसंहितः ॥१५६॥

पदे पदे विच्छेदः पदविच्छेदः । पदविच्छेदो यदा क्रियते तदा असंहितः पाठः । यथा (४) इषे त्वा ऊर्ज्जे त्वा ॥

---

(१) १३ । २३ ॥

(२) न त्विति करणा इति 'च' पुस्तकपाठः वत्युपदेशादिति करणस्य पदान्तता प्राप्तौ प्रतिषेधः पदान्तधर्मेण लभते ॥

(३) १ । १ ॥

(४) १ । १ ॥

एकपदद्विपदत्रिपदचतुष्पदानेकपदाः पादाः ॥ १५७ ॥

एकं पदं यस्मिन् पादे स एकपदः पादः सा च पदसंहितोच्यते । छन्दसः पादपरिज्ञानार्थम् । एक पदः पादो यथा । (१) हृदिस्पृशम् । द्विपदः पादो यथा । (२) क्रतोः भद्रस्य । क्रतोर्भद्रस्य । त्रिपदः पादो यथा । (३) अग्ने तम् अद्य । अग्ने तमद्य । चतुष्पदः पादो यथा । (४) अग्ने विश्वेभिः सुमना ऽअनीकैः । अनेकपदः पादो यथा । (५) वि धूमम् । अग्ने । अरुषम् मियेध्य । विधूममग्नेऽअरुषम्मियेध्य ॥

वर्णानामेकप्राणयोगः संहिता ॥ १५८ ॥

एवं तावत्पादसंहिता ऋट्च्चु कर्तव्या यजुष्षु त्वयं विधिः । वर्णानामेकोच्छ्वासोच्चारणयोगः पदे वा वाक्ये विश्रामः सा च प्राणसंहिता यत्र भूयांसि पदानि

(१) १५ । ४४ ॥
(२) १५ । ४५ ॥
(३) १५ । ४४ ॥
(४) १५ । ४६ ॥
(५) ११ । ३७ ॥

अतिक्रम्यावसानं भवति न त्वेकेन प्राणेन तान्विव्याप्तुं शक्यन्ते तत्रायं विधिः । यथा । (१) "त्वामद्य ऋषऽ आर्षेयऽऋषीणान्नपादवृणीतायं यजमानः" यत्र त्ववसानं शक्यते व्याप्तुं तत्रावसान एव विरतिः कर्तव्या यथा । (२) इन्द्रो विश्वस्य राजति ॥

## विप्रतिषेधऽ उत्तरम्बलवदलोपे ॥१५८॥

शास्त्रद्वयमन्यत्र चरितार्थमेकस्मिन्नर्थे सङ्गच्छते यत्र स तुल्यबलविरोधो विप्रतिषेध उक्तः । तत्रोत्तरं शास्त्रं बलवद्भवति लोपं वर्ज्जयित्वा लोपे तु यतो लोपस्तदेव शास्त्रं बलवद्भवति यथा "स्वरितवान्स्वरित" इत्यस्यावकाशः । अनुदात्तस्वरितसन्धौ स्वरितो भवति यथा(३) स्वाहा अवक्रन्दाय । स्वाहाऽवक्रन्दाय, तथा च वक्ष्यति उदात्तवानुदात्तः । अस्यावकाशः । उदात्तानुदात्तसन्धौ उदात्तो भवति । यथा । (४) सुज्मा च असि । सुज्मा चासि । स्वरितोदात्तसन्धौ परत्वादुदात्त एव भवति । (५) यथा सुपर्वा इति । सुपर्वेति, (६) राज्ञां इन्द्र-

(१) २१ । ६१ ॥
(२) ३६ । ८ ॥
(३) २२ । ७ ॥
(४) १ । २७ ॥
(५) १ । ३ ॥
(६) ३ । १० ॥

वत्या । राध्येन्द्रवत्या, अलोप इति किम् । स्य एष चे-त्यनेन शास्त्रेण स्यशब्दस्य विसर्जनीयो व्यञ्जने परतो लुप्यते। यथा। (१) एषः । स्यः । वाजी, एतच्च पूर्वं शास्त्रम् । अतोऽन्यद्भवति । रेफे लुप्यते दीर्घञ्चोपधेत्य-नेन शास्त्रेण रेफे परभूते लुप्यते विसर्ज्जनीय उपधा च दीर्घमापद्यते। एतच्च परं शास्त्रम् ततो लोपस्य ब-लीयस्त्वाल्लोप एव भवति नोपधादीर्घत्वम् । यथा (२) एषः स्यः राध्यः । एषस्य राध्यो वृषा, (३) एषः छागः । एषच्छागः । विसर्जनीयलोपः चछयोः शमि-ति न शकारः ॥

## विसर्ज्जनीयो रिफितः ॥ ॥ १६० ॥

इत उत्तरमकारोपध आकारोपधस्य विसर्ज्जनीयो रिफितसञ्ज्ञो भवति। वक्ष्यति करमनुदात्तम् । यथा। (४) अच्छिद्रा गात्राण्यसिना मिथू कः । सञ्ज्ञाकरणे प्रयोजनम् । भाव्युपधस्य रिद्विसर्जनीय इति । करिति कः ॥

## करमनुदात्तम् ॥ १६१ ॥

---

(१) ९ । १४ ॥
(२) २३ । १३ ॥
(३) २५ । २६ ॥
(४) २५ । ४१ ॥

करित्येतत्पदमनुदात्तं चेद्रिफितसञ्ज्ञं भवति । अधिकारसूत्रमेतत् । यथा (१) मह्निपार्थः- पूर्व्यर्ठ० सध्य्रक्ः । अनुदात्तमिति किम् । (२) कोऽ अस्य व्वेद भुवनस्य नाभिम् ॥

## अन्तरनाद्युदात्तम् ॥ १६२ ॥

अन्तरित्येतत्पदं रिफितसञ्ज्ञं भवति आद्युदात्तं चेन्न भवति । अन्तरित्यन्तः (३) । अन्तस्ते द्यावापृथिवी । अनाद्युदात्तमिति किम् (४) । समुद्रस्य मध्यं चान्तस्य, (५) इयं व्वेदिः परो ऽअन्तः ॥

## अहरभकारपरम् ॥ १६३ ॥

अहरित्येतत्पदं रिफितसञ्ज्ञं भवति भकारपरं (६) चेन्न भवति । यथा । (७) प्रवयाह्नाहर्ज्जिन्न्वा (८) । अहरहरित्यहः । अहः । अहरहरप्रयावम् । अभका-

(१) ३३ । ५९ ॥
(२) २३ । ५९ ॥
(३) ७ । ५ ॥
(४) १७ । १ ॥
(५) २३ । ६२ ॥
(६) भकारपरो न चेदित्यपि पाठान्तरं 'ग' चिह्नितपुस्तके ॥
(७) १५ । ६ ॥
(८) ११ । ७१ ॥

रपरमिति किम् (१) तत्ते शुध्यतु ग्रमक्षोभ्यः (२) । द्यु-भिरक्षोभिरक्तुभिर्व्यक्तम् ॥

## आववरिति समानर्चि ॥ १६४ ॥

आवः । वः । इत्येते पदे रिफिते भवतः । उभे अप्येकस्यामृचि यदि भवतः । यथा (३) । आवरित्यावः व्वि सोमतः सुरुचो व्वेनऽआवः । व्वरिति वः । सत-श्चयोनिमसतश्च व्वि वः । समानर्चीति किम् (४) । आ वो देवास ऽईमहे, (५) नमो वः किरिकेभ्यः । (६) अस्मे वोऽअस्त्विन्द्रियम् ॥

## स्तोत-र्वस्त:सनुत-रभा-र्वाद्वाः॥१६५॥

स्तोतः वस्तः सनुतः अभाः वाः द्वाः । एतानि पदानि रिफितसञ्ज्ञकानि भवन्ति । यथा (७) एतœ स्तो-

---

(१) ६ । १५ ॥
(२) ३५ । २ ॥
(३) १३ । ३ ॥
(४) ४ । ५ ॥
(५) १६ । ४६ ॥
(६) ९ । २२ ॥
(७) २३ । ७ ॥

तरनेनं, । (१) दोषावस्तर्द्धिया वयम् । (२) आराच्चिद्द्वेषः सनुतर्युयोतु । (३) अग्निः स्वे योनावभारुखा । (४) इदमहन्तष्टं वार्वर्हिद्वी । (५) द्वार्थः स्वामम् ॥

## स्वः पदमनरणे ॥ २६६ ॥

स्वरित्येतत्पदं रिफितसञ्ज्ञं भवति । अरणशब्दो यदि परो न भवति यथा (६) स्वः न । स्वर्ण घर्मः । (७) स्वः अभि विक्ख्येषम् । स्वरभि विक्ख्येषम्, पदमितिकिम्, पदावयवस्य रिफितसञ्ज्ञा माभूत् । (८) राजस्वऽइति राज । स्वः । सोमस्य दात्रमसि स्वाहा राजस्वः, अनरण इति किम् । (९) स्वायचारणाय च ? पदादिश्चाजित्पर इति वक्ष्यति तस्यायं पुरस्तादपवादः ॥

## पदादिश्चाजित्परः ॥ २६७ ॥

---

(१) ३ । २२ ॥
(२) २० । ५२ ॥
(३) १२ । ६१ ॥
(४) ५ । ११ ॥
(५) ३० । १० ॥
(६) १८ । ५० ॥
(७) १ । ११ ॥
(८) १० । ६ ॥
(९) २६ । २ । सर्वेष्वपि पुस्तकेष्वेवमेव पाठः ॥

पदादिश्च यदि स्वग्रशब्दो भवति तदा रिफितसञ्ज्ञो भवति जित्परश्चेन्न स्यात् "द्वौद्वौ प्रथमौ जित्" । "ऊष्माणश्च हवर्ज्जं" जिदित्युक्तम् (१) स्वर्ग्यायेति स्वः । ग्याय । स्वर्ग्याय शक्त्या । पदादिरिति किम् (२) स्वाहा राजस्वः । अजित्परमिति किम् (३) स्वःसामिति स्वःसाम् । पदसंहितोदाहरणम् ॥

द्वाः सवितः पुनस्त्वष्टर्नेष्टरकहोंतर्म्मातः प्रातर्जामातरजीगः प्रणेतरिति च ॥ १६८ ॥

द्वाः सवितः पुनः त्वष्टः नेष्टः अकः होतः मातः प्रातः जामातः अजीगः प्रणेतः एतेषां पदानां विसर्जनीयो रिफितसञ्ज्ञो भवति । यथा (४) मा द्वार्म्मो ते, । (५) देव सवितरिति सवितः । (६) पुनर्म्मनः । (७) देव त्वष्टर्भूरि ते । (८) ग्रावो नेष्टः पिब,

(१) ११ । २ ॥
(२) १० । ६ ॥
(३) ३४ । २० ॥
(४) १ । २ ॥
(५) ९ । १ ॥
(६) ४ । १५ ॥
(७) ६ । २० ॥
(८) २६ । २१ ॥

(१)सरस्वति तमिह धातवेऽक: ।(२)सोमर्ठ० हो तर्य्यं- जं । (३) पृथिवि मातर्म्मा मा हि ठं० सी: । (४) इन्द्र प्रातर्ज्जुषस्व नः । (५) त्वष्टुर्जामातरद्भुत । (६) आदित्यर्सिष्ठ ऽओषधीरजीगः । (७) भग प्रणेत- र्भग सत्यराधः ॥

## वृद्धं वृद्धिः॥ १६९ ॥

वृद्धमिदं शास्त्रमन्यानि शास्त्राण्यपेक्ष्य । शिक्षा- विहितं व्याकरणविहितं चास्मिन् शास्त्रे उभयं यतः प्रक्रियते । अत एव हेतोः शिष्याणामेतच्छास्त्रस्यावि- णां वृद्धिर्भवति ॥

## इति कात्यायनकृतौ प्रातिशाख्य सूत्रे प्रथमोऽध्यायः ॥

इत्यानन्दपुरवास्तव्यश्रीवज्रटसुतोव्वटकृतौ प्राति- शाख्यसूत्रभाष्ये प्रथमोऽध्यायः ॥

---

(१) ३८ । ५ ॥
(२) २३ । ६४ ॥
(३) १० । २३ ॥
(४) २० । २९ ॥
(५) २७ । ३४ ॥
(६) २९ । १८ ॥
(७) ३४ । ३६ ॥

सञ्ज्ञाः परिभाषाश्च प्रथमाध्याये शास्त्रसंव्यवहारार्थमुक्ताः । इदानीं स्वरसंस्कारयोश्छंदसि नियम इति प्रतिज्ञातौ । स्वरसंस्कारावारभ्येते तत्र च प्रथमं स्वरः प्रतिज्ञात इत्यतः स्वर एव प्रथममारभ्यते ॥

## स्वरितवर्ज्जमेकोदात्तं पदम् ॥१॥

एकं स्वरितं प्रथमं वर्ज्जयित्वा एकोदात्तं पदम्भवति सर्वस्मिन्नेव पदे एकमक्षरं स्वरितमुदात्तं च भवति । अन्यान्यक्षराण्यनुदात्तानीति सूत्रार्थः । तत्र स्वरितस्य चत्वारो भेदा भवन्ति तद्यथा । आदिस्वरितमध्यस्वरितान्तस्वरितसर्वस्वरितानि पदानि भवन्ति । आदिस्वरितम् । यथा (१) व्युप्तकेशायेति व्युप्त । केशाय । मध्यस्वरितं यथा (२) मनुष्याणाम् । स्वर्ग्याय । अन्तस्वरितं यथा (३) वैष्णव्यौ, (४) धान्यम् । सर्वस्वरितं यथा (५) स्वः । उदात्तस्य चत्वारो भेदा भवन्ति तद्यथा । आद्युदात्तमध्योदात्तान्तोदात्तसर्वोदात्तानि पदानि भवन्ति । आद्युदात्तम् । यथा (६) अश्वः, (७)

(१) १६ । २९ । अयमङ्कः पदपाठादवगन्तव्यः ॥
(२) ६ । ६ ॥
(३) १ । १२ ॥
(४) १ । २० ॥
(५) ३ । ५ ॥
(६) २४ । १ ॥
(७) ४ । ६ ॥

स्वाहा । मध्योदात्तं यथा (१) त्रितायं द्वितायं । अन्तोदात्तं यथा (२) इषे ऊर्ज्जे रय्यै । सर्वोदात्तं यथा (३) प्र तत् । एता अष्टौ पदभक्तयोऽनेन सूत्रेणोक्ताः आद्युदात्तत्र्युदात्तसर्वोदात्तानि वक्ष्यति । एवमेता एकादशपदभक्तयो भवन्ति सर्ववेदेषु ॥

## अनुदात्तम् ॥ २ ॥

स्वरितादक्षरादुदात्ताद्वा यदवशिष्टं तदनुदात्तं भवति । उक्तान्येवोदाहरणानि । अधिकारार्थमेतत् ॥

## नो नौ मे मदर्थे त्रिद्व्येकेषु ॥ ३ ॥

अनुदात्तमित्यनुवर्त्तते नः नौ मे । एतानि मदर्थे वर्त्तमानानि अस्मदर्थं यदि ब्रुवन्ति । बहुवचनद्विवचनैकवचनाभिधायकानि च यदि भवन्ति यथासङ्ख्यं वर्त्तमानानि अनुदात्तानि भवन्ति । नः यथा, (४) शन्न ऽइन्द्राग्नी, (५) स्वस्ति न ऽइन्द्रः । नौ यथा (६) अस्थूरि णौ गार्हपत्यानि सन्तु, मे यथा (७) इमा-

(१) १ । २३ ॥
(२) १४ । २२ ॥
(३) ५ । २० ॥
(४) ३६ । ११ ॥
(५) २५ । १९ ॥
(६) २ । २७ ॥
(७) १७ । २ ॥

मेऽ अग्न ऽइष्टका धेनवः-। (१) इमम् मे वरुण (२) ॥

## मा च ॥४॥

मा इत्येतच्च पदमनुदात्तं भवति। अस्मदर्थे चेद्वर्त्तते। यथा (३) आ मा गन्तामपितरा मातरा च। मदर्थ इति किम् (४) मापो मौषधीर्हिꣳसीः ॥

## वो वान्ते त्वदर्थे ॥ ५ ॥

वः वाम् ते एतानि पदानि युष्मदर्थे वर्त्तमानानि बहुवचनद्विवचनैकवचनेषु यथासङ्ख्यं वर्त्तमानानि अनुदात्तानि भवन्ति, वः। यथा (५) तँव्वो दस्मम्। (६) आ वो देवासऽ ईमहे। वां यथा (७) अयँव्वां मित्रावरुणा सुतः। (८) या वां कशा मधुमती, ते

---

(१) २१ । १ ॥

(२) पदपूर्वाणीति द्रष्टव्यम्। त्रिद्व्यकेष्विति स्पष्टार्थम्। मदर्थ इत्युत्तरार्थम्। सन्देहे साहचर्य्यन्नियामकमिति सर्वादेशस्यैव ग्रहणम्। तेन मे इत्यादेशाविशिष्टस्य न यथा ४। २२। रायो मे ॥

(३) ९ । १९ ॥

(४) ६ । २२ ॥

(५) २६ । ११ ॥

(६) ४ । ५ ॥

(७) ७ । ९ ॥

(८) ७ । ११ ॥

यथा (१) एष ते रुद्र भागः । (२) अयं ते योनिः- (३) ॥

## त्वा च ॥ ६ ॥

त्वा इत्येतच्च पदं युष्मदर्थे वर्त्तमानमनुदात्तं भवति। यथा (४) मा त्वाग्निर्ध्वनयीद्धूमगन्धिः । (५) तन्त्वा शोचिष्ठ दीदिवः । नो नौ म इति यथाश्रुतेन सिद्धे यन्मदर्थ इति लिङ्गोक्ष्विति च वदति तच्छिष्यव्युत्पादनार्थम् । मा इत्येतस्य तु पदस्य मदर्थ इति विशेषणं कर्त्तव्यम् । प्रतिषेधार्थीयस्यापि सम्भवात् । वो वां ते त्वा एतेषां च पदानां त्वदर्थ इति विशेषणं शिष्यव्युत्पादनार्थमेव अन्यार्थस्याव्यभिचारात् ॥

## पूर्ववाननुदेशः ॥ ७ ॥

पूर्वैः पदैः प्रज्ञापितस्यार्थस्य यत्पश्चात् । असौ एषां अस्मिन्नित्यादि सर्वनामपदं तस्यैवार्थस्याभिधायकम्भवति तदनुदेशशब्देनोच्यते (६) । तदनुदात्तम्भव-

(१) ३ । ५७ ॥

(२) ३ । १३ ॥

(३) त्वदर्थे किम् । ९ । १७ । ते नो ऽअर्व्वन्तः ॥

(४) २५ । ३७ ॥

(५) ३ । २६ ॥

(६) पूर्वोऽस्यास्तीति पूर्ववान् । अनुदिश्यते अनेनेत्यनुदेशः । पूर्वमुद्दिष्टस्यार्थस्य पुनर्निर्देशकः शब्दः ॥

ति अस्मै यथा (१) भरन्तोऽश्वायेव तिष्ठते घासमस्मै। एषां यथा (२) इहेहैषां कृणुहि भोजनानि। अस्मिन् यथा (३) आस्मिन्हव्या जुहोतन। पूर्ववानिति किम्, (४) सोमः- पवते सोमः पवतेऽस्मै ब्रह्मणे। (५) आसां प्रजानामेषाम्पशूनाम् ॥

## असि ॥ ८ ॥

असीत्येतत्पदमनुदात्तं भवति (६) कृष्णोऽस्याखरेष्ठः, वेदिरसि बर्हिषि। आख्यातमसि शब्दस्तस्य वक्ष्यमाणोऽनुदात्तस्वरः प्राप्त एव इह यद्ग्रहणं तदाख्यातपदानभिज्ञस्यापि ज्ञानार्थम् ॥

## यथा गृभो भुवोऽग्निभ्यः ॥ ९ ॥

यथा शब्दो गृभो भुवो ऽग्निशब्देभ्यः परोऽनुदात्तो भवति। गृभः, यथा (७) पुरा जीव गृभो यथा। भुवः,

---

(१) ११ । ७४ ॥
(२) १० । ३२ ॥
(३) ३ । १ ॥
(४) ७ । २१ ॥
(५) १६ । ४७ ॥
(६) २ । १ ॥
(७) १२ । ८७ । त्रिद्व्येकेष्विति इह पूर्वर्ध० श्रुतमित्यतः प्रागनुवर्त्तते ॥

यथा (१) सत्यस्यांग्निर्भुवो यथा । अग्निर्यथा (२) भ्राजन्तो ऽग्नयो यथा । एतेभ्यः किम् (३) यथा नो व्यांसस्कृतं ॥

## गिर्व्वणः ॥ १० ॥

गिर्व्वण इत्येतत्पदमनुदात्तं भवति । (४) परि त्वा गिर्व्वणो गिरः । एतच्चामन्त्रितत्वादेवानुदात्तं प्राप्तं यत्पुनरुच्यते तदामन्त्रितानभिज्ञस्यापि प्रत्ययार्थम् ॥

## अग्ने घृतेनेति च ॥ ११ ॥

अग्ने पूर्वं घृतेनेत्येतत्पदमनुदात्तं भवति । यथा (५) अग्ने घृतेनाहुत । अग्ने पूर्वमिति किम् । (६) अङ्गिरो घृतेन वर्द्धयामसि ॥

## प्रचिकितश्च ॥ १२ ॥

प्रपूर्वं चिकित इत्येतत्पदमनुदात्तं भवति । यथा (७)

---

(१) २३ । २९ ॥

(२) ८ । ४० । असि शिवा सुषदेत्यादिसूत्रविहितवर्ज्यम् । अनुदात्तमाख्यातमामन्त्रितवदित्यस्यैवायं प्रपञ्चः ॥

(३) ३ । ५८ ॥

(४) ५ । २९ ॥

(५) १७ । ५० ॥

(६) ३ । ३ ॥

(७) १९ । ५२ । ननु पदपूर्वमामन्त्रितमनानार्थेऽपादादावित्युक्तत्वान्न वाच्यमेत-

त्वᳪं॰ सोम प्रचिकितो मनीषा । प्रपूर्वमिति किम् । अन्यपदपूर्वमनुदात्तं न भवति । एतदप्यामन्त्रितत्वादेवानुदात्तं मन्दधीप्रतिपत्त्यर्थमुच्यते ॥

एनोऽपापे ॥ १३ ॥

एन इत्येतत्पदमपापे वाच्येऽनुदात्तं भवति । अवशिष्टं चैतत्प्रातिपदिकमात्रं सर्वलिङ्गं गृह्यते पुल्लिङ्गं भवति यथा (१) उदेनमुत्तरान्नय, स्त्रीलिङ्गं भवति यथा (२) मैनान्तपसा माभिषाऽभि शोचीः, (३) नपुंसके भवति यथा । (४) मातेव पुत्रं बिभृताप्स्वेनत् ।

दिति चेत् । श्रुतौ । इन्द्रोणेर्वो विशो गिर्वणाः । क्षत्रमेवैतद्विभाषा परिवृणोति । तादिदं विशा परिवृतमिति काण्वपाठात् । माध्यन्दिनपाठे तु विशो गिर इति । गिर्व्वणशब्देन व्यत्ययेन प्रथमाबहुवचनस्थाने द्वितीयाबहुवचनमिवाभाति । सान्तस्य प्रथमैकवचनं सम्बुद्ध्यन्तं च । सन्देहे सम्बुद्ध्यन्तमेवेदम् । यतः परित्वेति मन्त्रस्य सदःकरणे विनियुक्तत्वात् । इन्द्रसद इत्यभिधानादिन्द्रो गिर्वण इति सम्बोद्ध्यते । प्रमन्महे शवसानाय शूषमाङ्गूषं गिर्वणसे अङ्गिरस्वदितीन्द्रवाचकस्य गिर्वणशब्दस्य दर्शनात् । हे गिर्वण इन्द्र । इन्द्रो गिर्वेति श्रुतेः । इमा गिरः ऋग्यजुःसामलक्षणा वाचः विशो मरुतः त्वा परिभवन्तु स्तोतुं परिगृह्णन्तु सेवितुं वा विश्वतः सर्वतः परिभवन्तु कीदृशा अनुवृद्धयः इन्द्रमनुवृद्धिर्येषामित्यनुवृद्धयः कीदृशं त्वां वृद्धायुं वृद्धश्चासावायुश्चेति आयुर्मनुष्यः महापुरुष इत्यर्थः । मनुष्यादिव्यवहारार्थं गिरः सम्भवा इति श्रुतितात्पर्य्येण क्षत्रमेवैतद्विशा परिवृणोति तादिदं क्षत्रं विशा परिवृतमित्युक्तम् ॥

(१) १७ । ५० ॥

(२) १२ । १५ ॥

(३) नपुंसकमिति 'ष' पुस्तकपाठान्तरम् ॥

(४) १२ । ३५ ॥

अपाप इति किम् । (१) देवकृतस्यैनसोऽवयजनमसि, (२) यद्देनश्चकृमा वयम् ॥ (३)

इह पूर्व्वं० श्रुतम् ॥ १४ ॥

इह पूर्वं श्रुतमित्येतदनुदात्तम्भवति । यथा (४) ममेदिह श्रुतं० हवम् । इह पूर्व्वमिति किम् । (५) श्रुतम्मे मित्रावरुणा हवेमा । एतद्याख्यातत्वादनुदात्तं मन्दधीप्रतिपत्त्यर्थमुच्यते ॥

मन्ये पदपूर्व्वं० सर्वत्र ॥ १५ ॥

मन्ये इत्येतत्पदं पदपूर्वं अनुदात्तं भवति सर्वत्र (६) यथा (७) अग्निं० होतारं मन्ये दास्वन्तम् । आख्यातत्वादाख्यातवद्योगादिभिः स्वरविकारो यः

---

(१) ८ । १३ ॥

(२) ३ । ४५ ॥

(३) द्वितीयाटौस्स्वेन इति वच्छब्दमात्रस्यानुकरणं लिङ्गाद्यविवक्षया तेन सर्वलिङ्गं सर्ववचनं च गृह्यते अनुदेशवाचीत्यर्थः ॥

(४) ७ । ९ । श्रुतमिति कृदन्तादित्यपि सम्भवात् एतस्य आख्यातत्वादनुदात्तमाख्यातमित्यनेनानुदात्तत्वे सिद्धे विधानं ज्ञापकम् । श्रुधातोराख्यातस्य नानुदात्तत्वम् । तेन वरुण, श्रुधी, हवमित्यस्य न निघातः ॥

(५) ७ । ९ ॥

(६) सर्वत्रेति यद्वृत्तोपपदाच्चेति निषेधबाधनार्थम् । १५ । ४१ । तम्मन्ये पः) ॥

(७) १५ । ४७ ॥

प्राप्तः सोऽनेन सर्वत्र ग्रहणेन निषिध्यते अपदपूर्व्वस्य स्थाप्यते ॥

वा च कमु चित्समस्माद् घ ह स्म त्व ईम्मर्य्या अरे स्विन्निपाताश्चे-त् ॥ १६ ॥

वा च कम् उ चित् । समस्मात् । घ । ह । स्म । त्व ईम् । मर्य्याः । अरे । स्वित् । एतानि पदानि अनु-दात्तानि भवन्ति यदि निपातानि भवन्ति । असत्त्ववच-नानि भवन्तीत्यर्थः । वा यथा । (१) वातो वा मनो वा । च यथा (२) अग्निश्च पृथिवी च सन्नते । कं य-था । (३) इमानु कं भुवना सीषधाम, उ यथा (४) यऽ उ संभूत्याᳬ रताः, । चिद्यथा । (५) उतापवक्ता हृदया विधश्चित्, । समस्माद्यथा । (६) उरुष्या णोऽ अघायतः समस्मात्, घ (७) यथा । आ घा येऽ अग्निमि-

(१) ९ । ७ ॥
(२) २६ । १ ॥
(३) २५ । ४६ ॥
(४) ४० । ९ ॥
(५) ८ । २३ ॥
(६) ३ । २६ ॥
(७) ७ । ३२ ॥

न्धतें । ह यथा (१) दधे ह गर्भमृत्वियम् । स्म यथा । (२) अस्ति हि ष्मा ते शुष्मिन्नवया:, त्वो यथा । (३) पीयति त्वोऽअनु त्वो गृणाति, ईम् यथा । (४) का ऽईमरे पिशङ्गिला । मर्य्याः यथा । (५) आविर्म्म-र्य्याऽ आवित्तो ऽअग्निर्गृहपति: । अरे यथा । (६) अजारे पिशङ्गिला । स्विद्यथा । (७) अधः स्विदासी-३दुपरि स्विदासी३त् । निपाता इति किम् । (८) चि-दसि मनासि (९) ॥

# पदपूर्वमामन्त्रितमनानार्थे पादादौ ॥ १७ ॥

पदपूर्वमामन्त्रितं यत् पदं तदनुदात्तं भवति । यदि तन्नानाभूतस्यार्थस्याभिधायकन्न भवति । यदि तत्

(१) २३ । ६३ ॥
(२) ३ । ४६ ॥
(३) १२ । ४२ ॥
(४) २३ । ५५ ॥
(५) १० । ९ ॥
(६) २३ । ५७ ॥
(७) ३३ । ७४ ॥
(८) ४ । १९ ॥
(९) निपाता आद्युदात्ता इत्येतत्सूत्रबाधनार्थमिदं सूत्रमुक्तम् ॥

-द्विवचनबहुवचनेनारभ्यत इत्यर्थः । (१) यदि च पादादौ न भवति पदपूर्वं भवति यथा । (२) त्वमग्ने व्रतपाऽ असि । (३) व्ययᳫँ सोम व्रते तव । अनानार्थ इति किम् । (४) मित्रस्य मा चक्षुषेक्षध्वमग्नयः, (५) आदित्यानां पत्वान्विहि देवाः । अपादादाविति किम् । (६) या वां कशा मधुमत्यश्विना । (७) सᳫँ-समिद्युवसे वृषन्नग्ने ॥

## तेनानन्तरा षष्ठ्येकपदवत् ॥ १८ ॥

तेनामन्त्रितेनाव्यवहिता षष्ठ्येकपदवद् भवति । आनन्तर्यं चेह देशकृतमर्थकृतं च गृह्यते । देशकृतं पुरस्तादुपरिष्टाद्वा षष्ठ्यन्तं पदमामन्त्रितस्य । अर्थकृतमेकार्थीभावः । एतदुक्तं भवति । यदि तत्षष्ठ्यन्तमामन्त्रितस्य विशेषणं भवति । अथैकपदवत्स्वरो भवति । एतदुक्तं भवति यदि षष्ठ्यन्तं वाक्यादौ पादादौ वा न भवति पदपूर्वं भवति अथ तदप्यनुदात्तं भवति । अ-

(१) यदि तत्प्रभृत्यन्यद्वाक्यन्नारभ्यत्य इत्यर्थः इति 'ग' पुस्तकपाठः ॥
(२) ४ । १६ ॥
(३) ३ । ५६ ॥
(४) ५ । ३४ ॥
(५) २२ । १९ ॥
(६) ७ । ११ । पादग्रहणादृक्ष्वेव । यजुष्षु वाक्यादिर्ज्ञेयः ॥
(७) १५ । ३० ॥

तोऽन्यथात्वे आद्युदात्तं भवति । यथा (१) । अपान्नपात् । देवीरापो ऽअपान्नपात् । ऋषीणान्नपात् यथा । (२) ऋषीणान्नपादवृणीत । (३) विश्वासां भुवां पते, (४) उत्तिष्ठ ब्रह्मणस्पते । अनन्तरेति किं । (५) ब्रह्मणस्पते त्वमस्येत्यत्र एकपदवदिति च वदिति "व्युपदेशादन्यत्राद्युदात्तत्वं षष्ठ्या (६) भवति यथा । (७) ऊर्जो नपाज्जातवेद इत्यत्र ऊर्क्शब्दस्य षष्ठ्यन्तस्य तेनानन्तरा षष्ठ्येकपदवदित्यनेन सूत्रेणामन्त्रितस्यानन्तरा षष्ठ्येकपदवत्स्वरं लभते इत्येतदुक्तं भवति ॥ अधुनाऽऽमन्त्रितेन सह षष्ठ्या यत्रैकार्थीभावो न भवति तत्प्रत्युदाहरणभूतं सूत्रं शिष्यभ्रान्तिव्युदासार्थं स्वयमेव सूत्रकारः पठति ॥

न पृथिवि देवयजन्योषध्या देव भूरेः पवित्रपते पवित्रपूतस्यापान्नपान्नृणान्नृपते सोमाग्नेः सोमेन्द्रस्य सोम

(१) ६ । २७ ॥
(२) २१ । ६१ ॥
(३) ३७ । १८ ॥
(४) ३४ । ५६ ॥
(५) ३४ । ५८ ॥
(६) वत्युपदेशादाद्युदात्तत्वं षष्ठ्यन्तस्य इति 'घ' पुस्तकपाठः ॥
(७) १२ । १०८ ॥

सुवीर्य्यस्य सोम विश्वेषां देवानां प्रजापते यस्य यस्य देवाग्ने तवाग्ने व्वाजस्याग्ने व्वरुणस्यापो ऽअस्माकम् ॥ १९ ॥

पृथिवि देवयजन्योषध्याः, देव भूरेः । पवित्रपते पवित्रपूतस्य । अपां नपात् । नृणां नृपते । सोमाग्नेः । सोमेन्द्रस्य । सोम सुवीर्य्यस्य, सोम विश्वेषां देवानाम् । प्रजापते यस्य, यस्य देव । अग्ने तव । अग्ने व्वाजस्य । अग्ने व्वरुणस्य । आपो ऽ अस्माकम् । एतेषामामन्त्रितानां याऽनन्तरा षष्ठी साऽनेकार्थीभावान्नैकपदवत्स्वरं लभते । यथा (१) पृथिवि देवयजनी । पृथिवि देवयजन्योषध्यास्ते । देव भूरेर्यथा । (२) व्वामस्य हि क्षयस्य देव भूरेः । पवित्रपते पवित्रपूतस्य यथा । (३) तस्य ते पवित्रपते पवित्रपूतस्य । अपान्नपाद्यथा । (४) अपान्नपात्प्रतिरक्षन्नसुर्य्यम् । नृणान्नृ-

(१) १ । २५ ॥
(२) ८ । ६ ॥
(३) ४ । ४ ॥
(४) ८ । २४ ॥

पते यथा । (१) त्वन्नृणान्नृपते जायसे शुचिः, सोमाग्न्योर्यथा । (२) उशिक् त्वं देव सोमाग्नेः । सोमेन्द्रस्य यथा । (३) वशी त्वं देव सोमेन्द्रस्य । सोम सुवीर्य्यस्य यथा । (४) अच्छिन्नस्य ते देव सोम सुवीर्य्यस्य । सोम विश्वेषां देवानां यथा । (५) अस्मात्सखा त्वं देव सोम विश्वेषां देवानाम् । प्रजापते यस्य यथा । (६) स नो भुवनस्य पते प्रजापते यस्य । यस्य यथा, (७) यस्य देव दधिषे पूर्वपेयम् । अग्ने तव यथा । (८) अग्ने तव श्रवो वयः । अग्ने वाजस्य यथा । (९) अग्ने वाजस्य गोमतः । अग्ने वरुणस्य यथा । (१०) त्वन्नो अग्ने वरुणस्य विद्वान् । आपो अस्माकं यथा । (११) आपो अस्माकमन्तरुदरे सुशेवाः । एवमादी-

(१) ११ । २७ ॥
(२) ८ । ५० ॥
(३) ८ । ५० ॥
(४) ७ । १४ ॥
(५) ८ । ५० ॥
(६) १८ । ४४ ॥
(७) ७ । ७ ॥
(८) १२ । १०६ ॥
(९) १५ । ३५ ॥
(१०) २१ । ३ ॥
(११) ४ । १२ ॥

न्यन्यान्यपि प्रत्युदाहरणानि द्रष्टव्यानि, यथा । (१) य-
श्चौषधीः प्रसर्प्पथ ॥

सुमङ्गल सत्यराजन्विकिरिद्र विलो-
हित दरिद्र नीललोहित श्रेयस्कर भू-
यस्कराम्बेऽअम्बिकेऽम्बालिके शर-
व्व्ये ब्रह्म्म सꣳशिते मरुतोऽअश्वि-
ना युव्व्ये गव्व्ये द्यावापृथिवीऽउरो
ऽअग्नाऽइ पत्नीवँल्लाजीँश्छाचीँ-
न्मीढुष्टम शिवतम सहस्राक्ष शतेषुधे
व्वसुपते व्वसुदावन् ॥ २० ॥

सुमङ्गल सत्यराजन् । विकिरिद्र विलोहित । द-
रिद्र नीललोहित, श्रेयस्कर, भूयस्कर । अम्बे ऽअम्बि-
केऽम्बालिके । शरव्ये ब्रह्म सꣳशिते । मरुतोऽ अ-
श्विना । युव्ये गव्ये । द्यावापृथिवीऽ उरो । अग्ना इइ
पत्नीवन् । लाजी३न् । शाची३न् । मीढुष्टम शिवत-
म । सहस्राक्ष शतेषुधे, व्वसुपते व्वसुदावन् । एता-

(१) १२ । ८६ ॥

न्यामन्त्रितानि, नानुदात्तानि (१) भवन्ति । पदपूर्व-मित्यस्यापवादः । सुमङ्गल सत्यराजन्यथा (२) सुश्लोक सुमङ्गल सत्यराजन् । विकिरिद्र विलोहित यथा । (३) विकिरिद्र विलोहित नमस्ते । दरिद्र नीललोहित यथा । (४) अन्धसस्पते दरिद्र नीललोहित । अत्र सुमङ्गलविकिरिद्रशब्दस्य पादादित्वादाद्युदात्तत्वं सिद्धमेव इति तद्विशेषणार्थं द्वितीयपदस्योच्यते । एवं सर्वत्रैतज्जातीयकेषु द्विपदेषु प्रयोजनं द्रष्टव्यम् । श्रेयस्कर भूयस्कर यथा । (५) बट्कार श्रेयस्कर भूयस्कर । अम्बे अम्बिके यथा । (६) अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन, शरव्ये ब्रह्म सꣳशिते यथा । (७) परापत शरव्ये ब्रह्म सꣳशिते । मरुतोऽश्विना यथा । (८) इता मरुतोऽश्विना । यव्ये गव्ये यथा । (९) यु-

(१) आद्युदात्तानि भवन्तीत्यर्थः । पादादेराद्युदात्तत्वे सिद्धे उत्तरार्थयोगकरणम् । पाणिनिनाऽपि उक्तमामन्त्रितं पूर्वमविद्यमानवदिति प्रतिपादितम् ॥

(२) २० । ४ ॥

(३) १६ । ५२ ॥

(४) १६ । ४७ ॥

(५) १० । २८ ॥

(६) २३ । १८ ॥

(७) १७ । ४५ ॥

(८) ३३ । ४७ ॥

(९) २३ । ८ । एतानि निपात्यन्ते समूहार्थे । यवमयः समूह उक्तो धानाः सर्वेमावृत्याहुतस्य शेषस्याश्वाय प्रदाने विनियुक्तं निपातनत्वादाद्युदात्तत्वम् ॥

व्ये गव्यं ऽएतदन्नमत्त देवाः, द्यावापृथिवीऽ उरो यथा। (१) द्यावापृथिवी ऽ उरो ऽअन्तरिक्ष। अग्नाऽ ३ इ पत्नीवन्यथा। (२) अग्नाऽ३ इ पत्नीवन्त्सजूः। लाजी-३न् शाचीउन् यथा। (३) भूर्भुवः स्वर्लाजी ३ञ्छाची-३न्। मीढुष्टम शिवतम यथा। (४) मीढुष्टम शिव-तम शिवो नः। सहस्राक्ष शतेषुधे यथा। (५) धनु-ष्ट्वꣳ सहस्राक्ष शतेषुधे। व्वसुपते व्वसुदावन्यथा। (६) मघवा व्वसुपते व्वसुदावन्॥

इडोत्तराणि नव स्वानोत्तराणि ष-डग्न्युत्तराणि चत्वारि भगोत्तराणि चेन्द्रोत्तरमेकꣳ सिनीवाल्युत्तरञ्च-प्रजापतये ब्रह्मन्निति च ॥२१॥

---

(१) ४ । ७ ॥

(२) ८ । १० । सर्वमग्ना३इ लाजी ३ञ्छाची ३नितिसर्वोदात्तस्य प्लुतस्य च वक्ष्यमाणत्वात् । अग्ना३इ पत्नीवन्निति आमन्त्रितत्वादत्र पाठः । आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्य इति वार्त्तिकेन एचोऽप्रगृह्यस्याऽदूराद्धूते पूर्वस्यार्द्धस्याऽऽऽदुत्तर-स्येदुतौ । इत्यनेन पाणिन्युक्तसूत्रेण च अग्ना ३इ इत्यस्य पदस्य सिद्धिः ॥

(३) २३ । ८ ॥

(४) १६ । ५१ ॥

(५) १६ । १३ ॥

(६) १२ । ४३ ॥

इडोत्तराणि नवामन्त्रितानि पदान्याद्युदात्तानि भवन्ति । यथा । (१) इडे, रन्ते । हव्ये, काम्ये । चन्द्रे, ज्योते । अदिति । सरस्वति । महि । विश्रुति । स्वानोत्तराणि षडामन्त्रितानि पदान्याद्युदात्तानि भवन्ति । यथा । (२) स्वान । भ्राज । अङ्घारे । बम्भारे । हस्त । सुहस्त । कृशानो । अग्न्युत्तराणि चत्वार्य्यामन्त्रितानि पदान्याद्युदात्तानि भवन्ति । यथा (३) अग्ने । इन्द्र । वरुण । मित्र । देवाः, भगोत्तराणि च । चशब्दाच्चत्वार्य्येवामन्त्रितान्याद्युदात्तानि भवन्ति । यथा । (४) भग । प्रणेतः । भग सत्यराधः । भग । इन्द्रोत्तरमेकं पदमाद्युदात्तं भवति यथा (५) इन्द्र । गोमन् । सिनीवाल्युत्तरञ्च । च शब्दादेकमेवामन्त्रितमाद्युदात्तं भवति। यथा (६) सिनीवालि पृथुष्टुके । प्रजापतये ब्रह्मन्निति च । अत्र ब्रह्मन्नित्यामन्त्रितमाद्युदात्तं भवति । यथा (७) प्रजापतये ब्रह्म-

(१) ८ । ४३ । कारावानां तु हव्योत्तराणीति ज्ञेयम् ॥
(२) ४ । २७ ॥
(३) ३३ । ४८ ॥
(४) ३४ । ३६ ॥
(५) २६ । ४ ॥
(६) ३४ । १० ॥
(७) २२ । ४ । एकं सिनीवाल्युत्तरमित्येकशब्देऽनुवर्त्तमानेऽपि पुनरेकशब्दग्रह-

न्नम्र्स्वम् ॥

## भूतिराद्युदात्तम् ॥ २२ ॥

अनुदात्ताधिकारो निवृत्तः । इत उत्तरमाद्युदात्ताधिकारः प्रवृत्तः, भूतिरित्येतत्पदमाद्युदात्तं भवति यथा (१) । भूत्यै जागरणम् । (२) नमो भूत्यै येदम् । भूतिरिति किम् । (३) भूतं च (४) मे भविष्यच्च मे ॥

## कदा न रिष्येम पूर्व्वम् ॥ २३ ॥

कदेत्येतत्पदमाद्युदात्तं भवति । न रिष्येम पूर्व्वं चेद्भवति यथा (५) । न रिष्येम कदा चन । न रिष्येम पूर्वमिति किम् (६) । कदा चन स्तरीरसि ॥

## आमन्त्रितञ्च ॥ २४ ॥

---

णेन ज्ञापयत्याब्रह्मन्निति क्वचिदेकशब्दो न पठ्यते तदा आब्रह्मन्निति ब्रह्मशब्दः सप्तम्यन्तो "निशब्दो बहुल" मिति सूत्रकृदुक्तेः । आ राष्ट्रे राजन्य इत्युत्तरवाक्यनिदर्शनात् । "ब्राह्मणऽ एव ब्रह्मवर्च्चसन्दधाति योषित्येव रूपं दधाति" ब्राह्मणे इत्युक्तेश्च । इतरथा एतद् ब्रह्मन्निति वत्स्यात् ॥

(१) ३० । १७ ॥

(२) १२ । ६५ ॥

(३) १८ । ११ ॥

(४) भूतिरिति प्रथमानिर्द्देशात्सार्वविभक्तिको निर्देशः ॥

(५) ३४ । ४१ ॥

(६) ३ । ३२ ॥

आमन्त्रितमाद्युदात्तम्भवति । यस्यामन्त्रितस्याधस्तात्स्वरो न विहितः । कस्य चाधस्तात्स्वरो न विहितः । पदपूर्व्वं यन्न भवति । पादादौ वाक्यादौ वा यद्भवति तदाद्युदात्तं भवति। अपदपूर्व्वम्भवति यथा (१)। अग्ने गृहपते । वाक्यादौ भवति यथा (२) । अग्नय: सगरा: (३) । देवा आशा पाला: । पादादौ भवति यथा (४)। या वाङ्कशा मधुमत्यश्विना (५) । विप्रस्वेभि: सोम्यम्मध्वग्ने। सुमङ्गलादि तु निपातितमेव ॥

## कृष्णो मृगसंय्योगे ॥ २५ ॥

कृष्णशब्दो मृगवचन आद्युदात्तो भवति। यथा। (६) कृष्णोऽस्याखरेष्ठः। (७) कृष्णो रात्र्या ऽक्षचो जतूः। मृगसंयोग इति किम् । (८) श्वा कृष्णः कर्णो गर्द्दभः। अत्र कृष्णशब्दो वर्णवचनः वर्णविशेषाभिमतत्वात् ॥

## व्ययवांश्चान्तः ॥ २६ ॥

---

(१) ३ । ३८ ॥
(२) ५ । ३४ ॥
(३) २२ । १९ ॥
(४) ७ । ११ ॥
(५) ३३ । १० ॥
(६) २ । १ ॥
(७) २४ । ३६ ॥
(८) २४ । ४० ॥

अन्तःशब्दो द्विविधः व्ययवानव्ययवांश्च यस्य विभक्त्यादिभिर्विकारो न क्रियते सोऽव्ययवान् । तथा चोक्तम् । सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययमिति । यस्य पुनर्विभक्त्यादिभिर्विकारः क्रियते स व्ययवान् । स चाद्युदात्तो भवति । यथा (१) । समुद्रश्च मध्यं चान्तश्च (२) । इयं वेदिः परो अन्तः पृथिव्याः । व्ययवानिति किम् । (३) अन्तर्यच्छ मघवन् ॥

## परः प्रधाने ॥ २७ ॥

परशब्दः प्रधानवचनः अपरिमितवचन आद्युदात्तो भवति । यथा । (४) यस्मान्न जातः परो अन्योऽअस्ति । (५) इयं वेदिः परः । प्रधान इति किम् । (६) परो दिवा पर एना पृथिव्या ॥

## मात्रा च परिमाणे ॥ २८ ॥

मात्राशब्दश्च परिमाणवचन आद्युदात्तो भवति ।

---

(१) १७ । २ ॥
(२) २३ । ६२ ॥
(३) ७ । ४ ॥
(४) ८ । ३६ ॥
(५) २३ । ६२ ॥
(६) १७ । २९ ॥

यथा । (१) कस्य माता न विद्यते । (२) गोस्तु माता न विद्यते । परिमाण इति किम् । (३) विभूर्माता प्रभूः पिता । अत्र मातृशब्दस्य सम्बन्धिवचनस्य तृतीयान्तस्यैतद्रूपं भवति । अतः परिमाणवाची न भवति ॥

## दक्षिणा च ॥ २९ ॥

दक्षिणाशब्दआद्युदात्तो भवति । यथा । (४) तस्य दक्षिणाऽअप्सरसः । (५) दक्षिणा यज्ञः पुरऽएतु सोमः (६) ॥

## न दश विश्वकर्म्मा निषद्येन्द्रस्य पातु सदः सद्भ्येषु ॥ ३० ॥

दश विश्वकर्म्मा निषद्य । इन्द्रस्य । पातु । सदः । सद्भ्यः । एतेषु परभूतेषु दक्षिणाशब्द आद्युदात्तो न भवति । दश (७) यथा । दश दक्षिणा दश प्रती-

(१) २३ । ४७ ॥
(२) २३ । ४८ ॥
(३) २२ । १९ ॥
(४) १८ । ४२ ॥
(५) १७ । ४० ॥
(६) चशब्दोऽप्यर्थे ॥
(७) १६ । ६४ ॥

र्वी॑ः । विश्वकर्मा यथा । (१) अयं द॑क्षिणा विश्वक॑र्मा । निषद्य यथा । (२) आच्या जानु॑ दक्षिणतो नि॑षद्य । इन्द्रस्य यथा । (३) पुत्रव॑ती दक्षिणत ऽइन्द्र॑स्याधि॑पत्ये । पातु यथा । (४) मनो॑जवास्त्वा पितृभि॑र्दक्षिणतः पा॑तु । सदः यथा । (५) यमने॑त्रा दक्षिणासद॑ः । सद्भ्यः यथा । (६) यमने॑त्रेभ्यो देवेभ्यो॑ दक्षिणासद्भ्य॑ः ॥

## कर्णः स्वाङ्गे ॥ ३१ ॥

कर्णशब्दः स्वाङ्गाभिधाय्याद्युदात्तो भवति । यथा । (७) भद्रं कर्णे॑भिः शृणुयाम देवाः । (८) श्रोत्राभ्यां कर्णौ॑ ते दनी॑मधरकण्ठेन॑ । स्वाङ्ग इति किम् । (९) श्वा कृष्णः कर्णो॑ गर्दभः ॥

---

(१) १३ । ५५ ॥
(२) १९ । ६२ ॥
(३) ३७ । १२ ॥
(४) ५ । ११ ॥
(५) ९ । ३६ ॥
(६) ९ । ३५ ॥
(७) २५ । २१ ॥
(८) २५ । २ ॥
(९) २४ । ४० ॥

## महो नपुꣳसके ॥ ३२ ॥

महश्शब्दो नपुंसकाभिधाय्याद्युदात्तो भवति । यथा । (१) महस्स्थ महो वो भक्षीय । नपुंसक इति किम् । (२) महो देवाय तदृतꣳ सपर्य्यत । (३) महोऽअग्नेः संमिधानस्य शर्म्मणि (४) ॥

## अवश्च ॥ ३३ ॥

अवःशब्दो नपुंसकवाच्याद्युदात्तो भवति यथा । (५) अग्ने तव श्रवो वयः । नपुंसक इति किम् । (६) अवश्च मे श्रुतिश्च मे ॥

## अन्धो वीर्य्ये ॥ ३४ ॥

---

(१) ३ । २० ॥

(२) ४ । ३५ ॥

(३) ३३ । १७ ॥

(४) महो देवायेत्यत्र महते देवायेति देवविशेषणत्वात्पुल्लिङ्गः । तस्माच्छान्दसत्वाच्चतुर्थ्या लुक् । महो अग्ने इत्यत्र महत अग्नेर्विशेषणीभूतो लुप्तषष्ठीको महः शब्दः पुल्लिङ्गः ॥ यद्यपि गां प्रति गमने विनियुक्तः स्त्रीलिङ्गमपेक्षते । तथापि श्रुत्या नपुंसकलिङ्गो महश्शब्दो व्याख्यातः ॥ तथा चोक्तं शतपथब्राह्मणस्य २ काण्डीयतृतीयप्रपाठकस्य २ ब्राह्मणस्य २५ कण्डिकायां यानि वो वीर्य्याणि यानि वो महाꣳसि तानि भक्षीयेति ॥

(५) १२ । १०६ ॥

(६) १८ । १ ॥

अन्धशब्दो वीर्यवचन आद्युदात्तो भवति । यथा । (१) अन्धस्थान्धो वो भक्षीय । वीर्य इति किम् । (२) स्वप्नायान्धमधर्म्माय । (३) अन्धन्तमः प्रविशन्ति ॥

## एता वर्णे ॥ ३५ ॥

एताशब्दोवर्णवचन आद्युदात्तो भवति । यथा । (४) एताऽ ऐन्द्राग्नाः । वर्ण इति किम् । (५) एता मेऽअग्न इष्टकाः ॥

## रोहितश्च केवलः ॥ ३६ ॥

रोहितशब्दश्च वर्णवचनः केवलः असमासस्थ आद्युदात्तो भवति । यथा । (६) रोहितो धूम्ररोहितः । वर्णवाचीति किम् । (७) रोहित्कुण्डृणाची गोलत्तिका । केवल इति किम् । (८) धूम्ररोहितः कर्कन्धु-

(१) ३ । २० । वीर्य्यवाची श्रुत्या व्याख्यातः ॥

(२) ३० । १० ॥

(३) ४० । ९ । प्रत्युदाहरणद्वये प्रथमोऽन्धशब्दो नेत्रविकलवचनः । द्वितीयोऽन्धशब्दो निविडार्थकः ॥

(४) २४ । ८ ॥

(५) १७ । २ ॥

(६) २४ । २ ॥

(७) २४ । ३७ । अत्र रोहितशब्दो मृगविशेषवचनः ॥

(८) २४ । २ धूम्रश्चासौ रोहितश्चेति समासघटितोऽयं न केवलः ॥

रोहितः ॥

## यन्त्री राट् ॥ ३७ ॥

यन्त्रीशब्द आद्युदात्तो भवति । राट् परश्चेद्भवति । यथा । (१) यन्त्री राट् । राट् पर इति किम् । (२) यन्त्र्यसि यमनी ॥

## ओषधीरनामन्त्रिते ॥ ३८ ॥

ओषधीशब्दोऽनामन्त्रितविषय आद्युदात्तो भवति । यथा । (३) याऽओषधीः पूर्वा जाताः । अनामन्त्रित इति किम् । (४) यस्यौषधीः प्रसर्पथ ॥

## सर्वं विश्वश्च मानुषाशाः स्वाहा व्वाजः पयो नमः ॥ ३९ ॥

सर्वं । विश्व । मानुषा । आशाः । स्वाहा । व्वाजः । पयः । नमः । एतानि पदान्याद्युदात्तानि भवन्ति । सर्वंयथा ।(५) सर्वे निमेषा जज्ञिरे । विश्वयथा । (६)

---

(१) १४ । २३ ॥

(२) तथोदाहरणम् ॥

(३) १२ । ७५ ॥

(४) १२ । ८६ ॥

(५) ३२ । २ ॥

(६) ३२ । ८ ॥

यत्र विश्वं भवत्त्येकनीडम् । मानुषा यथा । (१) दैव्यं मानुषा युगा । आशा यथा । (२) विश्वाऽ आशाः प्रमुञ्चन्मानुषीर्भियः । स्वाहा यथा । (३) हिङ्काराय स्वाहा । वाजः यथा । (४) वाजश्च मे । पयः यथा । (५) पयः पृथिव्याम् । नमः यथा । (६) नमो हिरण्यबाहवे ॥

असि शिवा सुषदा पयस्वती यत्ते मधुमतीर्व्वर्च्चस्वानोजिष्ठो भ्राजिष्ठः शुष्मिमणी भद्रवाच्च्याय वन्द्यो मेध्यो यमादित्त्यस्त्रितः सोमेन स्वसेत्येतेषु ॥ ४० ॥

शिवा । सुषदा । पयस्वती । यत्ते । मधुमतीः । वर्च्चस्वान् । ओजिष्ठ । भ्राजिष्ठ । शुष्मिणी । भद्रवाच्च्याय । वन्द्यः । मेध्यः । यमः । आदित्यः । त्रितः । सोमे-

(१) १२ । १११ ॥
(२) २७ । ७ ॥
(३) २२ । ७ ॥
(४) १८ । १ ॥
(५) १८ । ३६ ॥
(६) १६ । १७ ॥

न । स्वसा । असीत्यधस्तादनुदात्त उक्तः स एतेषु प- रभूतेषु आद्युदात्तो भवति । शिवा यथा । (१) सुक्ष्मा चासि शिवा । सुषदा यथा । (२) स्योना चासि सुष- दा । पयस्वती यथा । (३) ऊर्ज्जस्वती चासि पयस्व- ती च । यन्ते यथा । (४) द्यौरस्याम्पृथिव्यामसि यन्ते । मधुमतीर्यथा । (५) येषां भागोसि मधुमतीः । वर्च्च- स्वान्यथा । (६) त्वन्देवेष्वसि वर्च्चस्वान् । ओजिष्ठः य- था । (७) त्वन्देवेष्वस्योजिष्ठः । भ्राजिष्ठः यथा (८) त्वन्देवेष्वसि भ्राजिष्ठः । शुष्मिणी यथा । (९) सुरा त्वमसि शुष्मिणी । भद्रवाच्याय यथा । (१०) हो- तरसि भद्रवाच्याय । वन्द्यः यथा । (११) ईड्यश्चा- सि वन्द्यः । मेध्यः यथा । (१२) आशुश्चासि मेध्यश्च स-

(१) १ । २७ ॥
(२) १ । २७ ॥
(३) १ । २७ ॥
(४) ५ । ९ ॥
(५) ७ । १ ॥
(६) ८ । ३८ ॥
(७) ८ । ३८ ॥
(८) ८ । ३९ ॥
(९) १९ । ७ ॥
(१०) २१ । ६१ ॥
(११) २९ । ३ ॥
(१२) २९ । ३३ ॥

सम्प्रे । यमः यथा । (१) असि यमः । आदित्यः यथा । (२) अस्यादित्योऽ अर्वन् । त्रितः यथा । (३) असि त्रितो गुह्येन । सोमेन यथा । (४) असि सोमेन । स्वसा यथा । (५) या देवानामसि स्वसा ॥

## धनदारत्नधाभ्याञ्च ॥ ४१ ॥

धनदारत्नधाभ्याम्परोऽसिशब्द आद्युदात्तो भवति । धनदा यथा । (६) त्वꣳ हि धनदाऽ असि । रत्नधा यथा । (७) त्वꣳ हि रत्नधाऽ असि ॥

## रायोऽपोषे ॥ ४२ ॥

राय इत्येतत्पदमपोषे परे चाद्युदात्तं भवति यथा । (८) त्वे रायो मे रायः । अपोष इति किम् । (९) मा वयꣳ रायस्पोषेण वि यौष्म ॥

---

(१) २९ । १४ ॥
(२) २९ । १४ ॥
(३) २९ । १४ ॥
(४) २९ । १४ ॥
(५) ३४ । ३३ ॥
(६) ९ । २८ ॥
(७) २६ । २१ ॥
(८) ४ । २२ ॥
(९) ४ । २२ ॥

## न भागमीशिषयोः ॥ ४३ ॥

राय इत्येतत्पदं भागमीशिषयोः परयोराद्युदात्तन्न भवति । भागं यथा । (१) रायो भागम् । ईशिषे यथा । (२) राय ऽईशिषे ॥

## त्रिधा बद्धहितयोः ॥ ४४ ॥

त्रिधा शब्दो बद्धहितयोः परयोराद्युदात्तो भवति बद्धो यथा (३) त्रिधा बद्धो वृषभो रोरवीति । हितं यथा(४) त्रिधा हितं पणिभिर्गुह्यमानम् ॥

## सुकृतम्भूते ॥ ४५ ॥

सुकृतशब्दो भूताभिधाय्याद्युदात्तो भवति, यथा (५) उरुः पृथुः सुकृतः कर्तृभिर्भूत् । भूत इति किम् । सुकृतञ्च (६) मे सुकृतञ्च मे (७) ॥

## द्विरुदात्तानि ॥ ४६ ॥

---

(१) ३४ । २३ ॥

(२) १७ । ७१ । न भागेशिषयोः इति 'ग' 'घ' पुस्तकपाठः ॥

(३) १७ । ९१ ॥

(४) १७ । ९२ ॥

(५) ७ । ३९ ॥

(६) १८ । ५ ॥

(७) अयं तु न प्राणिवचनः किन्तु पुण्यवाचकः ॥

द्विरुदात्तं येषु तानि पदानि वक्ष्यन्त इति सूत्रशेषः अधिकारसूत्रमेतत् ॥

बृहस्पतिर्व्वनस्पतिर्न्नराशꣳस स्तनूनप्त्रे तनूनपान्नक्तोषासोषासानक्ता द्यावापृथिवी द्यावाक्षामा क्रतूदक्षाभ्यामेतवाऽअन्वेतवा

इति च ॥ ४७ ॥

(१) बृहस्पतिः । (२) वनस्पतिः, (३) नराशꣳसः, (४) तनूनप्त्रे (५) तनूनपात्, (६) नक्तोषासा, (७) उषासा नक्ता, (८) द्यावापृथिवी, (९) द्यावा-

(१) १७ । ४० ॥
(२) २० । ४५ ॥
(३) २० । ३७ ॥
(४) ४ । ५ ॥
(५) २० । ३७ ॥
(६) १२ । २ ॥
(७) २० । ४१ ॥
(८) १७ । २० ॥
(९) १२ । २ ॥

चामा, (१) ऋतूदक्षाभ्याम्, (२) एतवै, (३) अन्वेतवै, एतानि पदानि द्विरुदात्तानि भवन्ति अदेवताद्वन्द्वार्थ आरम्भः प्रचुराण्येवोदाहरणानि ॥

देवताद्वन्द्वानि चानामन्त्रितानि ॥४८॥

देवताद्वन्द्वानि च द्विरुदात्तानि भवन्ति आमन्त्रितानि वर्जयित्वा, यथा (४) अग्नीषोमाभ्याञ्जुष्टं गृह्णामि (५) मित्त्रावरुणाभ्यां त्वा, देवताद्वन्द्वानीति किम् (६) ऋक्सामयोः शिल्पे (७) दीक्षातपसोस्तनूरसि, अनामन्त्रितानीति किम् (८) तान्वेनं मित्त्रावरुणा, च शब्दादधस्तनसूत्रविहितान्यनामन्त्रितानि द्विरुदात्तानि भवन्ति आमन्त्रितानि त्वामन्त्रितस्वरँल्लभन्ते यथा (९) बृहस्पते ऽअति यदर्यो ऽअ-

(१) ७ । २७ ॥
(२) १७ । ९७ ॥
(३) ८ । २३ । अविशेषात्सर्वविभक्त्यन्तानि क्रमेण द्रष्टव्यान्युदाहरणानि ॥ परन्तु तनूनपाच्छब्दो द्विरुदात्तउक्तः स च पथशब्दे परे न द्विरुदात्तः स्यात् । यथा २८ । २९ । नतूनपात्पथ ऽऋतस्य यानान् इति ॥
(४) २ । १० ॥
(५) ७ । २३ ॥
(६) ४ । ९ ॥
(७) ४ । २ ॥
(८) ७ । १० ॥
(९) २६ । ३ ॥

हीत् (१) तनूनपात्पथऽ ऋतस्य यानान् ॥

इन्द्राबृहस्पतिभ्यामिन्द्राबृहस्पती
इति त्रीणि ॥ ४९ ॥

इन्द्राबृहस्पतिभ्यामिन्द्राबृहस्पती इत्येतयोः पदयोस्त्रीण्यक्षराण्युदात्तानि भवन्ति, इन्द्राबृहस्पतिभ्यां यथा (२) इन्द्राबृहस्पतिभ्यां त्वा देवाव्यँय्यज्ञस्य। इन्द्राबृहस्पती यथा (३) इन्द्राबृहस्पती ऽऊरुभ्याम् (४) ॥

सर्वमग्नाऽ३इ लाजी३ञ्छाची३निति
त्रिमात्राणि च ॥ ५० ॥

अग्नाऽइ लाजी३न् शाची३न् एतानि पदानि सर्वोदात्तानि भवन्ति त्रिमात्राणि च त्रीण्यक्षराण्येतेषु पदेषु भवन्ति, यथा (५) अग्नाऽ ३इ इह आकारस्त्रिमात्रः (६) लाजी३निहेकारः शाची३निहेकारः ॥

---

(१) २८ । २६ ॥
(२) ७ । २३ ॥
(३) २५ । ६ ॥
(४) इति शब्द उदाहरणद्वयसमाप्त्यर्थः । प्रायोऽन्यस्यालाभादिति ॥
(५) ८ । १० ॥
(६) २३ । ८ ॥

## प्रणवश्च ॥५१॥

प्रणवश्च सर्वोदात्तो भवति त्रिमात्रश्च यथा (१) ओ३म् खम्ब्रह्म ॥

## विवेशा३ इति चानुदात्तम् ॥५२॥

विवेशा३ इत्येतत्पदं सर्वानुदात्तं भवति अन्त्यमक्षरं चास्य त्रिमात्रं भवति यथा (२) तेषु विश्वं भुवनमाविवेशा३, इहाकारस्त्रिमात्रः, अनुदात्तमिति किम्, (३) विश्वम्भुवनमाविवेश ॥

## आसीदिति चोत्तरँविचारे ॥५३॥

आसीदित्येतत्पदं विचारे वर्त्तमानमुत्तरं सर्वानुदात्तं भवति तस्य चान्त्यमक्षरं त्रिमात्रं भवति यथा (४) उपरि स्विदासी३त्, इहाकारस्त्रिमात्रः, विचार इति किम्। (५) का स्विदासीत् ॥

---

(१) ४० । अन्त्ये ॥

(२) २३ । ४९ ॥

(३) २३ । ५० । उत्तरं पूर्वं इति पदद्वयं उत्तरसूत्राभ्यामपकृष्यते ॥ हिरण्यगर्भ-इत्यध्याये विवेशपदस्य चतुर्वारं एकस्मिन् सन्दर्भे पठितत्वात्पूर्वत्वस्य सापेक्षत्वात्तदध्यायस्थस्यैव प्लुतत्वम्। तेन अन्यत्र अवराँ२ऽआ विवेश। अभि सँविवेश इत्यादौ न भवति ॥

(४) ३३ । ७४ ॥

(५) २३ । ११ ॥

## पूर्व्वमन्तोदात्तम् ॥ ५४ ॥

आसीदित्येतत्पदं पूर्व्वं विचारे वर्त्तमानमन्तोदात्तं भवति त्रिमात्रं चास्यान्त्यमक्षरं भवति यथा (१) अधः स्विदासी३त् इहेकारस्त्रिमात्रः ॥

## द्वन्द्वञ्चेन्द्रसोमपूर्व्वं पूषाग्निवायुषु ॥ ५५ ॥

देवताद्वन्द्वं च इन्द्रसोमपूर्व्वं पूषाग्निवायुषु परभूतेष्वन्तोदात्तं भवति, द्विरुदात्तापवादः, इन्द्रपूर्व्वं यथा (२) इन्द्रापूष्णोः प्रियमप्येति पाथः, (३) इन्द्राग्न्योरुज्जितिमनूज्जेषम् (४) इन्द्रवायुभ्यां त्वैष ते योनिः। सोमपूर्वस्य यथासम्भवमुदाहरणम् (५) बाह्वोः सौमापौष्णः ॥

## अग्निश्चेन्द्रे ॥ ५६ ॥

अग्निपूर्व्वश्चेन्द्रोत्तरपदो देवताद्वन्द्वसमासोऽन्तो-

---

(१) ३३ । ७४ । इत उत्तरं अन्तोदात्ताधिकारश्च द्रष्टव्यः ॥
(२) २५ । २५ ॥
(३) २ । १५ ॥
(४) ७ । ८ ॥
(५) २४ । १ ॥

दात्तो भवति यथा (१) अग्नीन्द्राबृभ्यांन्वैषते योनिंः ॥

## ऋक्वसाम्नि च ॥५७॥

ऋकपूर्व्वपदः सामशब्दोत्तरपदश्च द्वन्द्वसमासोऽन्तोदात्तो भवति यथा (२) ऋक्सामाभ्याॅं सन्तरंन्तः ॥

## यतो गतौ ॥५८॥

यत इत्येतत्पदं गतौ वर्तमानमन्तोदात्तं भवति यथा (३) स्वर्य्यंतो धिया दिवंम्, इण्गतावित्यस्यैतद्रूपम्, गताविति किम् (४) यतो जातः प्रजापंतिः ॥

## पायोर्विशः ॥५९॥

पायुशब्दात्परो विशः शब्दोऽन्तोदात्तो भवति यथा (५) पायुर्व्विंशोऽ अस्याऽ अदंब्धः, पायोरिति किम् (६) इन्द्रन्दैवीर्व्विंशो मरुतः ॥

## आयुरर्य्यमोर्व्वश्यस्तिभ्यः ॥६०॥

---

(१) ७ । ३२ ॥
(२) ४ । १ ॥
(३) ११ । ३ ॥
(४) २३ । ६३ । अत्र प्रत्युदाहरणे यतः शब्दस्तासिल् प्रत्ययान्तः ॥
(५) १३ । ११ ॥
(६) १७ । ८६ ॥

आयुरित्येतत्पदम् अर्य्यमा उर्व्वशी अस्ति शब्देभ्यः परमन्तोदात्तं भवति, अर्य्यमा यथा (१) मा नो मित्रो वरुणोऽ अर्य्यमायुः, उर्व्वशी यथा (२) उर्व्वश्यस्यायुरसि, पदसंहितोदाहरणम्, अस्ति यथा (३) अध स्म ते व्रजनं कृष्णमस्ति आयोष्ट्वा, एतेभ्य इति किम् (४) आयुश्च मे जरा च मे ॥

अस्य रोचनाऽसौ बोधा मे पारम्पुरऽएतारो दिवः कोऽहन्त्वम्महीँय्य ईशऽईशानेभ्यः ॥ ६१ ॥

रोचना असौ बोधा मे पारम् पुरऽएतारः दिवः कः अहम् त्वम् महीम् यऽईशे ईशानम् एतेभ्यः परः अस्यशब्दोऽन्तोदात्तो भवति, रोचना यथा (५) अन्तश्चरति रोचनास्य, असौ यथा (६) असावस्य पिता व-

(१) २५ । २४ ॥

(२) ५ । २ । अत्र यद्यपि उर्व्वशीशब्दात्परो असिशब्दो न आयुः शब्दस्तथापि पदसंहितायां पाठादुदाहृतः ॥

(३) १५ । ६२ ॥

(४) १८ । ३ ॥

(५) ३ । ७ ॥

(६) १० । २० ॥

यशुं स्याम, बोधा मे यथा (१) बोधा मे ऽअस्य वचसो यविष्ठ, पारम् यथा (२) अगन्न्म तमसस्पारमस्य, पुरऽ एतारो यथा (३) ये ब्रह्मणः पुरऽ एतारोऽ अस्य, दिवः यथा (४) एकेनाङ्क्ेन दिवोऽ अस्य पृष्ठम्, कः यथा (५) को ऽअस्य वेद भुवनस्य नाभिम्, अहं यथा (६) वेदाहमस्य भुवनस्य नाभिम्, त्वम् यथा (७) ब्रह्मणस्पते त्वमस्य यन्ता, महीम् यथा (८) इमान्ते धियम्प्रभरे महो महीमस्य, यऽ ईशे यथा (६) यऽ ईशे ऽअस्य द्विपदः, ईशानम् यथा (१०) ईशानमस्य जगतः ॥

प्रत्नां यज्ञस्य हविषः पाहीत्पातं मद्ध्वो यजमानस्य होतुरजरासो

(१) १२ । ४२ ॥
(२) १२ । ७३ ॥
(३) १७ । १४ ॥
(४) २३ । ५० ॥
(५) २३ । ५९ ॥
(६) २३ । ६० ॥
(७) ३४ । ५८ ॥
(८) ३३ । २९ ॥
(९) २३ । ३ ॥
(१०) २७ । ३५ ॥

## लोकेषु च ॥६२॥

प्रत्नाम् यज्ञस्य हविषः पाहि इत् पातम् मद्वः यजमानस्य होतुः अजरासः लोकः इत्येतेषु च प्रत्ययेषु अस्य शब्दोऽन्तोदात्तो भवति, प्रत्नं यथा (१) अस्य प्रत्नामनु द्युतम्, यज्ञस्य यथा (२) अस्य यज्ञस्योद्दचः, हविषः यथा (३) अस्य हविषस्त्मना यज, पाहि यथा (४) संस्वत्तमर्ठ० सुमनाऽ अस्य पाहि । इत् यथा (५) अस्येदिन्द्रो वावृधे, पातम् यथा (६) अस्य पातन्धियेषिता, मद्वः यथा (७) अस्य मद्वः पिबत, यजमानस्य यथा (८) अस्य यजमानस्य वीरो जायताम्, होतुर्यथा (९) अस्य होतुः प्रदिश्यृतस्य वाचि । अजरासो यथा (१०) अस्याजरासो दमाम्, लोकः यथा

(१) ३ । १६ ॥
(२) ४ । १० ॥
(३) ६ । ११ ॥
(४) २६ । २३ ॥
(५) ३३ । ९७ ॥
(६) ७ । ३१ ॥
(७) ९ । १८ ॥
(८) २२ । २२ ॥
(९) २८ । ११ ॥
(१०) ३३ । १ ॥

(१) अस्य लोकः सुतावतः ॥

## अनुदात्तमन्यत् ॥ ६३ ॥

अस्येत्येतत्पदमुक्तादन्यदनुदात्तं भवति, यथा (२) षडस्य विष्ठाः शतम् (३) अश्वातमस्य, पूर्ववाननुदेशइत्येतस्यैवायं प्रपञ्चः (४) ॥

## पङ्क्तिहंसयोरन्त उदात्तं आदिर्वा ॥ ६४ ॥

पङ्क्तिः शब्दस्य हंसशब्दस्य चान्त उदात्तो भवति आदिर्वा उदात्तो भवति स्वरविकल्पः, पङ्क्तिर्यथा (५) पचन्पक्तीः, हंसः यथा (६) पूष्णलूँ हंसाय ॥

## वृद्धं वृद्धिः ॥ ६५ ॥

इत्युक्तार्थम् ॥

## इति कात्यायनकृतौ प्रातिशाख्य-

(१) ३५ । १ ॥
(२) २३ । ५८ ॥
(३) ३३ । ९७ ॥
(४) इतोऽन्यदनन्वादेशस्थामित्यर्थः ॥
(५) २१ । ५९ ॥
(६) ३० । २० ॥

## सूत्रे द्वितीयोऽध्यायः ॥

इत्यानन्दपुरवास्तव्यवज्रटसुतोव्वटकृतौ (१) प्रातिशाख्यभाष्ये द्वितीयोऽध्यायः ॥

---

स्वरसंस्कारयोश्छन्दसि नियम इति प्रतिज्ञातम्, तत्र प्रथमाध्याये स्वरसंस्कारयोरेवाङ्गभूताः सञ्ज्ञाः परिभाषा उक्ताः, द्वितीये स्वरः । अधुना क्रमप्राप्तः संस्कारोऽभिधीयते लोपागमवर्णविकारप्रकृतिभावलक्षणः ॥

## सꣳहितायाम् ॥ १ ॥

इत्ययमधिकारः आसप्तमाध्यायपरिसमाप्तेः, यदित ऊर्ध्वमनुक्रमिष्यामः संहितायामित्येवं तद्वेदितव्यम् वक्ष्यति च "उदः स्तभाने लोपम्" उत् (२) स्तभान उत्तंभान तेजसा दिशऽ उद्दꣳह ॥

## अर्थः पदम् ॥ २ ॥

संहितालक्षणमुक्तम् (३) "वर्णानामेकप्राणयोगः सꣳहितेति" अधुना पदलक्षणमुच्यते अर्थाभिधायि पदम्

---

(१) 'सुतोवटकृतौ' क्वचित्पुस्तक पाठः ॥

(२) १७ । ७२ । उदः स्तभाने लोपमिति सूत्रं चतुर्थाध्यायस्थं ९४ चतुर्णवतिसङ्ख्याकम् ॥

(३) प्रा. अ. १ सू. १५८ ॥

(१) पद्यते गम्यते ज्ञायतेऽर्थोऽनेनेति पदम् यद्येवम् निपातस्यानर्थकस्य पदसञ्ज्ञा न प्राप्नोति नैष दोषः उपरिष्टादर्थभेदनिबन्धनं पदचतुष्टयं वक्ष्यति "नामाख्यातोपसर्गनिपाताश्चेति" तत्रास्य पदसञ्ज्ञा भविष्यति यथा क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् । सत्त्वाभिधायकन्नाम निपातः पादपूरण इति (२) सूत्रकारस्य त्वयमभिप्रायः पदप्रतिरूपकस्य (३) पदावयवस्य पदसञ्ज्ञा माभूदित्यतोऽर्थग्रहणं इहैव पदसञ्ज्ञा यथा स्यात् (४) गोर्व्यच्छमन्तकाय गोघातम्, इह माभूत् (५) गोधूमांश्च मे ॥

## पदान्तपदाद्योः सन्धिः ॥ २ ॥

यः कश्चिद्वैदिकशास्त्रसन्धिरुच्यते स पदान्तपदाद्योर्वेदितव्य इति, (६) ते सन्धयश्चत्वारो भवन्ति स्वरयोः,

---

(१) अर्थोऽस्ति यस्मिन्नर्थवाचकः । अक्षरसमुदायोऽक्षरं वा पदं स्यात् । अक्षरसमुदायः पदमित्यष्टमेऽध्याये वक्ष्यति । तच्चार्थवत्पदमुच्यते । न पदावयवः ॥

(२) निपाताः पादपूरणा इति 'ख' पुस्तकपाठः । तस्मान्निपातस्यापि पादपूरणार्थत्वेनार्थवत्त्वादर्थः पदमिति साधूक्तम् ॥

(३) पदसदृशस्य ॥

(४) ३० । १८ ॥

(५) १८ । १२ ॥

(६) अवग्रहयोग्ये पदे सन्धिकार्याणि 'अवग्रहः पदान्तवत्' इत्यतिदेशाद्भवन्ति । अवग्रहत्वन्नाम किं 'समासेऽवग्रहो 'ह्रस्वसमकाल' इति पञ्चमाध्यायस्थादिमसूत्रे वक्ष्यमाणरूपम् । अवग्रहणं अवग्रहः । अवान्तरपदसञ्ज्ञां सूचयितुं पदपाठकाले किञ्चित्कालमवसानमिति । याज्ञवल्क्योक्तमर्द्धमात्राकालिकं । अवग्रहे तु यः कालस्त्वर्द्ध-

व्यञ्जनयोः, स्वरव्यञ्जनयोस्तु द्विप्रकारः। पूर्वः स्वरो भवति पश्चाद्व्यञ्जनानि, व्यञ्जनानि वा पूर्वाणि भवन्ति पश्चात्स्वर इति, स्वरयोर्भवति यथा (१) आ इदम् एदम्। (२) वरुण इह वरुणेह । व्यञ्जनयोर्भवति यथा (३) सम् यौमि, संयौमि (४) सम् वपामि संवपामि, स्वरपूर्वो भवति यथा (५) इषे त्वा इषे त्वा, ऊर्ज्जे त्वा ऊर्ज्जे त्वा, व्यञ्जनपूर्वो भवति यथा (६) उत् एनम् उदेनम्, परिभाषासूत्रमेतत् ॥

## न परकालः पूर्वकाले पुनः ॥ ४ ॥

ह्यन्तराः काला इति वक्ष्यति तत्र यः परकालः सन्धिः पूर्वकाले सन्धौ सति पुनः प्राप्नुवन्न भवति यथा (७) "आकारोपधो यकारमिति, नकारस्याकारोपध-

---

मात्रा विधीयतइति। ग्रहउपादाने। अवपूर्वाद् ग्रहेर्घञो भावे ग्रहवृदृनिश्चिगमश्चेत्यप् ॥ अतिदेशत्वं नाम। अन्यत्र श्रुतस्यान्यत्रान्वयित्वम्। यानि पदद्वयसम्बन्धीनि कार्याणि तत्रैवैतस्य परिभाषासूत्रस्योपस्थितेः व्यस्तपदे सन्धिकार्य्याणि न भवन्ति। एकपदस्थानि सन्धिकार्याणि तु अवग्रहे न भवन्ति ॥

(१) ४ । १ ॥

(२) १८ । ४५ । अयमङ्कः पदपाठात् ज्ञातव्यः ॥

(३) १ । २२ ॥

(४) १ । २१ ॥

(५) १ । १ ॥

(६) १७ । ५० ॥

(७) प्रा० अ० ३ । सू० १४२ ॥

स्य यकारो विहितः स्वरे प्रत्यये, (१) मह्या२॥ऽ इन्द्र 'इति यथा (२) "कण्ठ्यपूर्वो यकारमरिफित इति, अ-वर्णपूर्वस्य विसर्ज्जनीयस्य यकारो विहितः स्वरे प्रत्यये, (३) यु॒ऽओषधीरिति ततो हिशब्दात्परं लक्षणमुक्तम् (४) "यवयोः पदान्तयोः स्वरमध्ये लोपः," ततो य-लोपे कृते हिशब्दात्पूर्वं शास्त्रं पुनः प्रवर्त्तते (५) "कण्ठ्यादिवर्णे एकारम्" "उवर्णे ओकारमिति, । त-त्प्रवर्त्तमानन्निषिध्यत इति सूत्रार्थः ॥

## ह्यन्तराः कालाः ॥ ५ ॥

कालाधिकारः हिः अन्तरा येषां सन्धिकालानां ते ह्यन्तराः कालाः कालशब्दः स्थानपर्य्यायः, उक्तमु-दाहरणम् ॥

## विसर्ज्जनीयः ॥ ६ ॥

विसर्ज्जनीयसन्धिरधिकृतइति सूत्रार्थः ॥

## चछयोः शम् ॥ ७ ॥

चकारछकारयोः प्रत्यययोर्विसर्ज्जनीयः शकारमा-

(१) ७ । ३९ ॥

(२) प्रा० अ० ४ । सू० ३६ ॥

(३) १२ । ९२ ॥

(४) प्रा० अ० ४ । सू० १२२ ॥

(५) प्रा० अ० ४ । सूत्रद्वयस्याङ्कौ ज्ञातव्यौ । ५२ । ५३ ॥

पद्यते, चकारे यथा (१) व्वाजः च मे, व्वाजश्च मे, छे यथा (२) अस्त्रीवयः छन्दः अस्त्रीवयश्छन्दः ॥

## तथयोः सम् ॥ ८ ॥

तकारथकारयोः प्रत्यययोर्विसर्ज्जनीयः सकारमापद्यते, तकारे यथा (३) आखुः ते पशुः आखुस्ते पशुः, (४) नमः ते रुद्र नमस्ते रुद्र, विसर्जनीयथकारसन्धिस्तु संहितायां न विद्यते अतो रूपोदाहरणं दीयते, कः थकारः कस्थकारः ॥

## प्रत्ययसवर्णम्मुदि शाकटायनः ॥ ९ ॥

शषसा मुत्सञ्ज्ञा उक्ताः, मुत्सञ्ज्ञकेषु परभूतेषु विसर्जनीयः परसवर्णमापद्यते शाकटायनाचार्य्यस्य मतेन, यथा (५) आशुः शिशानः आशुश्शिशानः (६) अदितिः षोडशाक्षरेण अदितिष्षोडशाक्षरेण, (७) देवो वः सविता देवो वस्सविता ॥

---

(१) १८ । १ ॥
(२) १४ । १८ ॥
(३) ३ । ५७ ॥
(४) १६ । १ ॥
(५) १७ । ३३ ॥
(६) ९ । ३४ ॥
(७) १ । १ ॥

## अविकारश्शाकल्यः शषसेषु ॥१०॥

विसर्ज्जनीयस्य विकारन्न मन्यते शाकल्यः शषसेषु परभूतेषु, यथा (१) आशुः शिशानः आशुः शिशानः, अदितिः षोडशाक्षरेण अदितिः षोडशाक्षरेण, देवो वः सविता देवो वः सविता ॥

## प्रकृत्या कखयोः पफयोश्च ॥११॥

प्रकृत्या विसर्ज्जनीयं मन्यते कखयोः पफयोश्च प्रत्ययोः शाकल्यः, कखयोर्भवति यथा (२) विष्णोः क्रमं विष्णोः क्रमं, (३) ततः खनेम, पफयोर्भवति यथा (४) देव सवितः प्र सुव देव सवितः प्र सुव, (५) याः फलिनीः याः फलिनीर्याऽअफलाः, कखयोः पफयोश्चेति पृथक्समासकरणमुत्तरार्थम् ॥

## जिह्वामूलीयोपध्मानीयौ शाकटायनः ॥१२॥

---

(१) अत्र पूर्वसूत्रोक्तोदाहरणानामङ्का द्रष्टव्याः ॥

(२) १२ । ५ ॥

(३) ११ । २२ ॥

(४) ९ । १ ॥

(५) १२ । ८९ ॥

जिह्वामूलीयोपध्मानीयौ विसर्ज्जनीयश्चापद्यते यथासङ्ख्यम् कखयोर्ज्जिह्वामूलीयमापद्यते पफयोस्तूपध्मानीयम् शाकटायनाचार्य्यस्य मतेन, कखयोर्यथा (१) विष्णोः क्रमः विष्णोः क्रमः, ततः खनेम ततः खनेम, पफयोर्यथा (२) वसोः पवित्रम् वसोः पवित्रम् (३) याः फलिनीः याः फलिनीर्य्याऽ अफलाः ॥

## लुङ्मुदि जित्परे ॥१३॥

मुत्सञ्ज्ञकाः शषसाः, जित्सञ्ज्ञका द्वौद्वौ प्रथमौ शषसाश्च, तत्र शषसेषु "प्रत्ययसवर्णमिति" विसर्ज्जनीयसन्निकृष्टाः अतइह दशैव जित्सञ्ज्ञका गृह्यन्ते, लुक् लुप्यते विसर्ज्जनीयो मुत्सञ्ज्ञके जित्परे परतः, यथा (४) अन्धः स्थ । अन्धस्थान्धो वो भक्षीय, (५) स्थालीभिः स्थालीः । स्थालीभिस्थालीराप्नोति, मुदि जित्परइति किम् (६) स्वस्ति नः तार्क्ष्यः । स्वस्ति नस्तार्क्ष्योऽ अरिष्टनेमिः स्वस्ति ॥

---

(१) पूर्वोक्तसूत्रोदाहरणानामङ्का ज्ञातव्याः ॥

(२) १ । २ ॥

(३) पूर्वोक्तसूत्रोदाहरणस्याङ्को बोध्यइति ॥

(४) ३ । २० ॥

(५) १९ । २७ ॥

(६) २५ । १९ ॥

## उपवसने पीवः ॥ १४ ॥

उपवसने (१) प्रत्यये पीवशब्दसम्बन्धी विसर्ज्जनीयो लुप्यते, यथा (२) पीवः उपवसनानाम् पीवोपवसनानाम् ॥

## सऽओषधीमयोः ॥ १५ ॥

सपदसम्बन्धी विसर्ज्जनीयो लुप्यते (३) ओषधीमयोः प्रत्यययोः, ओषधी यथा (४) सः ओषधीः सौषधीरनुरुध्यसे, इम यथा (५) सः इमाम् सेमान्नो हव्यदातिं जुषाणः ॥

## व्यञ्जने च ॥ १६ ॥

व्यञ्जने च प्रत्यये सपदसम्बन्धी विसर्ज्जनीयो लुप्य-

---

(१) पदे क्व चित् शब्दे इति (ग) (घ) पुस्तकपाठः ॥

(२) २१ । ४३ । पीवस् शब्दोऽसुन् प्रत्ययान्तः स्थूलवाची । अत्र प्रा. ४ अ. सू. ५३ । उवर्ण्णओकारमित्यनेन पूर्वपरयोः स्थाने ओकारादेशइति ॥

(३) ओषधी इमइत्येतयोः इति (ग) पुस्तकपाठः ॥

(४) १२ । ३६ । अत्र प्रा० ४ अ० सू० ५६ । सन्ध्यक्षरऐकारौकारौ, इत्यनेन पूर्वपरयोः स्थानऔकारः ॥

(५) २९ । ५४ । अत्र "कण्ठ्यपूर्व्वो यकारमरिफितइत्यनेन चतुर्थाध्यायस्थेन षट्त्रिंशत्सङ्ख्याकसूत्रेण यत्वे यवयोरिति यकारलोपे च कृते न परकालः पूर्वकाले पुनरित्यनेन च स्वरसन्धिनिषेधे प्राप्ते पुनर्विधानार्थमिदं सूत्रमेवमन्यत्राप्यूह्यम् ॥

तें, यथा (१) सः नः स नो बोधि श्रुधी हवम्, (२) सः जायसे स जायसे मत्थ्यमानः, व्यञ्जनइति किम्, (३) सः अग्निः सोऽग्निर्य्यो वसुर्ग्गृणे ॥

## स्यएष च ॥ १७ ॥

स्यएषपदयोः सम्बन्धी विसर्ज्जनीयो लुप्यते व्यञ्जनमात्रे, यथा (४) स्यः रात्थ्यः एष स्य रात्थ्यो वृषा, (५) स्यः वाजी एष स्य वाजी चिपणिम्, (६) एषः छागः एष छागः पुरोऽअश्वेन (७) ॥

## निशब्दो बहुलम् ॥ १८ ॥

निशब्दः पदान्तीयो लुप्यते बहुलम्, शृङ्गा शृङ्गाणीति प्राप्ते यथा (८) चत्वारि शृङ्गा त्रयोऽअस्य पादाः

(१) ३ । २६ ॥
(२) १५ । २८ ॥
(३) १५ । ४२ ॥
(४) २२ । १३ ॥
(५) ९ । १४ ॥
(६) २५ । २६ ॥
(७) इदं सूत्रद्वयं तथयोः समित्यादीनां बाधकम् । स्य वाजी स बोधीत्यादौ "सर्वोऽअकारओकारम्" प्रा. अ. ४ सू. ४१ इत्यनेन सूत्रेण पूर्वान्विधीन्बाधन्ते नोत्तरानिति न्यायेन च "विप्रतिषेधउत्तरं बलवदलोपे" प्रा. अ. १ सू. १५९ इत्युक्तत्वादेतस्य बाधः । मध्येऽपवादः प्राप्तः अलोपइत्युक्तत्वान्न भवतीति बोध्यम् । पा. सू. अ. ६ पा. १ सू. १३३ स्यश्छन्दसि बहुलमिति सोर्लोपो वैकल्पिकः ॥
(८) १७ । ९१ ॥

पदा पदानीति प्राप्ते यथा (१) त्रीणि पदा वि चक्रमे, बहुलग्रहणात्क्वचिन्न च लोपो भवति, यथा (२) एता तेऽअघ्न्ये नामानि, क्वचिदिकारमात्रस्य भवति, एमन् एमनीति प्राप्ते यथा (३) एमन्त्सादयामि, क्वचिन्नकारमात्रस्य भवति दुष्कर्त्तारम् निष्कर्त्तारमिति प्राप्ते यथा (४) दुष्कर्त्तारमह्वरस्य, इत्थं भूतपदाद्यन्तप्रश्नत्यर्थं बहुलग्रहणम् (५) ॥

## अनितावदध्याये ॥ १९ ॥

अस्मिन्नध्यायशेषे येऽन्तःपद आगमा विकाराश्च वक्ष्यन्ते ते अनितौ इतिकरणे परतावस्थिते न भवन्तीति सूत्रार्थः, यथा (६) श्रेयस्कर श्रेयः करेति, (७)

---

(१) ३४ । ४३ ॥

(२) ८ । ४३ ॥

(३) १३ । ५३ ॥

(४) १२ । ११० ॥

(५) कारिकायामपि । क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यतोऽपि ॥ विधेर्विधानं बहुधा समीक्ष्यचतुर्विधं बाहुलकं वदन्ति इति व्याकरणशास्त्रे बहुलशब्दस्यैव निर्वचनात् । अपरं च पाणिनिना अ. ७ पा. १ सू. ३९ "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः" इति सूत्रं विभक्तिविकारार्थं कृतम् । कात्यायनस्य लेखनं तु स्वशास्त्रीयप्रयोगदृढीकरणार्थमिति ज्ञेयम् । सिद्धान्तकौमु. वै. ६ अ. एमन्नादिषु छन्दसि पररूपं वक्तव्यमिति सर्ववैदिकसाधारणप्रयोगे भवति ॥

(६) ३ । ५८ ॥

(७) २ । १६ ॥

चक्षुष्पाः ऽ चक्षुःपाइति, (१) स्वषीम् स्वः सामिति, (२) धूर्षाह्नौ धूःसाहाविति, (३) दूडभः दुर्दभइति, (४) वनर्षदः वनसदइति, (५) अवरस्पराय अवरपरायेति (६) दुदुक्षन् दुधुक्षन्निति, (७) सुषाव सुसावेति, (८) पुरीषवाहणः पुरीषवाहनऽइति, (९) मामहानः ममहानऽइति, (१०) वृष्टिमाँ२ऽ इव वृष्टिमानिवेति, अध्यायेष्वइति किम्, (११) तवस्तरमिति तवः । तरम्, (१२) अत्रेतिकरणे परत्वावस्थितेऽपि सकारो विद्यतएव (१३)अस्यावधेःप्राग्भूतत्वात् ॥

(१) ३४ । २० ॥

(२) ४ । ३३ ॥

(३) ३ । ३६ ॥

(४) ३३ । ११ ॥

(५) ३० । १९ ॥

(६) २९ । ५५ ॥

(७) १९ । २ ॥

(८) ११ । ४४ ॥

(९) १७ । ५५ ॥

(१०) ७ । ४० ।

(११) ११ । १५ । अत्र तथयोः सामित्यनेन सकारो भवति ॥

(१२) उपस्थितं विना इतिपरत्वाऽसम्भवात् । स्थितोपस्थितस्य तु एकपदविषयत्वादन्तःपदविकारागमविषयोऽयं निषेधः । अध्याये इत्यधिकारावध्यर्थम् ॥

(१३) अस्यावधेः परभूत्वादिति 'क' पुस्तकस्य पाठइति ॥ अध्याये किम् ३० । १८ गोव्व्यच्छामिति गो । व्व्यच्छम् । इत्यादौ "स्वरे भाव्यन्तस्था"मिति सूत्रेण यकारो भवति । अयं निषेधो विकारवतः पदस्यैव स्थितोपस्थिते नान्यत्र तेन ५ । १ । रा-

## इतिवच्चर्चायाम् ॥ २० ॥

इतिकरणात्पुरतो यत्पुनः पदवचनं तच्चर्चाशब्देनोच्यते तत्रेतिवत् इताविव, यथा इतिकरणे परत्रावस्थिते आगमविकाराश्च न भवन्ति एवमिहापि न भवन्ति, यथा (१) श्रेयः कर, चक्षुः पाः । स्वः साम्, धूः सहौ, दुः दभः । वन सदः । अवरः पराय । सु चन्द्र । दुधुक्षन् । सुसाव । पुरीषवाहनः । ममहानः । हृष्टिमान् इव । एवं ह्याहुः "लोपागमविकारांश्च नैवेतिकरणे स्मृताः । अवग्रहस्तु चर्चायामितिना चोपदिश्यते ॥

## ककारपकारयोः सकारम् ॥ २१ ॥

विसर्जनीयोऽधिकृतः स यथादिष्टं ककारपकारयोः प्रत्यययोः सकारमापद्यते, यद्यप्यत्राविशेषेण सकार उक्तः तथापि कण्व्यपूर्वस्यैव सकारः, अकण्व्यपूर्वस्य तु षकारोऽभिप्रेतः, यतः 'कृषीश्च कृषौ सकारमिति' अकण्व्यपूर्वस्य सकारं विदधाति, अतोऽकण्व्यपूर्वस्य षकारो भवतीति निश्चीयते ॥

## भाव्युपधः षकारम् ॥ २२ ॥

---

यस्पोषद ऽइति रायस्पोष । दे । अत्र "रायः सहसस्पोषपुत्रयोः" इत्यनेन प्रातिशाख्यस्थसूत्रेण सकारो भवति ॥

(१) अत्र सूत्रे यान्युदाहरणानि दत्तानि तेषामङ्काः पूर्वसूत्रोक्तोदाहरणाङ्कैर्ज्ञातव्याः ॥

अकण्व्यो भावीत्युक्तम् भाव्युपधो विसर्ज्जनीयः षकारमापद्यते ककारपकारयोः प्रत्यययोः । कण्व्यपूर्वस्तु सकारएव एतयोरुदाहरणान्यग्रेतनसूत्रेषु द्रष्टव्यानि अधिकारसूत्रमेतत् ॥

## अविर्न्निरिडइडाया वसतिर्व्वरिवः ॥ २३ ॥

आविः निः इडः इडायाः वसतिः वरिवः इति एतेषां विसर्ज्जनीयः सकारं षकारं चापद्यते यथायोगं ककारपकारयोः प्रत्यययोः, यथा (१) आविः कृणुष्व, आविष्कृणुष्व, निः यथा (२) अम्बनिष्परसमरीर्व्विदाम्, इडः यथा (३) इडस्पदे समिध्यसे, इडायाः यथा (४) इडायास्पदमसि । वसतिः यथा (५) परीवो वसतिष्कृता, वरिवः यथा (६) अयन्नो ऽग्निर्व्वरिवस्कृणोतु ॥

## दिवोऽककुत्पृथिव्योः ॥ २४ ॥

---

(१) १३ । १३ ॥
(२) ६ । ३६ ॥
(३) १५ । ३० ॥
(४) ४ । २२ ॥
(५) १२ । ७९ ॥
(६) ५ । ३७ ॥

दिवइत्येतस्य सम्बन्धी विसर्ज्जनीयः सकारमापद्यते ककुत्पृथिवीशब्दौ वर्ज्जयित्वा, यथा (१) दि॒वः पु॒त्त्राय॑ दि॒वस्पु॒त्त्राय॒ सूर्य्या॑य, (२) दि॒वस्पृ॒ष्ठे व्यच॑स्वतीम्, (३) दि॒वस्पृ॒ष्ठे ज्ज्योति॑ष्मतीम्, अककुत्पृथिव्योरिति किम् (४) अ॒ग्निर्मू॒र्द्धा दि॒वः क॒कुत्, (५) दि॒वः पृ॒थि॒व्याः पर्य्योज॑ः ॥

## रायः सहसः पोषपुत्त्रयोः ॥ २५ ॥

रायः सहसइत्येतौ विसर्ज्जनीयौ सकारमापद्येते यथासङ्ख्यं पोषपुत्त्रयोः परयोः, रायः यथा (६) रा॒यः पोषे॑ण, मा व्यय॑ꣳ रा॒यस्पोषे॑ण वि यौ॑ष्म, सहसः यथा (७) सह॑सः पु॒त्त्रः सह॑सस्पु॒त्त्रोऽ अद्भु॑तः ॥

## तमसोऽपरस्त्तात् ॥ २६ ॥

तमसइत्ययं विसर्ज्जनीयः सकारमापद्यते परस्ता-

---

(१) ४ । ३५ ॥
(२) १५ । ६५ ॥
(३) १५ । ५८ ॥
(४) ३ । १२ ॥
(५) २९ । ५३ ॥
(६) ४ । २२ ॥
(७) ११ । ७० ॥

च्छब्दं (१) मुक्त्वा, यथा (२) तमसः पारम् तमसस्पारमस्य, अपरस्तादिति किम् (३) आदित्यवर्णन्तमसः परस्तात् ॥

## तपसस्पृथिव्याम् ॥ २७ ॥

तपसइत्ययं विसर्ज्जनीयः पृथिव्यां प्रत्यये सकारमापद्यते, यथा (४) धर्त्ता दिवो विभाति तपसस्पृथिव्याम् ॥

## अद्ध्वनो रजसो रिषः स्पृशस्पातौ ॥ २८ ॥

अद्ध्वनः रजसः रिषः स्पृशः एते विसर्ज्जनीयाः पातौ प्रत्यये सकारमापद्यन्ते, अद्ध्वनः यथा (५) अद्ध्वनः पातु पूषाऽद्ध्वनस्पात्विन्द्राय । रजसः यथा (६) रजसः पाति रजसस्पात्यन्तौ, रिषः यथा (७) रिषः पातु स नो दिवा सरिषस्पातु नक्तम्, पाताविति धा-

(१) वर्ज्जयित्वा इति ,क, पुस्तकपाठः ॥

(२) १२ । ७३ ॥

(३) ३१ । १८ ॥

(४) ३७ । १६ ॥

(५) ३ । १९ ॥

(६) १७ । ६० ॥

(७) १८ । ७३ ॥

तुग्रहणम् अतद्धिताद्वापि भवति, (१) देव रिषस्पाहि, स्पृधः यथा (२) संस्पृधस्पाहि ॥

अद्भ्वनस्कुर्विति च ॥ २९ ॥

अद्भ्वनद्दूत्ययं विसर्जनीयः कुर्विंत्येतस्मिंश्च प्रत्यये सकारमापद्यते, यथा (३) सकामाँऽ२ ॥ अद्भ्वनस्कुरु ॥

समानपदे च ॥ ३० ॥

एकस्मिंश्च पदे यो विसर्जनीयः स ककारपकारयोः प्रत्यययोर्यथायोगं सकारं षकारं चापद्यते, यथा (४) श्रेयः कर श्रेयस्कर, भूयः कर भूयस्कर, (५) आयुः पाः आयुष्पाः ॥

परावावसाने ॥ ३१ ॥

अवसानस्थे परीत्येतस्मिन्पदे प्रत्यये अधस्तनपदसम्बन्धी विसर्जनीयः सकारमापद्यते, यथा (६) ओषधयः परि दिवः ओषधयस्परि, अवसानइति किम्

(१) ३ । ४८ ॥
(२) ३७ । ११ ॥
(३) २६ । १ ॥
(४) १० । २८ ॥
(५) २२ । १ ॥
(६) १२ । ९१ ॥

(१) तमग्ने हेडः परि ते वृणक्तु ॥

## कविष्करत्कृधिषु ॥ ३२ ॥

कविः करत् कृधि एतेषु च पदेषु प्रत्ययेषु अधस्तनपदसम्बन्धी विसर्ज्जनीयः सकारं षकारं चापद्यते, कविः यथा (२) वसुः कविः सङ्दधानो व्वसुष्कविः, करत् यथा (३) यथा नो व्वस्यसः करत् यथा नो व्वस्यसस्करत्, कृधि यथा (४) पुनः कृधि प्रबुधे नः पुनस्कृधि ॥

## कृषीश्च कृधौ सकारम् ॥ ३३ ॥

कृधौ च प्रत्यये कृषीरित्ययं विसर्ज्जनीयः सकारमापद्यते यथा (५) कृषीः कृधि सुसस्याः कृषीस्कृधि, ननु कविष्करत्कृधिष्विति कृधौ कृषीरिति विसर्ज्जनीयस्य सकारः प्राप्तः किमनेन सूत्रेण क्रियते एवन्तर्ह्यकण्ठ्योपधस्य षकारो ऽभिप्रेतः स माभूदिति सकारविधानम् अस्माच्च ज्ञापकादकण्ठ्योपधः षकारमापद्यते इत्येतदध्यवस्यामः ॥

---

(१) १३ । ४५ ॥
(२) १५ । ३६ ॥
(३) ३ । ५८ ॥
(४) ४ । १४ ॥
(५) ४ । १० ॥

## सदो द्यौर्न्नमस्कृतम्पितापथेषु ॥३४॥

सदः द्यौः नमः एतेषां सम्बन्धी विसर्ज्जनीयः यथा सङ्ख्यं कृतं पिता पथ इत्येतेषु पदेषु प्रत्ययेषु सकार-षकारावापद्येते सदः यथा (१) येषामप्सुसदस्कृतम्, द्यौः यथा (२) उपहूतो द्यौष्पिता, नमः यथा (३) विश्वायुः शर्म्म सप्रथा नमस्पथे ॥

## पतितालव्यस्वरोदये ॥ ३५ ॥

पतिशब्दे तालव्यस्वरोदये प्रत्ययेऽवस्तनपदसम्बन्धी विसर्ज्जनीयः सकारमापद्यते यथा (४) वाचःऽ पतिम् वाचस्पतिं विश्वकर्म्माणमूतये, (५) ब्रह्मणः पते ब्रह्मणस्पते त्वमस्य, (६) वाचःऽ पतये वाचस्पतये पवस्व ॥

## पदे च ॥ ३६ ॥

पतिशब्दे च पदे एतद्भवति न पदावयवे यथा (७)

---

(१) १३ । ८ ॥
(२) २ । ११ ॥
(३) १८ । ५४ ॥
(४) ८ । ४५ ॥
(५) ३४ । ५८ ॥
(६) ७ । १ ॥
(७) ८ । ४५ ॥

व्वाचःऽ पतिम्, पद इति किम् (१) यतोजातः प्प्रजापतिः, (२) परमेष्ठ्यभिधीतः प्प्रजापतिः ॥

## न परुषः परुषि ॥ ३७ ॥

परुषइत्ययं विसर्ज्जनीयः परुषि प्रत्यये न सकारमापद्यते, यथा (३) परुषः परुषस्परि, समानपदे चेति प्राप्तस्य प्रतिषेधः ॥

## वाजपतिर्व्वासऽएदिधिषुरन्तःपर्श्व्येनान्तःपार्श्व्यमिति च ॥ ३८ ॥

वाजपतिः वासः एदिधिषुः अन्तःपर्श्व्येन अन्तःपार्श्व्यमित्येते विसर्ज्जनीयाः यथा प्राप्तं न सकारषकारावापद्यते, (४) व्वाजपतिः कविः "कविः करस्क-धिष्विति" प्राप्तिः (५) व्वासः पलप्पूलीम्, (६) एदिधिषुःपतिम्, "समानपदे चे"त्युभयोः प्राप्तिः अन्तः पर्श्व्येन

(१) २३ । ६३ ॥
(२) ८ । ५४ ॥
(३) १३ । २० ॥
(४) ११ । २५ ॥
(५) ३० । १२ ॥
(६) ३० । ९ ॥

यथा (१) अन्तः पर्शव्येनोग्रम्, अन्तः पार्श्व्यम् यथा (२) अन्तः पार्श्वव्यम्महादेवस्य, "समानपदे चे"त्युभयोः प्राप्तिः ॥

## अहः पतौ रेफम् ॥ ३९ ॥

अहरित्ययं विसर्जनीयः पतिशब्दे प्रत्यये रेफमापद्यते यथा (३) अहर्पतये स्वाहा, समानपदइति प्राप्ते सकारे तदपवादो रेफः ॥

## परश्च मूर्द्धन्यम् ॥ ४० ॥

इतउत्तरं लोपागमवर्णविकारान्वक्ष्यामः ते तावद्भविष्यन्ति परश्च दन्त्यो मूर्द्धन्यमापद्यते अधिकारसूत्रमेतत् ॥

## स्वर्धूः साऽसहयोः ॥ ४१ ॥

स्वः धूः एतौ विसर्जनीयौ रेफमापद्यते यथासङ्ख्यं साऽसहयोः प्रत्यययोः परश्च दन्त्यो मूर्द्धन्यमापद्यते स्वः यथा (४) स्वः साम् स्वर्षामप्सां वृजनस्य गोपाम्,

---

(१) ३९ । ८ ॥
(२) ३९ । ९ ॥
(३) ९ । २० ॥
(४) ३४ । २० ॥

घूः यथा (१) घूः साहौ धूर्षाहौ युञ्ज्येथाम् (२) ॥

## उकारं दुर्हे ॥ ४२ ॥

दुरित्ययं विसर्ज्जनीय उकारमापद्यते दकारे प्रत्यये उकारात्परश्च दन्त्यो मूर्द्धन्यमापद्यते यथा (३) दुः दर्भः परि ते दूडभो रथः ॥

## नाशे च ॥ ४३ ॥

नाशे च प्रत्यये दुरित्ययं विसर्ज्जनीय उकारमापद्यते उकारात्परश्च दन्त्यो मूर्द्धन्यमापद्यते यथा (४) दुः नाशः दूणाशः म्रन्यमुदाहरणम् ॥

## पुरो दाशे ॥ ४४ ॥

पुरइत्ययं विसर्ज्जनीयो दाशे प्रत्यये उकारमापद्यते परश्च मूर्द्धन्यम् यथा पुरः दाशः अत्र रूपसिद्धिः विसर्ज्जनीयादेशस्योकारस्य चोपधाकारस्य च उवर्णे ओकारमित्येकादेशउोकारः ततः परस्य दकारस्य

---

(१) ४ । ३३ ॥

(२) साꣳसाहयोरिति 'क' पुस्तकपाठः ॥ धुर्व्वाहौ इति कण्वशाखीयानां च पाठः ॥

(३) ३ । ३६ ॥

(४) दुर्न्नामान्नदो बहुदक्षिणो दूणासश्च इति सौत्रः । दूणाशं सख्य तव । अन्यशाखीयानामिदमुदाहरणम् ॥

डकारः, (१) पुरोडाशैर्हवीꣳष्या ॥

## अनसो वाहौ सकारो डकारम् ॥४५॥

अनस्शब्दः सान्तः तस्य वाहौ प्रत्यये सकारमापद्यते यथा (२) अनस् वाहम् अनड्वाहमन्वारभामहे ॥

## उकारमितः सिञ्चतौ सोपधः ॥४६॥

इतः शब्दसम्बन्धी विसर्ज्जनीय उपधासहित ओकारमापद्यते सिञ्चतौ प्रत्यये परस्य मूर्द्धन्यम् यथा (३) इतः सिञ्चत परीतो षिञ्चता सुतम् ॥

## षड्दशदन्तयोः सङ्ख्यावयोऽर्थयोश्च ॥ ४७ ॥

षडित्येतस्य शब्दस्य च शब्दादन्त्यो वर्णः सोपध ओकारमापद्यते परस्य मूर्द्धन्यं दशदन्तयोः प्रत्यययोर्यथा सङ्ख्यं सङ्ख्यावयसोरभिधायकयोः । यथा (४) षट् दश षोडश च मे, षट् दन्ता अस्येति षोडन्तः एतच्च शिष्यव्युत्पादनार्थम् न हि संहितायामुदाहर-

(१) १९ । २० ॥

(२) ३५ । १३ ॥

(३) १९ । २ ॥ अत्र विसर्गस्थाने परसवर्णस्य सकारस्यापवादो द्रष्टव्यइति ।

(४) १८ । २५ ॥

णां लभ्यते (१) ॥

## तआघादनाडम्बरात् ॥ ४८ ॥

आघाशब्दात्परस्तकारः परश्च मूर्द्धन्यमित्यनेन मूर्द्धन्यमापद्यते स चेदाघाशब्द आडम्बरशब्दात्परो न भवति यथा (२) दार्व आघातः गोधा कालका दार्व्याघाटः, अनाडम्बरादिति किम् (३) शब्दायाडम्बराघातम् ॥

## वनसदोऽवेटो रेफेण ॥ ४९ ॥

वनशब्दः सदशब्दे प्रत्यये रेफेण व्यवधीयते स चेद्वनशब्दो वेट्शब्दात्परो न भवति यथा (४) व्वनसदं व्वनर्षदो व्वायवो न सोमाः, अवेट् इति किम् (५) बर्हिषदे व्वेड्वनसदे व्वेट् ॥

## पत्यौ च सकारेण ॥ ५० ॥

पतिशब्दे च प्रत्यये वनशब्दः सकारेण व्यवधीयते,

---

(१) षोडन्त्यो अस्य महतो महित्वा । अन्यशाखीयानां पाठः ॥

(२) २४ । ३५ ॥

(३) ३० । १९ ॥

(४) ३३ । १ ॥

(५) १७ । १२ ॥

यथा (१) वनपतिः वनस्पतिः शमिता देवः ॥

## ऋतावरौ च पतिपरयोः ॥ ५१ ॥

ऋतः अवरश्च शब्दौ सकारेण व्यवधीयेते यथासङ्ख्यं पतिपरयोः प्रत्यययोः, यथा (२) ऋतपते ऋतस्पते त्वष्टुर्जामातरद्भुत, (३) अवरपराय अवरस्पराय शब्दुद्धमम् ॥

## तद्बृहतौ करपत्योस्तलोपश्च ॥ ५२ ॥

तत् बृहत् एतौ करपतिशब्दयोः प्रत्यययोर्यथासङ्ख्यं सकारेण व्यवधीयेते पूर्वपदयोश्च तकारलोपो भवति, यथा (४) तत् करान् तस्कराँ २॥ऽ उत, (५) बृहत् पतिः बृहस्पतिः ॥

## परिकृते षकारेण ॥ ५३ ॥

परोत्येतत्पदं कृते प्रत्यये षकारेण व्यवधीयते, य-

---

(१) २९ । ३५ ॥ इदं शास्त्रान्तरविषयम् । अत्र लेखनं तु सकारेणेति पदस्यानुवृत्तिप्रदर्शनार्थम् ॥

(२) २७ । ३४ ॥

(३) ३० । १९ ॥

(४) ११ । ७८ ॥

(५) २५ । १९ ॥

था (१) परिष्कृताः परिष्कृताः शुक्राः ॥

## चन्द्रे सु शकारेण ॥ ५४ ॥

चन्द्रे प्रत्यये सुशब्दः शकारेण व्यवधीयते, यथा (२) सुचन्द्र उभे सुश्चन्द्र सर्पिषः ॥

## दुधुक्षन्धो दकारम् ॥ ५५ ॥

दुधुक्षन्नित्येतस्य शब्दस्य धकारो दकारमापद्यते, यथा (३) दुधुक्षन् सहस्रधाराम्बृहतीन्दुदुक्षन् ॥

## भाविभ्यः सः षं समानपदे ॥ ५६ ॥

अकारवर्ज्यो भावीत्युक्तम् भाविभ्य उत्तरः सकारः षकारमापद्यते एकपदस्थौ चेद्भाविसकारौ भवतः, यथा (४) गोस्थानम् व्रजङ्गच्छ गोष्ठानम्, (५) परमेस्थी परमेष्ठ्यभिधीतः, (६) सुसाव सुषाव सोमम्, (७) सी-

(१) २१ । ४२ ॥ परिष्कृण्वन्ति इत्युदाहरणं शाखान्तरीणम् ॥

(२) १५ । ४३ ॥

(३) ३३ । २८ ॥

(४) १ । २५ ॥

(५) ८ । ५४ ॥

(६) १९ । २ ॥

(७) २५ । ४६ । तस्मादित्युत्तरस्येत्यव्यवहितस्य तेन प्रेषितइत्यत्र तकारस्य 'षात्तथौ' मूर्द्धन्यमित्यनेन सूत्रेण टकारात्मको मूर्द्धन्यवर्णो न भवतीति सुज्ञैर्ज्ञेयः ॥

सधाम सीषधामेन्द्रश्च, भाविष्यद्दति किम् (१) ध्रुवस-दन्त्वा, समानपदद्दति किम् (२) वि सीमतः सुरुचः ॥

## अनुस्वाराच्च तत्पूर्वात् ॥ ५७ ॥

अनुस्वाराच्च परः सकारः षकारमापद्यते, भावि-पूर्वात् यथा (३) तपूंष्यग्ने, (४) पुरोडाशैर्हवींष्या, तत्पूर्वादिति किम् (५) उत्तसत्त्वनाम्नामकानाम्ननांसि॥

## करेफाभ्याञ्च ॥ ५८ ॥

ककाररेफाभ्यां च परः सकारः षकारमापद्यते, ककाराद्भवति यथा (६) दिक्षु ये चैनरुद्राऽअभितो दिक्षु, ऋक् सु ऋक्षु, रेफाद्भवति यथा (७) गीः सु गीर्षु, धूः सु धूर्षु, ननु (८) च यत्र पदकारोऽन्यथाभूतं

(१) ९। २॥

(२) १२। ३॥

(३) १३। ९॥

(४) १९। २०॥

(५) १७। ४२॥

(६) १६। ६॥

(७) रेफात्परो ३३। १। वनर्षदो व्वायवं चकाराद्भाविपूर्वात्परस्य सकार-स्योदाहरणं ७। ३८ अनुष्ष्वधम्मदायोति ज्ञेयम्॥

(८) ननु यदुदाहरणं व्याकरणसाध्यं न भवति तत्र प्रातिशाख्यलक्षणं कर्त्तुमुचितं एवं कृते सति करेफाभ्यामित्यादीनां वैयर्थ्यमिति चेत्सत्यमित्येवं प्रसङ्गादाचार्य्येण

पदं करोति अन्यथा चार्षसंहिता तत्रैव लक्षणं कर्त्तुं युज्यते, यथा सुसाव सुषाव, यत्र पुनः पदकारस्य (१) चार्षसंहितायाश्च समानवाक्यत्वं तत्र लक्षणं न घटते व्याकरणस्य विषयः सत्यमेव यदि नाम प्रसङ्गमुपजीव-दाचार्य्येण शिष्यव्युत्पत्त्यर्थं (२) कश्चिद्व्याकरणलक्षणदृ-ष्टाशङ्कितः एवं संहितायामविद्यमानेषु लक्षणं द्रष्ट-व्यम्, अथवा यथा एधाहारस्य मध्वाहरणमुदकाहा-रस्य मत्स्याहरणं पुष्पाहारस्य फलाहरणम् एवमेत-दपि एवं च कृत्वा अदोषएवेति ॥

## नेः सीदतेः ॥ ५९ ॥

नेः परस्य सीदतेः सकारः षकारमापद्यते यथा (३) नि सीदत एदं बर्हिर्निषीदत ॥

## ससाद च ॥ ६० ॥

नेःपरस्य ससादशब्दस्य सकारः षकारमापद्यते,

शिष्यव्युत्पत्त्यर्थं कश्चिद्व्याकरणविषयोऽपि प्रदर्शितः । वस्तुतस्तु ऋक्सामयोरित्युदा-हरणे हि॰०सीर्ऋक्सामयोरित्यादि वक्ष्यमाणनिषेधशास्त्रेण षत्वमपवादिष्यति तत्र प्रा-प्तिपूर्वकत्वात्प्रतिषेधस्येति तत्प्राप्त्यर्थमत्र लेखनं संहितायामविद्यमानपदव्युत्पादनम-पि शिष्यव्युत्पत्त्यर्थञ्चेति न कश्चिद्दोषः यथा इध्मानयनार्थं प्रवृत्तस्य नरस्य प्रसङ्गा-च्छाकानयनवत् । यद्वा पञ्चदशसु शाखासु लक्षणार्थमाचार्य्यस्य प्रवृत्तेः । अथ वा तत्तच्छाखासिद्धोदाहरणसिद्ध्यर्थं सूत्राधिक्यकरणमिति द्रष्टव्यम् ॥

(१) आर्ष्यां संहिताया एकवाक्यत्वमिति 'घ' पुस्तकपाठः ॥

(२) कश्चिद्व्याकरणलक्ष्यलक्षणइहाशङ्कितइति 'ग' पुस्तकपाठः ॥

(३) ७ । ३४ ॥

यथा (१) नि ससाद नि षसाद धृतव्रतः, असमानपदार्थ आरम्भः ॥

## ओकारात्सु ॥ ६१ ॥

ओकारात्पदात्परः सुसकारः षकारमापद्यते, यथा (२) मो सुनः मो षूणः ॥

## ऊश्चापृक्तात् ॥ ६२ ॥

एकवर्णं पदमपृक्तमित्युक्तम् ऊकाराच्चापृक्तसञ्ज्ञात्परः सुसकारः षकारमापद्यते, यथा (३) ऊँ इति ऊ सु नः ऊर्ध्व ऽऊषुणः ॥

## अभेश्च ॥ ६३ ॥

अभेरुपसर्गाच्च परः सुसकारः षकारमापद्यते, यथा (४) अभि सु नः अभीषुणः सखीनाम् ॥

## परेश्च सिञ्चतेः ॥ ६४ ॥

---

(१) १० । २७ ॥ एतस्य सदधातुजत्वात्सपद्मार्थम् । सीदतीरति इकस्तिपौ धातुनिर्देशइति सिद्धे पुनर्ग्रहणं व्याकरणानभिज्ञस्य मन्दधियः परिज्ञापनार्थञ्चेति ॥

(२) ३ । ४६ ॥ ओषुधृष्टिराध्वरा । सहोषुणो वज्रहस्तैः । इदमुदाहरणद्वयमन्यशाखीयं द्रष्टव्यम् ॥

(३) ११ । ४२ ॥

(४) ३६ । ६ ॥

परेरुपसर्गाच्च परः सिञ्चतेः सकारः षकारमापद्यते, यथा (१) परि सिञ्चन्ति ॥

अभेश्च ॥ ६५ ॥

अभेरुपसर्गाच्च परः सिञ्चतेः सकारः षकारमापद्यते संहितायाम्, यथा (२) अभि सिञ्चामि अभिषिञ्चाम्यसौ ॥

अव्यवहितोऽपि ॥ ६६ ॥

अकारव्यवहितोऽप्यभेरुत्तरः सिञ्चतेः सकारः षकारमापद्यते संहितायाम्, यथा (३) अभ्यसिञ्चन् याभिर्मित्रावरुणावभ्यषिञ्चन् ॥

वेर्युदयः ॥ ६७ ॥

वेरुपसर्गात्परः सकारो यकारोदयः षकारमापद्यते, (४) विस्यामि तन्ते विष्याम्यायुषो न मध्यात्, यकारोदयइति किम् (५) वि स्वः पश्यव्यन्तरिक्षम् ॥

(१) १९ । २८ ॥ परेः सिञ्चतेः, इति 'ख' 'ग' पुस्तकपाठः ॥
(२) ९ । ३० ॥ अभेरित्येव 'ग' 'घ' पुस्तकपाठः ॥
(३) १० । १ ॥
(४) १२ । ६५ ॥
(५) ७ । ४४ ॥

## हेर्मिथोदयः ॥ ६८ ॥

हिशब्दात्परः सकारो मकारोदयो वा थकारोदयो वा षकारमापद्यते, मकारोदयो यथा (१) हि स्म अस्ति हि ष्मा॑ते शुष्मिन्नवयाः, थकारोदयो यथा (२) हि स्था आपो हि ष्ठा म॑यो॒भुवः॑ ॥

## द्यवेश्च ॥ ६९ ॥

द्यविशब्दाच्च परः सकारः षकारमापद्यते यथासम्भवं मकारोदयः थकारोदयश्च संहितायाम् यथा (३) द्यवि स्थ ये ऽअन्तरि॑क्षे ऽय॒ऽउप॒ द्यविष्ठ ॥

## नेः स्त्यास्तनोः ॥ ७० ॥

नेरुपसर्गात्परयोः स्त्यास्तन्योर्धात्वोः सकारः षकारमापद्यते संहितायाम्, यथा (४) निः स्त्यायताम् आप्यायता॑न्निष्ट्या॑यताम्, निस्तनिहि (५) निष्ट॑निहि दुरि॒ता बाध॑मानः ॥

---

(१) ३ । ४६ ॥

(२) ११ । ५० ॥

(३) ३३ । ५३ ॥ मकारस्तु पूर्वसूत्रान्न सम्बद्ध्यते कुतः उदाहरणस्यासम्भवात् ॥

(४) ६ । १५ ॥ ष्ट्यै सङ्घाते इत्यस्माद्धातोरूपम् । परन्तु पदपाठे आर्षत्वात् स्त्यायतामित्येतत्पदघटकीभूतस्य सकारस्य षत्वविधानादृषिमते तथैव धातुरस्ति ॥

(५) २९ । ५६ । निः स्तनिहि । इति स्थिते 'लुङ्मुदि जित्परे' इति विसर्गलोपे-कृते सस्य षः । स्तनशब्दे चुरादिरदन्तः । नेस्त्यास्तन्योरिति 'ख' पुस्तकपाठः ॥

ततक्षौ ॥ ७१ ॥

ततक्षुरित्येतस्मिन्नुत्तरपदे निरुपसर्गसम्बन्धिविसर्ज्जनीयसकारः षकारमापद्यते यथा (१) निः ततक्षुः स्वधया निष्टतक्षुः ॥

अनोः स्तुवन्त्याम् ॥ ७२ ॥

अनोरुपसर्गात्परः स्तुवन्तिसकारः षकारमापद्यते यथा (२) अनु स्तुवन्ति अनुष्टुवन्ति पूर्व्वथा ॥

दुष्ष्वप्न्यम् ॥ ७३ ॥

निपातनसूत्रमेतत् भाविश्यउत्तरस्य सकारस्य षत्वमित्युक्तं समानपदे इह तु विसर्ज्जनीयेन व्यवधानान्न प्राप्नोति अतः षत्वं निपात्यते संहितायाम्, यथा (३) दुःष्वप्न्यम् अपं दुःष्वप्न्यंठं० सुव ॥

वन्दारुर्म्माकिः ॥ ७४ ॥

वन्दारुः माकिः अनयोर्विसर्ज्जनीयस्य सकारः षकारमापद्यते संहितायाम् तथयोः समिति विसर्ज्ज-

---

(१) १७ । ८२ ॥
(२) ३३ । ९७ ॥
(३) ३५ । ११ ॥

नीयस्य सकारउक्तस्तस्यैव षत्वम् यथा (१) वन्दारुः ते वन्दारुष्टे तन्वँ वन्दे अग्ने, (२) माकिः ते माकिष्टे व्यथिरादधर्षीत् ॥

## सहेः पृतनायाः ॥ ७५ ॥

एतदपि निपातनसूत्रम् अभाविपूर्वत्वात्षकारो न प्राप्नोति स निपात्यते । यथा (३) पृतनासाह्याय च पृतनाषाह्याय च ॥

## सधिरंशुरदितिः ॥ ७६ ॥

सधिः अंशुः अदितिः एतेषां विसर्ज्जनीयसकारः षकारमापद्यते संहितायाम्, सधिः (४) यथा सधिः तव सधिष्टव सौषधीः, अंशुः यथा (५) अंशुः ते अंशुष्टे देव सोम, अदितिः यथा (६) अदितिः त्वा अदितिष्ट्वा देवी ॥

## वायुरग्निरग्नेरेकाक्षरे ॥ ७७ ॥

---

(१) १२ । ४२ ॥
(२) १३ । ११ ॥
(३) १८ । ६८ ॥
(४) १२ । ३६ ॥
(५) ५ । ७ ॥
(६) ११ । ६१ ॥

वायुः अग्निः अग्ने: एतेषां विसर्ज्जनीयसकारः ष-कारमापद्यते एकाक्षरे पदे प्रत्यये, यथा (१) वायुः ते व्वायुष्टेऽधिपतिः, (२) अग्निः ते अग्निष्टेऽधिपतिः, (३) अग्ने: त्वा अग्नेष्ट्वास्येन, एकाक्षरइति किम् (४) अग्निः तिग्मेन अग्निस्तिग्मेन शोचिषा, (५) अग्ने: तनूः अग्नेस्तनूरसि ॥

## सकारपरे च ॥ ७८ ॥

सकारः परो यस्मादेकाक्षरात्स तथोक्तः तस्मिन्नेकाक्षरे प्रत्यये च शब्दादधस्तनपदसम्बन्धी विसर्ज्जनीयसकारः षकारमापद्यते संहितायाम्, यथा (६) बृहस्पतिः त्वा सुम्ने बृहस्पतिष्ट्वा सुम्ने, (७) प्रजापतिः त्वा सादयतु प्रजापतिष्ट्वा सादयतु, सकारपरइति किम् (८) विष्णुस्त्वा क्रमताम् (९) सवितुस्त्वाप्रसवे ॥

---

(१) १४ । १४ ॥
(२) १३ । २४ ॥
(३) २ । ११ ॥
(४) १७ । १६ ॥
(५) १ । १५ ॥
(६) ४ । २१ ॥
(७) १३ । १७ ॥
(८) २ । ९ ॥
(९) १ । ३१ ॥

## मातृभिरर्च्चिभिः पायुभिर्व्वरू-
## त्रीः ॥ ७९ ॥

मातृभिः अर्चिभिः पायुभिः वरूत्रीः एतेषां च पदानां विसर्ज्जनीयसकारः षकारमापद्यते एकाक्षरे प्रत्यये, मातृभिः यथा (१) मातृभिः त्वम् मातृभिष्ट्वम्, अर्चिभिः यथा (२) अर्चिभिः त्वम् अर्च्चिभिष्ट्वम्, पायुभिर्यथा (३) पायुभिः त्वम् पायुभिष्ट्वम्, वरूत्रीः यथा (४) वरूत्रीः त्वा वरूत्रीष्ट्वा देवीः॥

## षात्तथौ मूर्द्धन्यम् ॥ ८० ॥

षकारात्परः तकारथकारौ मूर्द्धन्यमापद्यते विकारी यथासन्नमिति परिभाषितत्वात् तकारस्य टकारः थकारस्य ठकारः यथा (५) वरूत्रीष्ट्वा (६) कृष्णोऽस्याखरेष्ठः

## प्रकृत्या नानापदस्थे तकारे ॥८१॥

(१) १२ । ३८ ॥
(२) १२ । ३२ ॥
(३) ३३ । ६९ ॥
(४) ११ । ६१ ॥
(५) ११ । ६१ ॥

द्रुतउत्तरं प्रकृत्या सकारो भविष्यति समानपदस्थः नानापदस्थस्तु यः प्रकृतिभावः स (१) तकारे प्रत्येतव्यः अपवादसूत्रमेतत् ॥

अनुसन्तनोतु बृहस्पतिसुतस्य सुसमिद्धाय सुसन्दृशमभिसत्त्वाऽभिसंविशन्तु सुसस्याऽअतिस्थूलम्मुसलेपत्क्नीसँय्याजान् क्रतुस्थलाञ्जिसवथो दिविस्पृशा हृदिस्पृशꣳ हिꣳसीर्ऋक्वसामयोर्ऋक्वसामाभ्यान्तित्तिरिः सीसेन सीसाः सीसम्पशुसनिगोसनि प्रतिसदृङ् प्रतिसदृक्षास-श्चतुस्त्रिꣳशत् ॥ ८२ ॥

अनुसन्तनोतु बृहस्पतिसुतस्य सुसमिद्धाय सुसंदृ-

---

(१) अतकारे इति छेदः । अकारपूर्वस्तकारः अतकारः सकारः प्रकृत्या स्यात नानापदे च । नानापदस्थेऽतकारे परिभूते पूर्वपदस्थान्निमित्तादुत्तरपदस्थः सदइत्यस्य सकारः प्रकृत्या स्यात् इत्यर्थः तकारपदान्तीयाभिप्रायेण तेन सदो दकारत्वेऽपि न दोषः । अत्राकारव्यवहिततकारपरत्वं बोध्यन्न त्वव्यवधानेन । पृथिविसदम् । उर्वारसदो दुवस्वन्तः । अनेन प्राप्ते पुनर्योगकरणं विकल्पार्थम् ॥

शम् अभि सत्त्वा अभि संविशन्तु सुसख्याः अतिस्थूलम् मुसले पत्नीसंयाजान् ऋतुस्थला अश्विसक्थः दिविस्पृशः हृदिस्पृशम् हिंसीः ऋक्सामयोः ऋक्सामाभ्याम् तित्तिरिः सीसेन सीसा सीसम् पशुसनि गोसनि प्रतिसद्दङ् प्रतिसद्दशासः चतुस्त्रिंशत् एते सकाराः प्रकृत्या भवन्ति सकारः षकारं प्राप्नोति स निषिध्यतइति सूत्रार्थः, इदानीमुदाहरणानि दीयन्ते अनुसन्तनोतु यथा (१) इदम्मे कर्म्मेदं वीर्य्यम्पुत्रोऽनुसन्तनोतु, बृहस्पतिसुतस्य यथा (२) बृहस्पतिसुतस्य देव, सुसमिद्धाय यथा (३) सुसमिद्धाय शोचिषे, सुसन्दृशम् यथा (४) सुसन्दृशन्त्वा व्वयम्, अभि सत्वा यथा (५) अभि वीरोऽ अभि सत्त्वा सहोजाः, अभि सँव्विशन्तु यथा (६) इन्द्रमिव देवाऽ अभि सँव्विशन्तु, सुसख्याः यथा (७) सुसख्याः कृषीस्कृधि, अतिस्थूलम्

---

(१) एकपादीनामके २ काण्डे ३ प्रपाठके ३ अध्याये २ ब्राह्मणे एकचत्वारिंशत् कण्डिकायाम् ॥

(२) ८ । ९ ॥

(३) ३ । २ ॥

(४) ३ । ५२ ॥

(५) १७ । ३७ ॥

(६) १३ । २५ ॥

(७) ४ । १० ॥

यथा (१) अतिस्थूलञ्चातिकृशञ्च, मुसले यथा (२) उलूखलमुसले, पत्नीसंयाजान् यथा (३) शंय्युना पत्नीसंयाजान्, ऋतुस्थला यथा (४) पुञ्जिकस्थला च ऋतुस्थला च, अञ्जिसक्थो यथा (५) शितिकक्षोञ्जिसक्थः, दिविस्पृशा यथा (६) घृतप्रतीको बृहता दिविस्पृशा, हृदिस्पृशम् यथा (७) ऋतुन्न भद्रं हृदिस्पृशम्, एतेषां पदानां सकारो भाव्युपधत्त्वात्षत्वं प्राप्नोति तस्यैतेन प्रकृतिभावः, हिंसीः यथा (८) स्वधिते मैनं हिंसीः अनुस्वाराच्च तत्पूर्वादिति प्राप्तिः ऋक्सामयोः यथा (९) ऋक्सामयोः शिल्पे ऋक्सामाभ्यां सन्तरन्तः, करेफाभ्याञ्चेति प्राप्तिः, तित्तिरिः यथा (१०) तित्तिरिस्ते सर्पाणाम्, एकाक्षरे सकारपरे चेति प्राप्तिः, इदमर्थेन च नाना-

(१) ३० । २२ ॥

(२) प्रथमकाण्डे शतपथीयहविर्यज्ञनामके १ ब्राह्मणे २२ द्वाविंशतिकण्डिकायाम् ॥

(३) १९ । २९ ॥

(४) १५ । १५ ॥

(५) २४ । ४ ॥

(६) १५ । २७ ॥

(७) १५ । ४४ ॥

(८) ४ । १ ॥

(९) ४ । ९ ॥

(१०) २४ । ३६ ॥

पदस्थे तकारइति सूत्रावयवः अतः अन्यथातित्तिरिपदे सकारो न विद्यतइति मोहः स्यात्, सीसेन यथा (१) सीसेन तन्त्रं मनसा, सीसाः यथा (२) रजता हरिणीः सीसायुजो युज्यम्, सीसम् यथा (३) सीसञ्च मे, पशुसनि यथा (४) प्रजासनि पशुसनि, गोसनि-यथा (५) यो गोसनिस्तस्य ऽत इष्टयजुषः । प्रतिसद्दङ् यथा (६) सद्दङ् च प्रतिसद्दङ् च, प्रतिसद्दत्वासः यथा (७) प्रतिसद्दत्वास ऽएतन, चतुस्त्रिंशत् यथा (८) चतुस्त्रिंशद्वाजिनः, न चात्र भावीविसर्ज्जनीयव्यवहितः अतो नैवेह षत्वशंका किमनेन सूत्रावयवेनेति एवन्तर्हि येऽन्येपि चतुः शब्दविसर्ज्जनीयव्यवहितास्तेषां षत्वार्थम् । (९) यथा चतुः स्तोमः चतुष्टोमः ॥

## ऋकाररेफारुदयश्च ॥ ८३ ॥

(१) १९ । ८० ॥
(२) २३ । ३७ ॥
(३) १८ । १३ ॥
(४) १९ । ४८ ॥
(५) ८ । १२ ॥
(६) १७ । ८१ ॥
(७) १७ । ८४ ॥
(८) २५ । ४१ ॥
(९) १४ । २४ ॥

ऋकारोदयः रेफोदयः अरुदयश्च सकारः प्रकृत्या भवति, ऋकारोदयः यथा (१) तिसृभिरस्तुवत, रेफोदयः यथा (२) तिस्रश्चमे, अरुदयः यथा (३) व्वाचो व्विसर्ज्जनम् ॥

## पृथिविदिव्युपरिचर्षणिशकुनियासिभ्यः ॥ ८४ ॥

पृथिवि दिवि उपरि शकुनि यासि एतेभ्यो भाविभ्यः परः सकारः प्रकृत्या भवति संहितायाम्, पृथिवि यथा (४) पृथिवि सदन्त्वा, दिवि यथा (५) दिवि सदन्देवसदम्, उपरि यथा (६) उपरि सदो दुवस्वन्तः, चर्षणि यथा (७) चर्षणीसहा व्वेत्तु, शकुनि यथा (८) शकुनि सादेन, यासि यथा (९) अवयासि सिसीष्ठाः (१०) ॥

(१) १४ । २८ ॥
(२) १७ । २४ ॥
(३) १ । १५ ॥
(४) ९ । २ ॥
(५) ९ । २ ॥
(६) ९ । ३६ ॥
(७) २८ । १ ॥
(८) २५ । ३ ॥
(९) २१ । ३ ॥
(१०) पृथिवि सदन्त्वेत्यादीनि त्रयाणामाद्यानामुदाहरणान्युक्तानि । तत्र सिद्धानाम-

## ऋषरेभ्यो नकारो णकारश्च समानपदे ॥ ८५ ॥

ऋकारषकाररेफेभ्यउत्तरो नकारो णकारमापद्यते समानपदे, ऋकाराद्भवति यथा (१) नृणाम्, षकाराद्भवति यथा (२) पूष्णः, रेफाद्भवति यथा (३) पूर्णा, एते प्रत्ययनकाराः ऋषरेफेभ्यउत्तराः सन्तो णकारमापद्यन्ते, अयं तावत्सूत्रार्थो व्याकरणविषयप्रदर्शनार्थं क्रियते ॥

## स्वरयवहकपैश्च ॥ ८६ ॥

स्वरैर्यकारवकारहकारैः कवर्गपवर्गाभ्यां च व्यवहितो नकारः ऋषरेभ्यउत्तरो णकारमापद्यते संहितायाम्, यथा (४) नृमनाः तृतीयमप्सु नृमणाः, (५)

---

त्र पुनर्ग्रहणं सौत्रस्य विधेरनित्यत्वज्ञापनार्थं तेन शुचिषत् नृषदित्यादाविव पृथिविषदमित्यादि न प्रकृतिभावप्राप्तिः । अनेन प्राप्तिश्चेति विकल्पः फलितो भवति अन्यथा प्रकृतस्यैतावतैव सिद्धेऽनानापदस्थे तकारे इति व्यर्थं स्यात् । प्रयोजनान्तराभावात् । विकल्पश्च व्यवस्थाप्यते । यथा चरणपाठः पृथिविषदमित्यादौ काण्वाः षत्वं पठन्ति । माध्यंदिनास्तु सत्वमेव पठन्तीति बोध्यम् ॥

(१) ११ । २७ ॥

(२) १ । १० ॥

(३) ३ । ४९ ॥

(४) १२ । २८ ॥

(५) ११ । ४४ ॥

पुरीषवाहनः अग्नेऽ पुरीषवाहणः, (१) प्रवाहनः विभूरसि प्रवाहणः, रुषरेभ्यइति किम् (२) वह्निरसि हव्यवाहनः, समानपदइति किम् (३) प्र नो यच्छत्वर्यमा ॥

निषण्णाय रथवाहणमिन्द्रऽएणम्परिणीयते समिन्द्रणऽउरुष्याणो रक्षाणः पूणःपुणः पुणासत्या स्वर्णास्थूरिणौ प्र णऽ आयूंषि ॥ ८७ ॥

निषण्णाय रथवाहणम् इन्द्रएणम् परिणीयते समिन्द्रणः उरुष्याणः रक्षाणः पूणः पुणः पुणासत्या स्वर्णास्थूरि णौ प्रणऽआयूंषि एते च णकारा निपात्यन्ते यदत्र लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम् यथा निषण्णाय अत्र द्वयोर्नकारयोर्णत्वं निपात्यते प्रथमस्य तवर्गे चेति निषेधः उत्तरस्य तु नकारव्यवहितत्वात् नकारस्य स्वरयवहकपां मध्ये न पठ्यते, (४) निषण्णाय स्वाहोत्थिताय, रथवाहणं यथा (५) रथवाहनम् थका-

(१) ५ । ३१ ॥
(२) ५ । ३१ ॥
(३) ९ । २९ ॥
(४) २२ । ८ ॥
(५) २९ । ४५ ॥

रेण व्यवधानादप्राप्तिः अतो निपात्यते रथवा णाठं० हविरस्य नाम, इन्द्रऽएणम् यथा (१) इन्द्रऽएनम् इत-ऽउत्तरमसमानपदत्वादप्राप्तं णत्वं निपात्यते। इन्द्रऽए-णं प्रथमोऽ अध्यतिष्ठत्, परिणीयते यथा (२) परिनी-यते सोऽअध्वराय परिणीयते कविः, समिन्द्रणः यथा (३) इन्द्र नः समिन्द्र णो मनसा नेषि गोभिः, उरु-ष्याणः यथा (४) उरुष्यानः उरुष्याणो ऽअघायतः संमस्मात्, रक्षाणः यथा (५) रक्ष नः रक्षाणो ब्रह्म-णस्पते, षूणः यथा (६) षूनः मोषुणाऽइन्द्रात्र, षुणः यथा (७) अभीषु नः अभीषु णः सखीनाम्, षुणा य-था (८) गोमदूषु नासत्या गोमदूषुणा सत्या, स्वर्णं य-था (९) स्वः न स्वर्ण घर्म्मः स्वाहा, अस्मूरि णो यथा

(१) २९। १३॥

(२) ३३। ७४॥

(३) ८। १५॥

(४) ३। २७॥

(५) ३। २९॥

(६) ३। ४६॥

(७) २७। ४१। ऋषरेभ्यः समानपदत्वादप्राप्ते णत्वविधिः काण्वानां पठ्यते। तत्रोत्सर्गविधित्वेऽन्यान्यप्युदाहरणानि दीयन्ते॥

(८) २०। ८१॥

(९) १८। ५०॥

(१) अस्थूरि नौ अस्थूरि णौ गार्हपत्यानि सन्तु, प्रण आयूंषि यथा (२) प्र नः आयूंषि प्रण आयूंषि तारिषः, आयूंषीति किम् (३) भग प्र णो जनय गोभिः ॥

## परिणऽइति शाकटायनः ॥ ८८ ॥

परिणइति निपात्यते शाकटायनाचार्यस्य मतेन, यथा (४) परि नः परिणो रुद्रस्य हेतिः, शाकटायनइति किम् (५) परि नो रुद्रस्य हेतिः ॥

## प्र नेतिनुदातिहिनोमीनाम् ॥ ८९ ॥

प्रपूर्वाणाम् नेति नुदाति हिनोमि एषां शब्दरूपाणां नकारो णकारमापद्यते संहितायाम्, अत्र नेति नुदात्योर्द्धातुग्रहणमतः सर्वप्रत्ययान्तयोर्भवति (६) हिनोतेस्तु विकरणनिर्देशाद्यत्र विकरणं तत्रैव भवति,

(१) २ । २७ ॥

(२) २३ । ३१ ॥

(३) ३४ । ३६ ॥

(४) इति काण्वानां पाठः । वाजसनेयिनां तु णत्वरहितः पाठस्तस्माच्छाकटायनग्रहणं विकल्पार्थम् ॥

(५) १६ । ५० ॥

(६) हिनोमीति च विकरणनिर्देशात्तन्मात्रग्रहणमिति विवेकः, इति (ग) पुस्तकपाठः ॥

नेति यथा (१) प्र नय प्रणय देवाव्यम्, नुदाति यथा (२) प्र नुदानः अग्ने जाताम्प्रणुदानः, हिनोमि यथा (३) प्रहिनोमि क्रव्यादमग्निं प्रहिणोमि ॥

## प्रकृत्या पदान्तीयः ॥ ९० ॥

पदान्तीयो नकारो हल् प्रकृत्या भवति, समानपद इति प्राप्तिः यथा (४) पित्र्हन्हविषे ऽअत्तवे, (५) पूषन्तव व्रते व्वयम्, (६) अकृन्कर्म कर्मकृतः ॥

## निवनिनसः प्रपीनम् ॥ ९१ ॥

नि वनि नसः प्रपीनम् एते नकाराः प्रकृत्या भवन्ति, समानपदइति प्राप्तिः नि यथा (७) कृष्णा बभ्रुनीकाशाः, वनि यथा (८) ब्रह्मवनिं त्वा क्षत्रवनिं, नसः यथा (९) व्वावृध्रीनसस्ते मत्स्या अरंस्याय, प्रपी-

(१) ११ । ८ ॥
(२) १५ । १ ॥
(३) ३५ । १९ ॥
(४) १९ । ७० ॥
(५) ३४ । ४१ ॥
(६) ३ । ४७ ॥
(७) २४ । १८ ॥
(८) १ । १७ ॥
(९) २४ । ३९ ॥

नम् यथा (१) अपाम्मपीनमग्ने ॥

श्रीमनाऽ इत्येके ॥ ९२ ॥

अयञ्च नकारः प्रकृत्या भवति एकेषामाचार्याणाम्मतेन, यथा (२) श्रीमनाः शतपयाः, एकेषामिति किम् (३) श्रीमणाः शतपयाः ॥

इन्द्राग्नी चित्रभानो वार्त्तघ्न न्दुःष्वप्न्यन्ध्रुवयोनिः पुरोऽनुवाक्याभिः पुरोऽनुवाक्याश्चर्म्मन्नम् ॥ ९३ ॥

इन्द्राग्नी चित्रभानो वार्त्तघ्नम् दुःष्वप्न्यम् ध्रुवयोनिः पुरोऽनुवाक्याभिः पुरोऽनुवाक्याः चर्म्मन्नम् एते च नकाराः समानपदइति प्राप्तणकाराः प्रकृत्या भवन्ति, इन्द्राग्नी यथा (४) इन्द्राग्न्योरुज्जितिम्, चित्रभानो यथा (५) इन्द्रायाहि चित्रभानो, वार्त्तघ्नम् यथा (६)

---

(१) १७ । ७८ ॥
(२) १७ । ५७ ॥
(३) यथा चरणानां पाठव्यवस्था नत्वणत्वे माध्यन्दिनकाण्वयोर्ज्ञेयेति ॥
(४) २ । १५ ॥
(५) २० । ८७ ॥
(६) २ । ८ ॥

इन्द्रस्य वार्त्रघ्नमसि, दुः ष्वप्न्यम् यथा (१) अप दुःष्वप्न्यंᳫ सुव, ध्रुवयोनिर्यथा (२) ध्रुवक्षितिर्ध्रुवयोनिः, पुरोऽनुवाक्याभिः यथा (३) ऋषभः पुरोऽनुवाक्याभिः, पुरोऽनुवाक्याः यथा (४) पुरोऽनुवाक्या याज्याभिः, चर्मण्वम् यथा (५) साद्ध्योर्ध्वमश्वचर्मण्वम् ॥

## तवर्गे च ॥९४॥

तवर्गे च प्रत्यये ऋषरेफेभ्य उत्तरे नकारः प्रकृत्या भवति, यथा (६) हम्मन्तु होतारः, (७) अवक्रन्देन तालु ॥

## षादनन्तरमृकारे ॥ ९५ ॥

षकारादनन्तरो नकार ऋकारे प्रत्यये प्रकृत्या भवति, यथा (८) उग्रस्त्वेष नृम्णः ॥

---

(१) ३५ । ११ ॥
(२) १४ । १ ॥
(३) २० । १२ ॥
(४) २० । १२ ॥
(५) ३० । १५ ॥
(६) ७ । १५ ॥
(७) २५ । १ ॥
(८) ३३ । ८० ॥

## शिलिसिवर्गमध्यमव्यवहितोऽपि ॥९६॥

शकारलकारसकारव्यवहितः वर्गाश्च ते मध्यमाश्च वर्गमध्यमाः चटतवर्गाः तैश्च व्यवहितो नकारऋटषरेभ्य उत्तरः प्रकृत्या भवति, शकारव्यवहितो यथा (१) दृशानो रुक्मः, (२) सम्राडसि कृशानुः, लकारव्यवहितः यथा (३) निर्ऋतिर्निर्ज्जल्येन, सकारव्यवहितः यथा (४) अपां रसेन वरुणः, चवर्गव्यवहितः यथा (५) प्राचीनं ज्योतिः, (६) अन्तश्चरति रोचना, टवर्गव्यवहितः यथा (७) त्रैष्टुभेन छन्दसा, (८) अनुष्टुभेन छन्दसा, तवर्गव्यवहितो यथा (९) रथिनो जयन्तु, (१०) आर्त्नी इमे, ननु शिलिसिवर्गमध्यमव्यवहितोऽपीत्यनेन सूत्रेण एतैर्वर्णैर्व्यवहितऋटषरेफेभ्य-

---

(१) १२ । १ ॥
(२) ५ । ३२ ॥
(३) २५ । २ ॥
(४) १९ । ९४ ॥
(५) २० । ४२ ॥
(६) ३ । ७ ॥
(७) ११ । ९ ॥
(८) ११ । ११ ॥
(९) २९ । ५७ ॥
(१०) २९ । ४१ ॥

उत्तरो नकारः प्रकृत्या भवति समानपदइत्युक्तम्, तथा 'ऋषरेफेभ्यो नकारो णकारः समानपदे' स्वरयवहकपैश्च' इत्यनेन (१) एतैर्वर्णैर्व्यवहितोऽपि नकारो णकारमापद्यते समानपदे इत्युक्तम्, एवं यएव स्वरयवहकपव्यतिरिक्ता वर्णास्तएव शिलिसिवर्गमध्यमाः अतोऽनेन सूत्रेण न प्रयोजनम् एवन्तर्ह्युभयथा लक्षणानुकथनं शिष्यबुद्धिव्युत्पादनार्थम् ॥

## दीर्घम् ॥ ९७ ॥

विसर्जनीयइत्युपक्रम्य द्वयोर्व्यञ्जनयोः सन्धौ ये लोपागमवर्णविकारास्ते प्रतिपादिताः, अधुना स्वरस्य व्यञ्जनेन सह सन्धौ यः स्वरविकारः सउच्यते ह्रस्वः स्वरो दीर्घविकारमापद्यते अधिकारसूत्रमेतत् ॥

## अश्वरश्मिमतिसुमतिस्वसुतचारयघृणिसेदिमेन्द्रियधारयचित्तभङ्गुरवयुनाऽश्वस्यहृदयघुष्यन्ताभ्यवतादध्यर्चशक्तिपुरुशाचि वकारे ॥ ९८ ॥

अश्व रश्मि मति सुमति स्व सुत चारय घृणि सेदिम इन्द्रिय धारय चित्त भङ्गुर वयुनः अश्वस्य हृदय

(१) आभ्यां सूत्राभ्यामिति (ग) पुस्तकपाठः ॥

घुष्य ऋत अभि अवत अघि अर्घ्र शक्ति पुरु शचि एते ह्रस्वस्वरा वकारे प्रत्यये दीर्घमापद्यन्ते, अभ्र यथा (१) अभ्रावतीं सोमावतीम्, रश्मि यथा (२) रश्मीवतीम्भास्वतीम्, मति यथा (३) प्र देवाय मतीविदे, सुमति यथा (४) सुष्टुतिं सुमतीवृधः, स्व यथा (५) स्वाविद्दह्नोमी, सुत यथा (६) विप्रजूतः सुतावतः, चारय यथा (७) समञ्जिञ्चारया वृषन्, वृणि यथा (८) उरुष्टो वृणीवान् । सेदिम यथा (९) देवानां सकृव्यसुपसे दिमा वयम् । इन्द्रिय यथा (१०) इन्द्रियावान्मदिन्तमः । धारय यथा (११) बृहस्पते धारया वसूनि, चित्र यथा (१२) चित्रावसो स्वस्ति ते पारमशीय,

---

(१) १२ । ८१ ॥
(२) १५ । ६३ ॥
(३) २२ । १२ ॥
(४) २२ । १२ ॥
(५) २४ । ३३ ॥
(६) २० । ८८ ॥
(७) २३ । २१ ॥
(८) २४ । ३९ ॥
(९) २५ । १५ ॥
(१०) ६ । २७ ॥
(११) ६ । ८ ॥
(१२) ३ । १८ ॥

भङ्गुर यथा (१) हन्तारम्भङ्गुरा वताम् । व्युन यथा (२) विद्वोवा दधे व्युनाविदेक÷ । अम्बस्य यथा (३) एकस्त्वष्टुरश्वस्या विशस्ता, हृदय यथा (४) उतापवक्ता हृदया विधंविश्वत्, घुष्य यथा (५) परंष्य्पकरनुघुष्या विशस्त, ऋत यथा (६) ऋतावानमहिषम्, अभि यथा (७) अभीवर्त्तःऽ संविर्ठं॰शो वर्चां द्वाविष्ठः, अवत यथा (८) इदमे प्रावता वच÷, अधि यथा (९) अधीवासँय्या हिरंस्याऽन्यस्मै, अर्च यथा (१०) अर्चा विश्वानराय विश्वा भुवे, शक्ति यथा (११) द्वच्छे श्रित॒ः शक्तीवन्तो गभीराः, पुरु यथा (१२) इमाऽउत्त्वा पुरूवसो । शचि यथा (१३)

---

(१) ११ । २६ ॥
(२) ५ । १४ ॥
(३) २५ । ४२ ॥
(४) ८ । २३ ॥
(५) २५ । ४१ ॥
(६) १२ । १११ ॥
(७) १४ । २३ ॥
(८) १२ । ८८ ॥
(९) २५ । ३९ ॥
(१०) ३३ । २३ ॥
(११) २९ । ४६ ॥
(१२) ३३ । ८१ ॥
(१३) शाखान्तरीयं मृग्यमुदाहरणम् ॥

शचीवसे ॥

## नाऽश्ववद्धिरण्यात् ॥९९॥

अश्ववदित्येतत्पदन्न दीर्घमापद्यते हिरण्यशब्दाद्यदि परं भवति, यथा (१) आपवस्व हिरण्यवदश्ववत् ॥

## अभि विकक्ष्येषँ वीर विश्व वत्स वृत्र वाजयन्तेषु ॥१००॥

अभीत्येतत्पदं विकक्ष्येषम् वीर विश्व वत्स वृत्र वाजयन्त इत्येतेषु न दीर्घमापद्यते । विकक्ष्येषं यथा (२) स्वरभिविकक्ष्येषम् । वीर यथा (३) अभिवीरो ऽअभिसत्त्वा सहोजाः, विश्व यथा (४) इमाँ वाचमभि विश्वे गृणन्तः, वत्स यथा (५) अभि वत्सन्न स्वसरेषु धेनवः, वृत्र यथा (६) अभि वृत्रं वर्द्धमानम्पियारुम्, वाजयन्तः यथा (७) अश्याम वाजमभि वाजयन्तः ॥

---

(१) ८ । ६३ ॥
(२) १ । ११ ॥
(३) १७ । ३७ ॥
(४) २ । १८ ॥
(५) २६ । ११ ॥
(६) १८ । ६९ ॥
(७) १८ । ७४ ॥

## अश्वस्य व्वाजिनइति च ॥१०१॥

अश्वस्य वाजिनइति च द्विपदस्य न पूर्वपदान्तो दीर्घमापद्यते, यथा (१) अश्वस्य व्वाजिनस्त्वचि सिमाः (२) ॥

## विश्व सहभुवपुषवसुषु ॥१०२॥

विश्वइत्येतत्पदं सहइत्येतेषु प्रत्ययेषु दीर्घमापद्यते, सह यथा (३) व्विश्वा साहमवसे नूतनाय, भुव यथा (४) अग्नीं व्विश्वा नराय व्विश्वाभुवे, पुष यथा (५) व्विश्वा पुषं रयिम्, वसु यथा (६) गन्धर्वस्त्वां व्विश्वा वसुः ॥

## नरहामित्रेषु च ॥ १०३ ॥

नरहामित्रेषु च प्रत्ययेषु विश्वशब्दो दीर्घमापद्यते,

---

(१) २२ । ३७ ॥

(२) अस्मिन्सूत्रे इति पदं एवं विधान्योदाहरणसूचनार्थम् । तेन अधिवक्तेति न दीर्घः ॥

(३) नेति नात्रानुवर्त्तते । ७ । ३६ ॥

(४) ३३ । २३ ॥

(५) २५ । ४५ ॥

(६) २ । ३ ॥

नर यथा (१) अर्वा विश्वा नराय, हा यथा (२) विश्वाहा शर्म यच्छतु, मित्र यथा (३) विश्वा मित्रऽऋषिः । पृथग्योगकरणं शिष्याणामवग्रहे व्युदासप्रज्ञप्त्यर्थम् । अर्थव्याख्यानार्थं त्ववयवदर्शनम् ॥

## तिष्ठाद्युदात्तम् ॥ १०४ ॥

तिष्ठेत्येतत्पदं दीर्घमापद्यते यद्याद्युदात्तं भवति, यथा (४) तिष्ठा देवो न सविता, (५) तिष्ठा रथमधियं वज्रहस्ता, आद्युदात्तमिति किम् (६) आतिष्ठ वृत्रहन्रथम् ॥

## प्र वणशृङ्गयासेषु ॥ १०५ ॥

प्र इत्येतत्पदं वन शृङ्ग यास इत्येतेषु प्रत्ययेषु दीर्घमापद्यते, वन यथा (७) प्रा वणेभिः सजोषसः । शृङ्ग यथा (८) प्रा शृङ्गा माहेन्द्राः, यास यथा (९) प्रा या-

(१) ३३ । २३ ॥
(२) १७ । ४८ ॥
(३) १३ । ५७ ॥
(४) ११ । ४२ ॥
(५) १० । २२ ॥
(६) ८ । ३३ ॥
(७) १२ । ५० ॥
(८) २४ । १७ ॥
(९) ३२ । ११ ॥

साय् स्वाहा (१) ॥

## नि वारहारयोरनवग्रहे ॥१०६॥

नि इत्ययमुपसर्गो वारहारयोः प्रत्यययोर्दीर्घमापद्यते अवग्रवर्ज्जिते, वार यथा (२) नीवारांश्च मे, हार यथा (३) नीहारेण प्रावृता, अवयवव्युत्पत्त्यर्थं वचनम् अनवग्रहाणां हि मध्ये वक्ष्यति (४) ॥

## नाऽवनयामि ॥१०७॥

अवेत्येतत्पदं न दीर्घमापद्यते नयामीत्येतस्मिन्प्रत्यये यथा (५) अवं नयामि विष्णुवान् । धारयामेत्येतस्मिन्सूत्रेऽवग्रहस्य नकारे दीर्घत्वं वक्ष्यति तस्यायं पुरस्तादपवादः ॥

## धारयाम योजाव सचस्व नुद मोषु जयतोरुष्य रक्ष यज यच्छ मत्सथ

(१) क्वचित्पुस्तके प्र वनेति पाठः ॥

(२) १८ । १२ ॥

(३) १७ । ३२ ॥

(४) अनवगृह्यतां मध्ये (क) पुस्तकपाठः । अनवग्रहे इत्येतद्ग्रहणं किमर्थम् । ३ । ५० । निहारन्नि हराणि ते स्वाहा । इत्यस्मिन्मन्त्रीयपदपाठे निहारमिति नि । हारम् इत्यवग्रहघटिते पदे निहारमित्यत्र दीर्घापत्तिरतोऽनवग्रहग्रहणम् ॥

(५) ५ । २५ ॥

पिपृत गायता तु येन नकारे ॥१०८॥

धारयाम योज अव सचस्व नुद मोषु जयत उरुष्य रक्ष यज यच्छ मत्स्वथ पिपृत गायत आतु येन एते ह्रस्वा नकारे प्रत्यये दीर्घमापद्यन्ते, धारयाम यथा (१) धारयामा नमोभिः, योज यथा (२) योजान्विन्द्र ते हरी, अव यथा (३) अवा नो देव्या धिया, सचस्व यथा (४) सचस्वा नः स्वस्तये, नुद यथा (५) अग्ने जातान्प्रणुदा नः, मोषु यथा (६) मो षूणऽइन्द्रात्र पृत्सु देवैः, मोऽइति किम् (७) ऊर्ध्वऽऊषुणऽऊतये, जयत यथा (८) प्रेता जयता नरः, उरुष्य यथा (९) उरुष्या णोऽअघायतः। रक्ष यथा (१०) रक्षा णो ब्रह्मणस्पते, यज यथा (११) यजा नो मित्रावरुणा,

(१) १७ । ८० ॥
(२) ३ । ५२ ॥
(३) ११ । ४१ ॥
(४) ३ । २४ ॥
(५) १५ । १ ॥
(६) ३ । ४६ ॥
(७) ११ । ४२ ॥
(८) १७ । ४६ ॥
(९) ३ । २६ ॥
(१०) ३ । ३० ॥
(११) ३३ । ३ ॥

यच्छ यथा (१) यृच्छा नः शर्म्म सप्रथाः, मत्स्थ यथा (२) अपि यथा युवानो मत्सथा नः, पिष्टत यथा (३) निरश्हंसः पिष्टता निरवद्यात्, गायत यथा (४) उपास्मै गायता नरः, आतु यथा (५) आ तू नं इन्द्र वृत्रहन्, (६) येन यथा (७) येना नः पूर्वे पितरः ॥

## भव च ॥ १०९ ॥

भवेत्ययं ह्रस्वो दीर्घमापद्यते नकारे प्रत्यये, यथा (८) भवा नः सप्रथस्तमः सखा वृधे, पृथग्योगकरणमुत्तरार्थम् ॥

## सचावरूथ्यवाजस्य पायुषु च ॥ ११० ॥

सचावरूथ्य वाजस्य पायुः एषु च प्रत्ययेषु भवेत्ये-

(१) ३६ । १३ ॥
(२) ३३ । ३४ ॥
(३) ३३ । ४२ ॥
(४) ३३ । ६२ ॥
(५) ३३ । ६५ ॥
(६) अस्मिन्सूत्रे आ तु ग्रहणं किमर्थं नोचेत्तदा ३३ । ९७ अपरन्तुचे तु नो भवन्तु । इत्यत्रापि द्वितीयतुकारस्य नकारे दीर्घो न भवेदतऽआ तु पदग्रहणम् ॥
(७) ३४ । १७ ॥
(८) १२ । ११४ । अत्र सूत्रे पूर्वसूत्रान्नकारे इति पदं सम्बध्यते ॥

तत्पदं दीर्घमापद्यते, सचा यथा (१) इन्द्रं प्राग्भूर्भ्र्-वा सचा, वरूथ्य यथा (२) उत त्राता शिवो भवा व-रूथ्यः, वाजस्य यथा (३) भवा वाजस्य सङ्गथे, पायुः यथा (४) भवा पायुर्विशो अस्या अदब्धः ॥

## अपृक्तः सौ ॥ १११ ॥

अपृक्तग्रहणेनेह उकारो गृह्यते नाकारो दीर्घविधानात्, अपृक्तउकारो दीर्घमापद्यते सुप्रत्यये, यथा (५) ऊ षु णः ऊर्ध्व ऽऊतये, (६) गोमदूषु णासत्या ॥

## रथि तकारनकारयोः ॥ ११२ ॥

रथीत्येतत्पदं तकारनकारयोः प्रत्यययोर्दीर्घमापद्यते, यथा (७) रथी तमः रथी नाम ॥

## अथोदारिथ शोच पनय सादयजुंवृ-

(१) ३४ । ५६ ॥

(२) ३ । २५ ॥

(३) १२ । ११२ ॥

(४) १३ । ११ ॥

(५) ११ । ४२ ॥

(६) २० । ८१ । अन्यान्यप्युदाहरणानि महीमूषु एता दृक्षासऽऊषुणऽइत्यादीनि द्रष्टव्यानि । सौ किमर्थम् ११ । ४१ उर्दुतिष्ठेत्यत्रापि दीर्घो न स्यादतः सौ पदग्रहणम् ॥

(७) १२ । ५६ ॥

# षशत्वुसलक्ष्मावारात्यृतभवत य-कारे ॥ ११३ ॥

अथ उदारथि धोच पनय सादय ऋजु वृष घ्नु सलक्ष्म आ व अव अराति ऋत भवत एते ह्रस्वा य-कारे प्रत्यये दीर्घमापद्यन्ते, अथ यथा (१) अवाधमँ विमंध्यम ८ श्रथाय, उदारथि यथा (२) अस्माद्द्योने रुदारथा युज्, धोच यथा (३) बृहच्छोचा यविष्ठ्य, पनय यथा (४) देवत्रा पनया युजम्, सादय यथा (५) सादया यज्ञ ८ सुकृतस्य योनौ, ऋजु यथा (६) देवानां भद्रा सुमतिर्ऋजूयताम्, वृष यथा (७) वृषायमाणो वृषभस्तुराषाट्, घ्नु यथा (८) घ्नूयतो हन्ता, सलक्ष्म यथा (९) सलक्ष्मा यद्विषुरूपं भवाति, व यथा (१०)

(१) १२ । १२ ॥
(२) १७ । ७५ ॥
(३) ३ । ३ ॥
(४) १९ । ६४ ॥
(५) ११ । ३५ ॥
(६) २५ । १५ ॥
(७) २० । ४६ ॥
(८) १२ । ५ ॥
(९) ६ । २० ॥
(१०) ७ । ३२ ॥

आधा ये ऽअग्निम्, अघ यथा (१) अघायतः ऽ सम-स्मात्, अराति यथा (२) अराती यतो हन्ता, ऋत यथा (३) मधु व्वाता ऽऋता यते, भवत यथा (४) अर्व्वाञ्चो ऽअद्या भवता यजत्राः ॥

## व वृधवृजोः ॥ ११४ ॥

वइत्ययं ह्रस्वो वृधवृजोः प्रत्यययोर्दीर्घमापद्यते, वृध यथा (५) अस्माद्द्युम्ववावृधे, वृज यथा (६) प्र वावृजे ॥

## अद्य तरठ० हकारचकारभवत वृ-णीमहे देवेषु ॥ ११५ ॥

अद्य इत्ययं ह्रस्वस्तकार हकार चकार भवत वृणी महे देव इत्येतेषु प्रत्ययेषु दीर्घमापद्यते, तम् यथा (७) अद्या तमस्य महिमानम्, हकार यथा (८) अद्या

---

(१) ३ । २७ ॥
(२) १२ । ५ ॥
(३) १३ । २७ ॥
(४) ३३ । ५१ ॥
(५) ७ । ३९ ॥
(६) ३३ । ४४ ॥
(७) ३३ । २७ ॥
(८) ८ । ४५ ॥

ऊवेम, चकार यथा (१) एवमद्धा च व्युच्छ, भवत यथा (२) अद्धा भवता यजत्राः, हणीमहे यथा (३) तद्देवानामवोऽ अद्या हणीमहे, देव यथा (४) अद्धा देवाः (५) ॥

## न होतरि ॥ ११६ ॥

होतृशब्दे प्रत्यये अद्येत्ययं ह्रस्वो न दीर्घमापद्यते, अधस्तनसूत्रेण प्राप्तस्य प्रतिषेधः, यथा (६) तमद्य होतरिषितः (७) अग्निमद्य होतारमवृणीतायम्॥

## शृणुत त्विषि ध्रजि भवत पिबेत स्म तिष्ठ रक्षा मकारे ॥ ११७ ॥

शृणुत त्विषि ध्रजि भवत पिब इत स्म तिष्ठ रक्ष एते ह्रस्वा मकारे प्रत्यये दीर्घमापद्यन्ते, शृणुत यथा

---

(१) २१ । १ ॥

(२) ३३ । ५१ ॥

(३) ३३ । १७ ॥

(४) ३३ । ४२ ॥

(५) तमिति किम् । ३३ । ९४ ॥ अद्य ते ऽअपरम् ॥ अत्रापि दीर्घो न भवेद्-तस्तमिति पद ग्रहणम् ॥

(६) २९ । ३४ ॥

(७) २१ । ५९ ॥

(१) ष्टणुता मऽइमᳪ हवम्, त्विषि यथा (२) ग्रष्मिन्द्रं राय त्विषी मते। धजि यथा (३) चित्तँ व्वातऽइव ध्रजी मान्, भवत यथा (४) आदित्यासो भवता मृडयन्तः, पिब। यथा (५) पिबा मित्रस्य धामभिः, इत यथा (६) इता मरुतो अश्विना, स्म यथा (७) देवासो हिष्मा मनवे समन्यवः। तिष्ठ यथा (८) ग्रत्र्यूयतामभि तिष्ठा महाᳪसि, तिष्ठाद्युदात्तमित्याद्युदात्तस्य दीर्घभावउक्तः, अनुदात्तार्थआरम्भः, रक्ष यथा (९) रक्षा माकिर्नोऽ अघशᳪ सऽईशत (१०) ॥

## विश्वदेव्यसोमौ वत्याम् ॥११८॥

विश्वदेव्यसोमावेतौ ह्रस्वौ वति प्रत्यये दीर्घमापद्ये-

---

(१) ७ । ३४ ॥

(२) १६ । १७ ॥

(३) २९ । २२ । इदं शाखान्तरविषयं । माध्यन्दिनानां तु दीर्घान्तादेव मतुप् । अतएवात्र 'अन्तःपददीर्घभावे' ४ अ० । ८४ सू० । इति वक्ष्यमाणसूत्रेण पदपाठे स्थितोपस्थितन्न भवति । इति ज्ञेयम ॥

(४) ८ । ४ ॥

(५) ३३ । १० ॥

(६) ३३ । ४७ ॥

(७) ३३ । ९४ ॥

(८) ३३ । १३ ॥

(९) २९ । ४७ ॥

(१०) रक्षा मकारे (क) इति पुस्तकपाठः ॥

ते, विश्वदेव्य यथा(१) अदितिष्ट्वा देवी विश्वदेव्यावती, सोम यथा (२) अश्वावतीᳬ सोमावतीम्, वच्यामिति किम् (३) पितृणाᳬ सोमवताम् (४) ॥

## उष महोभिर्नक्तमीकारैकारौकारनकारेभ्यः ॥ ११९ ॥

उषदित्ययं ह्रस्वो दीर्घमापद्यते महोभिः नक्त ईम् ईकारएकारौकारनकारेभ्यः परश्चेद्भवति, महोभिः यथा (५) प्रथमानामहोभिः, उषासा नक्ता बृहती, नक्त यथा (६) नक्तोषासा समनसा, ईम् यथा (७) प्रति धेनुमिवायतीमुषासम्, ईकारात् यथा (८) देवीऽ उषासा नक्ता, एकारात् यथा (९) यजतेऽ उपाकेऽ उषासा नक्ता, औकारात् यथा (१०) दिव्येन योनाऽउषासा

(१) ११ । ६१ ॥
(२) १२ । ८१ ॥
(३) २४ । १८ ॥
(४) वच्यामिति स्त्रीलिङ्गनिर्देशाल्लिङ्गान्तरविशिष्टे पदे मा भूद्दीर्घत्वम् ॥
(५) २० । ४० । ४१ । प्रकरणानुसारादन्त्यस्य व्याख्यानाद्दीर्घत्वं बोध्यम् ॥
(६) १२ । २ ॥
(७) १५ । २४ ॥
(८) २८ । १४ ॥
(९) २९ । ३१ ॥
(१०) २७ । १७ ॥

नकृत्वा, नकारात् यथा (१) अश्वावतीर्गोमतीर्न्नऽउषासः, एतेभ्यः परइति किम् (२) समिद्धऽ इन्द्रऽउषसाम् ॥

## पूरुषोऽवसाने ॥ १२० ॥

पूरुषइति (३) दीर्घो निपात्यते अवसाने चेद्भवति, यथा (४) न सरिष्यति पूरुषः, अवसानइति किम् (५) पुरुषऽएव ॥

## पूष्णो जहीमस्तेष्वच्छ ॥ १२१ ॥

अच्छेत्ययं ह्रस्वो दीर्घमापद्यते पूष्णः जहीमः ते इत्येतेषु प्रत्ययेषु, पूष्णः यथा (६) अच्छा पूष्णःऽ, जहीमः यथा (७) अच्छा जहीमोऽश्विना ये, ते यथा (८) अच्छा ते रूपमुत्तमम् ॥

---

(१) ३४ । ४० ॥

(२) २० । ३६ । अस्मिन्दीर्घप्रकरणे यानि ह्रस्वान्तान्यवग्रहविशिष्टानि स्थितोपस्थितघटितानि पदानि पदपाठे सन्ति तेषां पदानां अव्यवहितस्यासम्भवाद्व्यवधानेऽपि दीर्घत्वं बोध्यम् ॥

(३) पुरूष इति 'क' पुस्तकपाठः । आदिदीर्घमापद्यते 'ख' पुस्तकपाठः ॥

(४) १२ । ९१ ॥

(५) ३१ । २ ॥

(६) २५ । २७ ॥

(७) ३५ । १० ॥

(८) २९ । १८ ॥

नरस्सप्तऽऋषीन्नस्तऽआहुर्नियुद्भिष्षु यत्र ॥ १२२ ॥

नरः सप्तऽऋषीन् नः तऽआहुः नियुद्भिः एतेषु प्रत्ययेषु यत्रेत्ययं ह्रस्वो दीर्घमापद्यते, नरः यथा (१) युवानरः सञ्च विचद्रुवन्ति, सप्तऽऋषीन्यथा (२) युवा सप्तऽऋषीन्नपरः, नः यथा (३) युवा नश्चक्रा जरसं तनूनाम्, तऽआहुः यथा (४) युवा तऽआहुः परमं जनित्रम्, नियुद्भिः यथा (५) युवा नियुद्भिः सचसे शिवाभिः (६) ॥

अभिमाति पृतनासु सपत्नधूर्विश्व-समत्सु पृतना व्रातेभ्यः सहेः ॥१२३॥

अभिमाति पृतनासु सपत्न धूः विश्व समत्सु पृतना

(१) २९ । ४८ ॥
(२) १७ । २६ ॥
(३) २५ । २२ ॥
(४) २९ । १५ ॥
(५) १३ । १५ ॥
(६) तऽआहुरिति किमर्थम् । २३ । १६ यत्र ते यगुरित्यत्र पदे दीर्घो न भवेदतस्तऽआहुरिति पदग्रहणम् ॥ एतेष्विति किम् । ३२ । ८ । यत्र विश्वम्भवत्येकनीडमित्यत्रापि दीर्घो मा भूदतएतेषु पदेषु परेष्वेवेति ग्रहणम् । अत्र यत्र पदे तकारस्य द्वित्वन्न भवति कुतः ६ अ० सू० २७ वक्ष्यमाणसूत्रेण निषेधात् ॥

व्रात इत्येतेभ्यउत्तरस्य सहेर्ह्रस्वो दीर्घमापद्यते, अभिमाति यथा (१) सँव्वृञ्ञ्वयान्यभिमातिषाहः, पृतनासु यथा (२) जेतारमग्निम्पृतनासु सासहिम्, सपत्न यथा (३) सिꣳह्यसि सपत्नसाही, धूः यथा (४) उस्रावेतं धूर्षाहौ, विश्वे यथा (५) विश्वासाहमवसे नूतनाय, समत्सु यथा (६) येना समत्सु सासहः, पृतना यथा (७) पृतनाषाह्याय च, व्रात यथा (८) सतो वीराऽउरवो व्रातसाहाः ॥

## उक्थाच्च शंसेः ॥१२४॥

उक्थशब्दात्परस्य शंसेर्धातोर्ह्रस्वो दीर्घमापद्यते, यथा (९) उक्थशसः उक्थाशंसश्चरन्ति ॥

## एवाच्छ चक्रमाथ ॥१२५॥

एव अच्छ चक्रम अथ एते ह्रस्वा व्यञ्जनमाले दी-

(१) १२ । ११३ ॥
(२) ११ । ७६ ॥
(३) ५ । १० ॥
(४) ४ । ३३ ॥
(५) ७ । ३६ ॥
(६) १५ । ४० ॥
(७) १८ । ६८ ॥
(८) ३२ । ४६ ॥
(९) १७ । ३१ ॥

र्घमापद्यन्ते, एव यथा (१) एवा नो दूर्वे प्रतनु, अच्छ यथा (२) गिरिभ्याच्छा वदामसि, चक्रम यथा (३) यद्देनश्चकृमा वयम्, अथ यथा (४) अथा मन्दस्व जुजुषाणः (५) ॥

## विद्मा सौत्रामण्याम् ॥ १२६ ॥

विद्मेत्ययं ह्रस्वो दीर्घमापद्यते सौत्रामणीमन्त्रं मुक्त्वा, यथा (६) विद्मा तेऽअग्ने, असौत्रामण्यामिति किम् (७) याश्च विद्म याः ॥ ऽउं च न प्र विद्म ॥

## अधा यत्तस्मग्ग्नावायुषु ॥ १२७ ॥

अधेत्ययं ह्रस्वो व्यञ्जनमात्रे दीर्घमापद्यते, यथा

(१) १३ । २० ॥
(२) १६ । ४ ॥
(३) ३ । ४५ ॥
(४) २६ । २५ ॥
(५) एव शब्दोऽत्र उपमानार्थएव कुतः सर्वैरुवटाद्याचार्य्यैर्व्याख्यानात् । अवधारणार्थस्य तु न भवति । ३२ । १ । तदेव शुक्रम् । सऽएव जातःऽ । संहिताऽधिकारान्मन्त्रावसाने तु न दीर्घो भवति । यथा ३३ । ७८ ॥ ता नोऽअच्छ, प्रायः पदादावेव एवशब्दो गृह्यते । व्यञ्जनमात्रे नो चेत्तदा ३१ । १ एवमित्यत्रापि दीर्घः स्यात्तदर्थं व्यञ्जनमात्रग्रहणं भाष्ये कृतमिति ॥
(६) १२ । १९ ॥
(७) १९ । ६८ ॥

(१) अधा सपत्नानिन्द्राग्नी मे, यत् स्म ग्ना वायुः इत्येतेषु प्रत्ययेषु न दीर्घमापद्यते, यत् यथा (२) अमुत्र भूयादध यद्यमस्य, स्म यथा (३) अध स्म ते व्रजनम्, ग्ना यथा (४) रुद्रोऽधग्नाः, वायुम् यथा (५) अध वायुं नियुतः, अयत्स्मग्नावायुष्विति किम् (६) अधा यथा नः पितरः ॥

# पूर्वो द्वन्द्वेष्ववायुषु ॥ १२८ ॥

द्वन्द्वेषु समासेषु वायुरहितेषु पूर्वः पदान्तो दीर्घमापद्यते, यथा (७) अग्नीषोमौ, (८) मित्रावरुणौ, (९) इन्द्राबृहस्पती, द्वन्द्वेष्विति किम् (१०) अवीरहणौ ब्रह्मचोदनौ, अवायुष्विति किम् (११) इन्द्रवायुभ्यां त्वा ॥

---

(१) १७ । ६४ ॥
(२) २७ । ९ ॥
(३) १५ । ६२ ॥
(४) ३३ । ४८ ॥
(५) २७ । २४ ॥
(६) १९ । ६८ । अधेति चत्वारि पदादिभूतानि पदानि व्यञ्जनमात्रे दीर्घमिति नो चेत्तदा २७ । ९ । अमुत्र भूयादध यत् । इत्यादिषु चतुर्षु पदेष्वपि दीर्घः स्यात्तदर्थमयदित्यादिग्रहणम् ॥
(७) २ । १५ ॥
(८) २ । ३ ॥
(९) २५ । ६ ॥
(१०) ४ । ३३ ॥
(११) ७ । ८ ॥

हरि शयेत्येके ॥ १२९ ॥

हरि इत्यस्य एके आचार्या दीर्घमिच्छन्ति शयप्रत्यये, यथा (१) हरि शया हरी शया, एकइति किम् (२) या तेऽअग्ने हरि शया ॥

पिबा सोमं पिबा सुतस्य स्तथा मयो भुवो नृरणे शर्मीष्व मामहानो मामहन्तामशीतम रीरिषो रीरिषत यामयन्ति हि ष्मा ते वर्द्धया रयिꣳ श्रुधी हव ञ्चरा सोम सूयवसिनी श्रोता ग्रावाणो धर्षा मानुषः पाथा दिवो युक्ष्वा हि गमया तमः सिञ्चता सुतम्परीवापऽ उक्‌क्था शस्त्राण्यक्ता हवीꣳष्याच्च्याजानु क्षामा रेरिहत्क्षामा भिन्दन्तो रुहेमा स्वस्तये

(१) ५ । ८ ॥

(२) यथा पाठं व्यवस्था काण्वमाध्यन्दिनयोः शाखिनोर्ज्ञातव्या ॥

जनयथा च धारयाम पितरा मृधो
बोधा मे विचृता बन्धमवता हवेषु
शृणुधी गिरो रक्षातोकञ्चर्षणिस-
हाञ्चर्षणीधृतो येना समत्सु वनेमा
तऽऋद्ध्यामा ते शिक्षासखिभ्यस्त्व-
वा रथ न्दीया रथेनेता जयत वर्द्धया
त्वं प्रब्रवा मा घृतस्या जगन्था पर-
स्या ररिमा हि पुरी तता प्लीहाक-
र्णशुण्ठाकर्णौ प्रकृतिदीर्घावित्ये-
के नी काशाऽअनू काशेन चक्रा
जरसम्मिथूकस्तरता सखायः सास-
ह्वानपामार्गोभयादतऽऋतीषहम-
भीषु सुष्टरीमा जुषाणा यजा देवा-
न्येना पावकाश्चायन्तो यदी सरमा
स्वदया सुजिह्व निषद्या दधिष्व

सदतना रणिष्ट नभरा चिकित्वाँश् चिकित्सा गविष्टाववाददद्दक्षा चायुनक्वसृजा रराणः सादन्न्यमिति च ॥ १३० ॥

पिबा सोमम्, पिबा सुतस्य, स्या मयो भुवः, नूरणे, शमीष्व, मामहानः, मामहन्ताम्, अश्रीतम, रिरिषः, रीरिषत, यामयन्ति, हिष्मा ते, वर्द्धयारयिम्, श्रुधी हवम्, चरा सोम, सूयवसिनी, श्रोता ग्रावाणः, धर्षा मानुषः, पाथा दिवः, युक्ष्वा हि, गमयातमः, सिञ्चता सुतम्, परीवापः, उक्था शस्त्राणि, अत्ता हवींषि, आच्या जानु, त्मामा रेरिहत्, त्मामा भिन्दन्तः, कहेमा स्वस्तये, जनयथा च, धारयाम, पितरा स्थः, बोधा मे, विचृताबध्नम्, अवता हवेषु, शृणुधी गिरः, रक्षा तोकम्, चर्षणीसहाम्, चर्षणीधृतः, येना समत्सु, वनेमा ते, ऋध्यामा ते, शिक्षा सखिभ्यः, तत्रारथम्, दीया रथेन, इता जयत, वर्द्धया त्वम्, प्रभ्रवामा घृतस्य, आजगन्था परस्याः, ररिमा हि, पुरी तता, लोहाकर्णः, शुराठाकर्णः, नी काशाः, अनू काशेन, चक्राजरसम्, मिथू कः, तरता सखायः, सा सह्वान्, अपा मार्गः, उभया दतः, ऋती षहम्, अभीषु, सुष्टरीमा जुषाणा, यजा देवान्, येना पा-

वक, अभ्वायन्तः, यदी सरमा, स्वदया सुजिह्व, निषद्या दधिष्व, सदतना रणिष्टन, भरा चिकित्वान्, चिकित्सा गविष्टौ, अवा ददत्, रक्षा च, आयुनक् सृजा रराणः, सादन्न्यम्, एते ह्रस्वाद्दीर्घमापद्यन्ते, पिब सोमम् यथा (१) पिबा सोमꣳ शतक्रतो, (२) पिबा सोमं मनुष्ष्वधं मदाय, पिब सुतस्य यथा (३) पिबा सुतस्यान्धसो मदाय, स्थ मयो भुवः यथा (४) आपो हि ष्ठा मयो भुवः, नु रणे यथा (५) तूर्वन्नयामन्नेतशस्य नू रणे, शमीष्व यथा (६) हविः शमीष्व, ममह्वानः यथा (७) समिद्धेऽअग्नावधि मामह्वानः, ममह्न्ताम् यथा (८) तन्नो मित्रो वरुणो मामहन्ताम्, अभि तम यथा (९) अग्ने दब्धायोऽशीतम, रीरिषः यथा (१०) मा

(१) २६।४॥ केचिदेतानि द्विपदैकपदान्यष्टसप्ततिरूपाणि कृतदीर्घाणि निपात्यन्ते ॥

(२) ७।३६॥

(३) ३३।७०॥

(४) ११।५०॥

(५) १७।१०॥

(६) १।१५॥

(७) १७।५५॥

(८) ३३।४२॥

(९) २।२०॥ ५ अ० ३७ सू० प्रातिशाख्यवक्ष्यमाणसूत्रे वायुरसजातइत्यत्रानवग्रहे चापपाठात् विकारत्वाच्चावग्रहः । यथा चरणं पाठव्यवस्था । काण्वा नावगृह्णन्ति । माध्यन्दिनास्त्ववगृह्णन्ति । अशितमेत्यशि । तम । एवमन्यत्राप्यवग्रहघटितपदपाठो ज्ञातव्यः ॥

(१०) १६।१६॥

नोऽ अश्वेषु रीरिषः, रिरिषत यथा (१) मा नो मह्या रीरिषतायुः, यमयन्ति यथा (२) प्रिया देवेष्वायामयन्ति, हि स्म ते यथा (३) अस्ति हि ष्मा ते, हीति किम् (४) अध स्म ते व्रजनम्, वर्द्धय रयिम् यथा (५) अधा नो वर्द्धया रयिम्, श्रुधि हवम् यथा (६) इमं मे वरुण श्रुधी हवम्, चर सोम यथा (७) प्रचरा सोम दुर्य्यान्, श्रोत ग्रावाणः यथा (८) श्रोता ग्रावाणो विदुषो न यज्ञम्, धर्ष मानुषः यथा (९) युञ्जामि धर्षा मानुषः, पाय दिवः यथा (१०) पाया दिवो विमहसः, युच्व हि यथा (११) युच्वा हि केशिना हरी, गमय तमः यथा (१२) अधरं गमया तमः, सिञ्चत

(१) २५ । २२ ॥
(२) २५ । ३९ ॥
(३) ३ । ४६ ॥
(४) १५ । ६२ ॥
(५) ३ । १४ ॥
(६) २१ । १ ॥
(७) ४ । ३७ ॥
(८) ६ । २६ ॥
(९) ६ । ८ ॥
(१०) ८ । ३१ ॥
(११) ८ । ३४ ॥
(१२) ८ । ४४ ॥

यथा (१) परीतो षिञ्चता सुतम्, परि वापः यथा (२) परी वापं÷ पयो दधिं, उक्थ शस्त्राणि यथा (३) छन्दोंभिरुक्था शस्त्राणिं, अक्त हवीꣳषि यथा (४) अक्ता हवीꣳषि प्रयंतानि बर्हिषिं, आच्य जानु यथा (५) आच्या जानुं दक्षिणतः॑। चाम रेरिहत् यथा (६) चामा रेरिहद्वीरुधं÷, चाम भिन्दन्तः यथा (७) चामा भिन्दन्तोंऽ अरुणीःऽ । वहेम स्वस्तये यथा (८) अस्तवन्तीमा वहेमा स्वस्तयें, जनयथ च नः यथा (९) आपों जनयंथा च नः, धारय मयि यथा (१०) धारया मयिं प्रजाम्, तर स्पृधः यथा (११) अग्ने त्वन्तरा स्पृधं÷, बोध मे यथा (१२) बोधा मे अस्य, विचृत बन्धम् य-

---

(१) १९ । २ ॥
(२) १९ । २१ ॥
(३) १९ । १८ ॥
(४) १९ । ६९ ॥
(५) १९ । ६२ ॥
(६) १२ । ६ ॥
(७) १९ । ६९ ॥
(८) २१ । ६ ॥
(९) ११ । ५२ ॥
(१०) ११ । ५८ ॥
(११) ११ । ७२ ॥
(१२) १२ । ४२ ॥

था (१) व्विचृता बन्धमेतम्, अवत हवेषु यथा (२) देवा अवता हवेषु, श्रुणुधि गिरः यथा (३) पाहि श्रुणुधी गिरः, रक्ष तोकम् यथा (४) रक्षा तोकमुत त्मना, चर्षणिसहाम् यथा (५) चर्षणीसहं व्वेत्त्वाज्ज्यस्य, चर्षणिधृतः यथा (६) ओमासश्चर्षणीधृतः, येन समत्सु यथा (७) येना समत्सु सासहः, वनेम ते यथा (८) व्वनेमा तेऽअभिष्टिभिः, ऋध्याम ते यथा (९) ऋध्यामा तऽओहैः, शिक्ष सखिभ्यः यथा (१०) शिक्षा सखिभ्यो हविषि, तव रथम् यथा (११) तवा रथमुप शग्मसठ० सदेम, दीय रथेन यथा (१२) बृहस्पते परि दीया रथेन, इत जयत यथा (१३) प्रेता जयता

---

(१) ११ । ६३ ॥
(२) १७ । ४३ ॥
(३) १३ । ५२ ॥
(४) १३ । ५२ ॥
(५) २८ । १ ॥
(६) ७ । ३३ ॥
(७) १५ । ४० ॥
(८) १५ । ४० ॥
(९) १५ । ४४ ॥
(१०) १७ । २१ ॥
(११) २९ । ४५ ॥
(१२) १७ । ३६ ॥
(१३) १७ । ४६ ॥

नरः, वर्द्धय त्वम् यथा (१) तमग्ने वर्द्धया त्वम्, प्रव्र-वाम घृतस्य यथा (२) व्यन्नाम प्र्व्रवामा घृतस्य, जगन्य परस्याः यथा (३) परावत ऽआजगन्या पर-स्याः, रश्मि हि कामम् यथा (४) व्यन्तोऽ अद्य रश्मिा हि कामम्, पुरि तता यथा (५) अन्तरिक्षं पुरी तता, अस्य पदस्यापवादोऽभिप्रेतः तथा हि, (६) पशुपतेः पुरीतदित्येतदपि भवति, स्तीहाकर्णः शुण्ठा-कर्णः एतौ शब्दौ प्रकृतिदीर्घावित्येके आचार्या मन्यन्ते, यथा (७) स्तीहाकर्णः शुण्ठाकर्णः, नि काशाः यथा (८) बभ्रुनी काशाः पितृणाम्, अनु काशेन यथा (९) अन्तरमनू काशेन, चक्र जरसम् यथा (१०) युवा नश्चक्रा जरसन्तनूनाम्, मिथु कः यथा (११) गात्राण्यसिना

(१) १७ । ५२ ॥

(२) १७ । ९० ॥

(३) १८ । ७१ ॥

(४) १७ । ७५ ॥

(५) १५ । ८ ॥

(६) ३९ । ९ । अत्र विभक्तिरविवक्षिता । कुत्रचित् सर्वाविभक्त्यन्तं पुरीततेति पदं गृह्यते ॥

(७) २४ । ४ । तत्पक्षे नावग्रहः । यथा चरणं पाठव्यवस्था ॥

(८) २४ । १८ ॥

(९) २५ । २ ॥

(१०) २५ । २२ ॥

(११) २५ । ४३ ॥

मिथू क॒ः, तरत सखायः यथा (१) प्रतरता सखाय॒ः, ससह्वान् यथा (२) सासह्वाँश्च॒भियुग्वा च, अप-मार्ग यथा (३) अपा मार्गं त्वमस्मत्, उभय दतः यथा (४) ये के चोभयादत॒ः, ऋति षहम् यथा (५) तँवो दस्ममृतीषहम्, अभि सु यथा (६) अभी षुण॒ः सखीनाम्, सुष्टरीम जुषाणा यथा (७) बर्हिःऽ सुष्टरीमा जुषाणा, यज देवान् यथा (८) यजा देवाँ २ ॥ऽ ऋतम्बृहत्, येन पावक यथा (९) येना पावक चक्षसा, अश्वयन्तः यथा (१०) अश्वायन्तो मघवन्, यदि सरमा यथा (११) विदद्यदी सरमा, स्वदय सुजिह्व यथा (१२) समञ्जन्स्वदया सुजिह्व, निषद्य दधिष्व

(१) ३५ । १० ॥
(२) ३९ । ७ ॥
(३) ३५ । ११ ॥
(४) ३१ । ८ ॥
(५) २६ । ११ ॥
(६) ३६ । ६ ॥
(७) २९ । ४ ॥
(८) ३३ । ३ ॥
(९) ३३ । ३२ ॥
(१०) २७ । ३६ ॥
(११) ३३ । ५९ ॥
(१२) २९ । २६ ॥

यथा (१) बर्हिष्ष्या निषद्द्या दधिष्व । सदतन र- शिष्टन यथा (२) सदतना रशिष्टन, भर चिकित्वान् यथा (३) उत्तानायामवभरा चिकित्वान्, चिकित्स गविष्टौ यथा (४) अचिकित्सा गविष्टौ, अवददत् यथा (५) भगेमां धियमुदवा ददन्नः, रक्ष च यथा (६) रक्षा च नोऽअधि च ब्रूहि देव, अयुनक् यथा (७) यमेन दत्तं त्रितऽएनमायुनक्, सृज रराणः यथा (८) वनस्पतेऽवसृजा रराणः, सदन्यम् यथा (९) सादन्यं विदथ्यम्, ॥

## अनुनासिकमुपधा प्रागन्तस्थायाः ॥ १३१ ॥

(१) २६ । २३ ॥
(२) २६ । २४ ॥
(३) ३४ । १४ ॥
(४) ३४ । २३ ॥
(५) ३४ । ३६ ॥
(६) ३४ । २७ ॥
(७) २९ । १३ ॥
(८) २७ । २१ ॥
(९) ३४ । २१ । इतिशब्दश्चकारशब्दश्चानुक्तसमुच्चयार्थः । तेन ३७ । १६ । यच्छ देवायुर्वमित्यत्रापि दीर्घः । यच्छेति ग्रहणं नो चेत्तदा १ । १२ । यज्ञपतिन्देवयुर्वमित्यत्रापि दीर्घः स्यात्तदर्थं यच्छपदग्रहणम् ॥

ह्रस्वो दीर्घः प्लुतः सानुनासिको निरनुनासिकउदात्तोऽनुदात्तः स्वरितइति स्वरधर्माः तत्र पदे दृष्टस्यान्यथाभावो विकारउच्यते सचात्र स्वरे एवाधिकृतो न व्यञ्जने यतो दीर्घमित्यारभ्यते अतइहापि स्वरस्यैवानुनासिक्यं विकारउच्यते इयांस्तु विशेषः यत्र नकारमकारावेवपरभूतौ तयोश्च विकारे सति स्वरस्य विकारः। यत्र तु तयोः प्रकृतिभावो वा लोपो वा तत्र स्वरस्यापि विकारो न भवति यथा (१) अस्मान्त्सीते इत्येवमादि, (२) यत्प्रागन्तस्थासंशब्दनात्, (३) यदित-ऊर्ध्वमनुक्रमिष्यामस्तत्रोपधाभूतः स्वरोऽनुनासिकं स्वरं विकारमापद्यते इत्येतदधिकृतं वेदितव्यम् वक्ष्यति (४) "नुः" "चच्छयोः शम्" यथा (५) सुषीन् चक्षुषे श्वाचे सुषीँश्चक्षुषे, गवयान् त्वष्ट्रे बृहस्पतये गवयाँस्त्वष्ट्रऽउष्ट्रान् ॥

## स्वरऔपशविः ॥ १३२ ॥

औपशविराचार्यः स्वरएव प्रत्ययउपधानुनासिक्यमिच्छति, नुरिति वक्ष्यति अतस्तस्यैव परभूतो यः स्व-

(१) १२। ७०॥

(२) ४ अ. ९ सू. अन्तस्थामन्तस्थास्वनुनासिकां परसस्थानामिति सूत्रात्प्रागधिकारोऽयम्॥

(३) अधिकारउपधायाः प्राक् अन्तस्थासंशब्दनात् इति "स्व" पुस्तक पाठः॥

(४) अ. ३। सू. १३४। १३५॥

(५) २४। २९॥ २४। २८॥

रुक्तः उपधा च तथैव ग्राह्या, यथा (१) महान् इन्द्रः महाँ २॥ऽ इन्द्रो वज्रहस्तः, (२) स्वान् अहम् उन्नयामि स्वाँ २॥ऽ अहम्, (३) शत्रून् अप जहि शत्रूँ१॥ रप मृधो नुदस्व, स्वरइति किम् (४) गवयान् त्वष्ट्रे गवयाँस्त्वष्ट्रे ॥

## अनुस्वारेण व्यञ्जने ॥ १३३ ॥

नकारात्परे व्यञ्जनेऽनुस्वारेण व्यवधानमिच्छत्यागमिकेन औपशविराचार्यः, अयञ्च उपधानकारयोरितरो भवति यत्र नकारस्य शकारः सकारो वा विहितस्तत्रापि भवति, (५) "अनुस्वार ठं०रोष्मिस्वति" वचनात्, यथा (६) सुषीन् चक्षुषे सुषीꣳश्चक्षुषे, गवयान् त्वष्ट्रे गवयाꣳस्त्वष्ट्रे ॥

## नुः ॥ १३४ ॥

नकारो ऽधिकृतो वेदितव्यः ॥

---

(१) २६ । १० ॥
(२) ११ । ८२ ॥
(३) ७ । ३७ ॥
(४) २४ । २८ ॥
(५) ४ अ. १ । सू. १ ॥
(६) पूर्ववदङ्को बोध्यः ॥

## चच्छयोः शम् ॥ १३५ ॥

चकारच्छकारयोः प्रत्यययोर्न्नकारः शकारमापद्यते अनुनासिकं चोपधा यथा (१) अहीन् च अहीँश्च सर्व्वान्, सुषीँश्चक्षुषे, छकारोदाहरणं मृग्यम्, रूपोदाहरणन्तु विद्यते यथा विद्वान् छकारः विद्वाँश्छकारः ॥

## तथयोः सम् ॥ १३६ ॥

तकारथकारयोः प्रत्यययोर्न्नकारः सकारमापद्यते अनुनासिकं चोपधा, यथा (२) गवयान् त्वष्ट्रे गवयाँस्त्वष्ट्रे, (३) अन्यान् ते अन्याँस्ते, थकारस्य रूपोदाहरणम् यथा विद्वान् थकारः विद्वाँस्थकारः ॥

## दधन्वान्स्ववान्यकारे लोपम् ॥१३७॥

दधन्वान् स्ववान् एतौ नकारौ यकारे प्रत्यये लोपमापद्येते, अत्र च लोपविधानादुपधानुनासिक्यमपि न भवति, यथा (४) चोक्तम् स्वराणामानुनासिक्यं प्रतिजानन्ति सर्व्वदा, वर्जयित्वा तमाकारं यत्र लोपो

---

(१) १६ । ५ ॥

(२) २४ । २८ ॥

(३) १७ । ११ ॥

(४) एतत्पद्यं वासिष्ठीशिक्षायाम् ॥

विधीयते, यथा (१) दधन्वान् यः दधन्वा यो नर्य्योऽ अप्स्वन्तरा, स्ववान् यथा (२) स्ववायाँस्वव्वीङ् ॥

## रयिवृधे च ॥१३८॥

रयिष्टधइत्येतस्मिँश्च प्रत्यये पूर्वो नकारो लोपमापद्यते यथा (३) अन्नान् रयिष्टधः पीवोऽ अन्ना रयिष्टधः, उक्तहेतुत्वादत्राप्युपधानुनासिक्यन्न भवति (४) ॥

## नपुंसकादिकारस्य ॥१३९॥

नपुंसकादुत्तरो यो नकारस्तस्य संबन्धिनइकारस्य लोपो भवति, यथा (५) एमन्त्सादयामि, भस्मन्त्सादयामि, एमनि भस्मनीति प्राप्ते इकारलोपश्छान्दसः, नपुंसकादुत्तरस्येकारस्य लोपउक्तोऽनपुंसकादपि भवति यथा (६) अश्मन्नूर्जम् अश्मनीति प्राप्ते ॥

---

(१) १९ । २ ॥

(२) ३४ । २६ । नकारविकारसंहिताचरितमुपधानुनासिक्यमपि न प्रवर्त्तते । तथाचोक्तम् पाराशरीशिक्षायाम् । उपधारञ्जनं कुर्य्यान्मनोर्विकरणे सति ॥ लोपे प्रकृतिभावे वा नोपधारञ्जनं भवेदिति ॥

(३) २७ । २३ ॥

(४) नैतान्युदाहरणानि मनोऽवगाहते उत्तरसूत्रविरोधात् ॥

(५) १३ । ५३ ॥

(६) १७ । १ ॥

## न सप्तम्यामन्त्रितयोः ॥ १४० ॥

सप्तम्यामंत्रितयोर्विभक्त्योः सम्बन्धिनङ्कारस्य न लोपो भवति, यथा (१) अपान्त्वा सधिषि, अपान्त्वा पार्थसि, एते सप्तम्याउदाहरणे (२) हे पृथिवि आमन्त्रितविभक्तेरुदाहरणम् अनकारार्थआरम्भः (३) ॥

## नॄन्पकारे विसर्जनीयम् ॥ १४१ ॥

नॄनित्ययं नकारः पकारे प्रत्यये विसर्जनीयमापद्यते अनुनासिकं चोपधा, यथा (४) नॄन् पाहि नॄँःऽ पाहि शृणुधी गिरः (५) ॥

## शत्रून् परिधीन् क्रतून् वनस्पतीन्त्स्वरे रेफम् ॥ १४२ ॥

शत्रून् परिधीन् क्रतून् वनस्पतीन् एते नकाराः स्वरे प्रत्यये रेफमापद्यन्ते अनुनासिकं चोपधा, शत्रून्

---

(१) १३ । ५३ ॥

(२) १ । २५ । उभयथा लक्ष्यलक्षणदर्शनात् यथालक्षणं योज्यमिति निरवद्यम् ॥

(३) पूर्वोक्तसूत्रोदाहरणे अश्मन् शब्दः पुल्लिङ्गः "पाषाणप्रस्तरग्रावोपलाश्मान-इत्यभिधानात् । यच्च निशब्दो बहुलमिति पूर्वमुक्तन्तन्निशब्दस्येति न पौनरुक्त्यमिति ॥

(४) १३ । ५२ । न व्याकरणान्तरसिद्धोपध्मानीयप्रकृतिभावौ विधातव्यौ ॥

(५) ४ अ. ३ सू. अनुनासिकमुपधा, इति वक्ष्यमाणसूत्रेण पूर्वोत्तरयोरुदाहरणयोरुपधाया आनुनासिक्यं भवति ॥

यथा (१) भवून् अप जहि भत्तू१॥२पम्ध्व÷। परिधीन् यथा (२) व्वन्वन्न वातः परिधी१॥ २पं÷, क्रतून् यथा (३) अग्ने कृत्वा क्रतू१॥ २नुं, व्वनस्पतीन् यथा (४) ये वा व्वनस्पती१॥२नुं ॥

## आकारोपधो यकारम् ॥ १४३ ॥

आकारोपधो नकारो यकारमापद्यते स्वरइत्यनुवर्त्तते अनुनासिकं चोपधा, यथा (५) महान् इन्द्रः महान्यइन्द्रइत्येवं संहिता प्राप्नोति ततो (६) "यवयोः पदान्तयोः स्वरमध्ये लोप"इति यकारलोपे कृते (७) "न

(१) ७ । ३७ ॥

(२) १९ । ५३ ॥

(३) १९ । ४० ॥

(४) १३ । ७ । अत्रोदाहरणचतुष्टये सर्वप्राचीनसंहितापुस्तके सार्द्धिका मात्रा लिखिता तत्र प्रमाणं बृहदमोघनन्दिनीशिक्षावचनं "अनुरङ्गाः पञ्चैकार्द्धमात्रिका भवन्ति इति ज्ञेयम् ॥

(५) ७ । ४० ॥

(६) ४ अ. । १२५ सू. ॥

(७) ३ अ. । ३ सू. । प्रा. ३ अ. ४ सू. । प्रा. ४ अ. ५२ सू. वक्ष्यमाणेन "कण्ठ्यादिवर्णएकारमित्यनेन सूत्रेण सन्धिः प्राप्ता सा न भवति "न परकालइति पूर्वोक्तसूत्रसामर्थ्यान्नैकवद्भावो भवति । ननु महाँ २॥ऽ इन्द्रइत्यत्र यकारलोपे कृते सति उपधारञ्जनं न भवति तत्कथं लुप्तत्वादुपधारञ्जनमिति चेत् इत्थं यत्र साक्षान्नकारमकारलोपस्तत्रोपधारञ्जनं न भवति यत्र वर्णान्तरापत्त्या लुप्यते तत्र भवत्येवेत्यदोषः । अन्यथा स्वरयोः सन्धिरपि स्यात् अतउपधारञ्जनं भवत्येवेति ज्ञेयम् । किन्नाम रङ्गत्वमिति सन्देहे याज्ञवल्क्येनोक्तम् । रङ्गे चैव समुत्पन्ने न ग्रसेत्पूर्वमक्षरम् । स्वरं दीर्घं प्रयुञ्जीत पश्चान्नासिक्यमुच्चरेत् १ द्विमात्रो मात्रिको वाऽपि नासामू-

परकालः पूर्वकाले पुनरिति" सन्धिर्न भवति ततो महाँ २॥ऽ इन्द्रइत्येतद्रूपं सम्भवति, ननु यथा (१) "दीर्घान्वा-न्त्स्ववान्यकारे लोपं"इति नकारलोपे कृते सत्युपधानु-नासिक्यन्न प्रवर्त्तते एवमिहापि नकारस्य यकारीभूत-स्याश्रवणादुपधानुनासिक्यन्न प्रवर्तते तत्कथमुपधानु-नासिक्यमिति लुप्तस्यापि स्वकार्यकरणादित्यदोषः, यदि

लमुपस्थितः । अन्ते प्रयुज्यते रङ्गः पञ्चमैः सर्वनासिकः २ यथा सौराष्ट्रिका नारी-अराँ २॥ऽ इत्यभिभाषते । एवं रङ्गं विजानीयात् ङ्कारं परिवर्जयेत् ३ अनन्तरो म-कारस्तु यो रङ्गस्तत्र रज्यते । सर्वानुनासिकं विद्याच्छेषमन्योपधानिका ४ यरलवाः शषसहा रज्यन्ते चोपधानिकाः । वर्गान्ते रज्यते यस्तु सर्वैः सर्वानुनासिकः ५ न स उत्पद्यते रङ्गः कांस्येन च समन्वितः । मृदुः सार्द्धद्विमात्रः स्याद्वृष्टिमानिति दर्शनात् ६ अस्यार्थः । रङ्गे उत्पन्ने इति । रङ्गो नाम स्वरयोरन्तरा नकारस्य लोपादौ विकारे उ-पधानुनासिक्यं च । उक्तं च । उच्चारे कर्त्तव्ये पूर्वमक्षरं न ग्रसेत् क्षिप्रमोच्चारणं कुर्या-त् । किन्तूपधास्वरं दीर्घं प्रयुञ्जीत अनन्तरं नासिक्यं नासिकास्थानं कृत्वोच्चरेत् । द्विमात्रो मात्रिकइति दीर्घो ह्रस्वो वा नासामूलमाश्रितः वर्गपञ्चमैर्युक्तः स्वरान्ते सर्व-नासिक्यं प्रयुज्यते । तदेव स्पष्टयति । अनन्तरेऽपीति । मकारव्यवहितस्वरे रङ्गः सर्वानुनासिको ज्ञेयः । शेषोऽन्यः यरलवादौ उपधानुनासिकं नासिकयोच्चार्यते स च मृदुर्द्विमात्रः स्यात् । अथोदाहरणानि वर्गान्ते मकारो ७ । ४० । 'वृष्टिमाँ २॥ऽ इव, । ६ । २४ । हविष्मम्माँ २॥ऽ आविवासति, । यरलवान्ते इति । ८ । १९ । याँ २॥ऽ आवहः, । ७ । ३७ । जहि शत्रूँ १॥ रपमृधः, । १७ । १७ । प्रथमच्छदवराँ २॥ऽ आविवेश, । २३ । १६ । देवाँ २॥ऽ इदोषि पथिभिः, । ३ । ५२ । त्वद्भ्शाँ २॥ऽ अनु, महाँ २॥ऽ इन्द्रः । एते द्विमात्रप्रायाः । एतच्छास्त्रीयानां द्विमात्राएव । बह्वृचानां एकमात्रा अपि पठ्यन्ते । उमं इत्यादि ज्ञेयम् । अत्र रङ्गोच्चारणे शुष्कवैदिका दा-क्षिणात्याः प्रमादेन तर्जनीमध्यमयोरङ्गुल्योः प्रक्षेपं कुर्वन्ति तदसङ्गतं कुतः "दीर्घे रङ्गे च तर्जन्याः प्रसारः परिकीर्त्तित"इति याज्ञवल्क्यशिक्षायामुक्तत्वात् । अतस्तर्ज-न्याएवैकाङ्गुल्याः प्रसारणं कथितमिति पण्डितैर्ज्ञेयम् ॥

(१) प्रा. ३ अ. १३७ सू. ॥

ह्नि यकारो व्यञ्जनकार्यं न कुर्यात् कथमिह स्वरयोः सन्धिर्न स्यात् अतः स्वकार्यकरणादुपधानुनासिक्यमपि भवति यथा (१) वृष्टिमाँ२ इव पर्ज्जन्न्यो वृष्टिमा२ँ॥ऽ इव ॥

## न तमे ॥ १४४ ॥

यन्नकारस्य तकारे प्रत्यये विहितन्तत्तमप्रत्यये न भवति, यथा (२) मदिन् तमानाम् मदिन्तमानान्त्वा, मधुन् तमानाम् मधुन्तमानान्त्वा, तथयोः समित्यस्यापवादः ॥

## निर्ज्जगन्न्वान् तमसि ॥ १४५ ॥

निर्ज्जगन्वानित्ययं नकारस्तमसि प्रत्यये न विकारमापद्यते, यथा (३) निर्जगन्वान् तमसः निर्ज्जगन्वान्तमसो ज्योतिषागात् ॥

## धामञ्छन्दाँश्चिकित्वाँस्त्वं पूषन्नर्व्वन्निति च ॥ १४६ ॥

---

(१) ७। ४०। अस्मिन् सूत्रे स्वरे इति पदानुवृत्ति ( प्रा. ३ अ. १३२ ) रेतदङ्कसूत्रान्नो चेत्तदा गवयान् त्वष्ट्रे इत्यत्र दोषः स्यात्तदर्थं तत्पदग्रहणम् ॥

(२) ८। ४८॥

(३) १२। १३॥

धामन् शतून् चिकित्वान् त्वम् पूषन् अर्वन् एते नकारा न विकारमापद्यन्ते । धामन् यथा (१) धामन्ते विश्वं भुवनम् । शतून् यथा (२) शतून्ताढि विमृधो नुदस्व । चिकित्वान् त्वम् यथा (३) आ च वहं मित्र महश्चिकित्वान्त्वम् । त्वमिति किम् (४) स प्रथमो बृहस्पतिश्चिकित्वाँस्तस्मै । पूषन् यथा (५) पूषन्तव व्रते वयम् । अर्वन् यथा (६) तव शरीरं पतयिष्ण्वर्वन्तव चित्तम् । इति चेत्यस्यावयवस्यार्थः । इति शब्दः प्रकारदर्शनार्थः । यथा (७) अधस्तनसूत्रयोस्तकारे नकारस्य प्रकृतिभावः एवमिहापि नकारस्य प्रकृतिभाव एव तथा च व्याख्यातम् । चकारस्तकारापवादावधिद्योतनार्थः ॥

## अश्वादौ चादध्याये ॥१४७॥

---

(१) १७ । ९९ ॥

(२) १८ । ७१ ॥

(३) २९ । २५ ॥

(४) ७ । १५ ॥

(५) ३४ । ४१ । अयं नकारविकारनिषेधो मन्त्रे न तु ब्राह्मणे । ब्राह्मणे तु तथयोः समिति प्रा० ३ अ० १३६ पूर्वेण सूत्रेण नकारस्य सकारे जाते पूषँस्तव श्रुते वयमिति तदुक्तं माण्डवीशिक्षायाम् । पूषन्तवेत्यृचो मन्त्रे तस्य प्रकृतिरिष्यते । नेष्यते ब्राह्मणे तेन संस्कारो भिद्यते तयोरिति, तस्य नकारस्य प्रकृतिभावइत्यर्थः ॥

(६) २९ । २२ ॥

(७) प्रा० ३ अ० १४४ । १४५ । ९ । ३ । व्वाचो यन्तुर्य्यन्त्रिये दधामीत्यादौ तस्य विकारो न भवतीति ज्ञेयम् ॥

स्वरइति वर्त्तते अश्वस्तूपरइत्येतस्मिन्नध्याये नकार-आकारोपधः स्वरे प्रत्यये प्रकृत्त्या भवति । 'आकारो-पधो यकार'मित्यस्यापवादः । यथा (१) शिशुमारान् आलभते समुद्राय शिशुमारानालभते । मण्डूकान् अद्भ्यः मण्डूकानद्भ्यः । स्वरानुवृत्तिरिति किम् (२) गवयाँस्त्वष्ट्रे, सुषीम्णश्चक्षुषे ॥

## मनुष्याँस्ताँल्लोकानमित्रानुदि ॥१४८॥

मनुष्यान् तान् लोकान् अमित्रान् एते नकाराः प्रकृत्या भवन्ति उदि उपसर्गे प्रत्यये । मनुष्यान् यथा (३) मनुष्यान् उत् मनुष्यानुदजयताम् । तान् यथा (४) तान् उत् तानुज्जेषम् । लोकान् यथा (५) लोँल्लोकानु-दजयताम् । अमित्रान् यथा (६) क्षिणोमि ब्रह्मणा-मित्रानुन्नयामि स्वान् ॥

## आप्नोतीत्योश्च ॥१४९॥

(१) २४ । १९ । उदाहरणद्वयं तस्यैव मन्त्रस्य ॥

(२) उदाहरणद्वयं पूर्वोक्ताङ्कस्यैव ॥

(३) ९ । ३१ ॥

(४) तथा ॥

(५) उदाहरणत्रयमेकस्याः कण्डिकाया ज्ञातव्यमिति ॥

(६) ११ । ८२ ॥

आप्नोतौ प्रत्यये इतौ च नकारो न विकारमापद्यते । आप्नोति यथा (१) भद्रान् आप्नोति इडाभिर्भद्रानाप्नोति । इति यथा (२) अपयान् इति अदितिः श्वपयानिति ॥

सङ्क्रमे च वैष्णवान् ॥ १५० ॥

वैष्णवानित्ययं नकारो न विकारमापद्यते स्वरे प्रत्यये । सङ्क्रमश्च क्रमे भवति अतः क्रमसंहितायामित्यर्थः यथा (३) वैष्णवान् अव व्वैष्णवानव ॥

गृहानैमि गृहानुपह्वयामहे व्वर्च्चस्वानहम्मनुष्यानन्तरिक्षमग्निष्वात्तानृतुमतः पयस्वानग्ने तानश्विना पतङ्गानसन्दितः स्वर्गानपां पतिः सपत्नानिन्द्रसपत्नानिन्द्राग्नी नभस्वानार्द्रदानुर्विद्वानग्नेर्देवानस्रेधता-

(१) १९ । २९ ॥

(२) ११ । ५९ ॥

(३) ५ । २६ सङ्क्रमलक्षणं भाष्यकारेण चतुर्थाध्याये 'सङ्क्रमे च सर्वत्र' इति सूत्रे गलत्पदमतिक्रम्यागलता सह सन्धानं सङ्क्रम इति कथितं तज्ज्ञातव्यम् ॥

नद्वानाशुरथैतानष्टौ स्विरूपानाल-
भतएतावानस्यायुष्मानग्ने त्वाय-
व्यानारण्याः प्रविद्वानग्निनान-
द्वानधोरामौ शत्रूननुयँस्यातुधानान-
स्तथादस्मानरिष्टेभिरिति ॥ ५१ ॥

एतेषां द्विपदानां पूर्वं पदान्तीया नकाराः प्रकृत्या भवन्ति । (१) गृहानैमि मनसा मोदमानः । (२) गृहानुपह्वयामहे । (३) वर्षस्वानहं मनुष्येषु । (४) मनुष्यानन्तरिक्षमगन् । (५) अग्निष्वात्तानृतुमतो हवामहे । (६) पयस्वानग्नऽआगमन्तम् । (७) तानश्विना सरस्वती । (८) तपूंष्यग्नेजुह्वा पतङ्गानसन्दि-

---

(१) ३ । ४१ ॥
(२) ३ । ४२ ॥
(३) ८ । ३८ ॥
(४) ८ । ६० ॥
(५) १९ । ६१ ॥
(६) २० । २२ ॥
(७) २१ । ४२ ॥
(८) १३ । १० ॥

तः । (१) स्वर्गानपां पतिर्वृषभः । (२) अधा सपत्नानिन्द्राग्नी मे । (३) समुद्रोऽसि नभस्वानार्द्रदानुः । (४) प्राचीमनुप्रदिशं प्रेहि विद्वानग्नेः । (५) देवानस्य वर्धता मन्मना । (६) अनड्वानाशुः सप्तिः पुरन्धिः । (७) अथैतानष्टौ विरूपानालभते । (८) एतावानस्य महिमा । (९) आयुष्मानग्ने हविषा वृधानः । (१०) वायव्या नारण्या ग्राम्याश्च ये । (११) प्रविद्वानग्निना । (१२) अनड्वानधो रामौ । (१३) ऋतूननु यँविश्वे मदन्त्यूमाः । नकारस्य रेफापवादः । इतरत्र तु सर्वत्र यकारापवादः । (१४) अपमेधन्नृचसो

(१) १३ । ३१ ॥
(२) १७ । ६४ ॥
(३) १८ । ४५ ॥
(४) १७ । ६६ ॥
(५) १८ । ७५ ॥
(६) २२ । २२ ॥
(७) ३० । २२ ॥
(८) ३१ । ३ ॥
(९) ३५ । १७ ॥
(१०) ३१ । ६ ॥
(११) इदमुदाहरणं शाखान्तरीणम् ॥
(१२) २९ । ५९ ॥
(१३) ३३ । ८० ॥
(१४) ३४ । २६ ॥

यातुधानानस्थात् । (१) द्युभिरक्तुभिः परिपातम-
स्मानरिष्टेभिः ॥

वृद्धं वृद्धिः ॥ ५२ ॥

इत्युक्तार्थम् ॥

इति कात्यायनकृतौ प्रातिशाख्य-
सूत्रे तृतीयोऽध्यायः ॥

आनन्दपुरवास्तव्यवज्रटसूनुना उवटेन कृते मातृ-
मोदाख्ये प्रातिशाख्यनिर्मलभाष्ये तृतीयोऽध्यायः स-
माप्तः ॥

---

अनुस्वारर्ठ॰रोष्मसु मकारः ॥ १ ॥

अनितावध्यायइत्यनेन सूत्रेण योऽवधित्वेन वर्णि-
तः । अतोऽवधिपरिज्ञापनार्थमध्यायसमाप्तिः कृता
कात्यायनाचार्येण । आह च । अनितावध्यायइति कृतं
सूत्रं यतः पुरा । अतस्तदवधिज्ञप्तिः क्रियतेऽध्यायस-
ङ्ख्या । (२) अत्रावधिससाधीतं पदमन्तर्विकारिमत् ।
आचार्येणोच्यते तस्य प्रागुक्त्यादिप्रयोजनम् । मकारो

---

(१) ३४ । ३० ॥

(२) अत्रावधिसमाधीतं पदमन्तर्विकारि यत् इति (ख) पुस्तकपाठः ॥

ऽनुस्वारमापद्यते रोष्मसु प्रत्ययेषु । रेफे यथा (१) अयाम् रसेन । अयाꣳ रसेन व्वरुणः । ऊष्मसु यथा (२) त्वाम् ग्रस्वन्तः त्वाꣳ ग्रस्वन्तऽ उपयन्ति व्वाजाः । (३) देवꣳ सवितारमोण्योः । (४) तपूꣳषि । (५) उरुꣳ हि राजा (६) ॥

## नुश्चान्तःपदेऽरेफे ॥ २ ॥

---

(१) ९ । ३ ॥

(२) १७ । ७६ ॥

(३) ४ । २५ ॥

(४) १३ । १० ॥

(५) ८ । २३ ॥

(६) अनुस्वारꣳ रोष्मस्वित्यनेन सूत्रेण मकारोऽनुस्वारमापद्यते । स कीदृशो ऽनुस्वारः यस्यानुस्वारस्य वक्ष्यमाणप्रतिज्ञासूत्रेण "अनुस्वारस्य ꣳमित्यादेशः शषसहरेफेषु" इत्यनेन सूत्रेण ꣳकाररूपो योऽनुस्वारो ह्रस्वपूर्वः असंयुक्तपरः सार्धमात्राकालः पूर्वश्च स्वरोऽत्रार्द्धमात्राकालः कार्यः । ताꣳसवितुः । सिꣳहस्यसि । इमꣳस्तनम् । ऋपरे तु । उक्तं च भगवता याज्ञवल्क्येन शिक्षायाम् । अनुस्वारोपरिष्टात्तु संयोगो यत्र दृश्यते । ह्रस्वं तं तु विजानीयात्सꣳस्येति निदर्शनम् ॥ १ ॥ अनुस्वारोपरिष्टात्तु संवृतंर्यत्र दृश्यते । दीर्घं तं तु विजानीयात्सꣳस्येति निदर्शनम् ॥ २ ॥ अनुस्वारोपरिष्टात्तु संवृतं यत्र दृश्यते । दीर्घं तं तु विजानीयात् श्रोता ग्रावाण इति निदर्शनम् ॥ ३ ॥ अनुस्वारस्तु यो दीर्घादक्षराच्च भवेत्परः । स तु ह्रस्वइति ज्ञेयो मन्त्रेष्वेव विभाषया ॥ ४ ॥ वर्णे तु मात्रिके पूर्वे अनुस्वारो द्विमात्रिकः । द्विमात्रो मात्रिको ज्ञेयः संयोगाद्यश्च यो भवेत् ॥ ५ ॥ अनुस्वारो द्विमात्रस्तु ऋवर्णे व्यञ्जनोदये । ह्रस्वोऽपि दीर्घो ज्ञातव्यो देवानाꣳ हृदयेभ्य इति निदर्शनम् ॥ ६ ॥ इदमनुस्वाररूपꣳकारोच्चारणं भिन्नपदेष्वेव दृश्यते । प्रतिज्ञासूत्रेप्यस्य ꣳकारस्य त्रैविध्यमाख्यातमुच्चारणं महर्षिणा कात्यायनेन तदग्रे द्रष्टव्यमिति ॥

नकारोऽनुस्वारमापद्यते । चशब्दात् मकारश्च । पदस्य मध्ये अरेफे रेफशब्दस्य पर्युदासात् । ऊष्मस्वेवानुस्वारापत्तिर्भवति । यथा (१) जघ्निवान् सः । जघ्निवाꣳ सः । (२) पपिवान् सः । पपिवाꣳ सः । (३) तपूंम् षि तपूꣳष्यग्ने । (४) हवीन् षि । हवीꣳ षि । एते नकारप्रकृतयोऽनुस्वाराः ॥

## वर्ठंशः ॥ ३ ॥

वनतेर्धातोर्वमतेरुणादेर्यो वश्प्रत्ययः । वनतेर्वमतेर्धातोरौणादिकशप्रत्यये नकारप्रकृतिर्मकारप्रकृतिर्वाऽनुस्वारः । सन्देहात्सूत्रकारेण कण्ठरवेण सूत्रं कृत्वा पठितः । अतो नकारप्रकृतिर्वा मकारप्रकृतिर्वाऽनुस्वारः । (५) किम् शिलाय किंꣳशिलाय (६) अꣳस्त । (७) पुꣳसः । एते मकारप्रकृतयोऽनुस्वारा भवन्ति । एवमन्येऽप्यन्वेषितव्याः । अरेफइति

---

(१) ८ । १९ ॥
(२) ८ । १९ ॥
(३) १३ । १० ॥
(४) १७ । ७५ ॥
(५) १६ । ४३ ॥
(६) २ । २५ ॥
(७) २५ । ४५ ॥

किम् । व्यम्नः । (१) यद्वृम्नोऽ अतिसर्प्पति । (२) ॥

## अनुनासिका चोपधा ॥ ४ ॥

अतोऽधिकारार्थमन्यं विकारं वक्ष्यामो मकारनकारयोस्तत्रानुनासिका चोपधा भविष्यतीत्यधिकृतं वेदितव्यम् । ननु 'अनुनासिकमुपधा प्रागन्तस्थायाः' इति उपधाऽनुनासिक्यं विहितमेव किमनेन सूत्रेण क्रियते । एवन्तर्हि व्यवस्थार्थं वचनम् । यस्मिन्पक्षे अनुस्वारो न भविष्यति । तस्मिन्पक्षे उपधायाआनुनासिक्यं भविष्यति । अधिकारार्थोऽयमारम्भः ॥

## लोपं काश्यपशाकटायनौ ॥ ५ ॥

काश्यपशाकटायनावाचार्यौ मकारनकारयोर्लोपं मन्येते । अस्मिन्पक्षे वाक्यद्वयम् । अनुनासिका चोपधा भवति । यथा अपाँ रसेन । पक्षे अपाᳫँ रसेन । त्वाँ ग्रभ्ण्वन्तः । त्वाᳫँ ग्रभ्ण्वन्तः । ताँ सवितुः । ताᳫँ सवितुः । त्वाँ हि । त्वाᳫँ हि । तपूँषि । तपूᳫँष्यग्ने । अक्रँस्त । अक्रᳫँस्त । किँ शिलायं । किᳫँ शिलायं । (३) यजूँषि । यजूᳫँषि सामभिः ॥

---

(१) ११ । ७४ ॥

(२) इदं सूत्रमष्टाध्याय्यां न दृश्यते व्याख्याकर्त्रा तु लिख्यते ॥

(३) २० । १२ । अयं विकल्पपाठो यथाशास्त्रीयो बोध्यः ॥

अन्तस्स्थामन्तस्स्थास्वनुनासिकां परसस्थानाम् ॥ १० ॥

अन्तस्थामापद्यते मकारः अन्तस्थासु परभूतासु परस्या अन्तस्थायाः समानस्थानां यदि नामानुनासिकां समानाम् । यथा (१) सम् यौमि । सँय्यौमीदम् । (२) रासभम् युवम् । युञ्जाथाᳲरासभँय्युवम् । (३) सम् व्पामि । सँव्वपामि । (४) तम् लोकम् । तँल्लोकं पुण्यम् । रेफेऽनुस्वारो विहितः ।

हि ॥ ११ ॥

'ह्यन्तराः काला' इत्युक्तम् । अतस्तत्कालावधिद्योतनार्थं हिशब्दः ॥

स्पर्शे परपञ्चमम् ॥ १२ ॥

मकारः स्पर्शे प्रत्यये परस्य प्रत्ययभूतस्य पञ्चममापद्यते । परः स्पर्शो यस्मिन्वर्गे तस्य वर्गस्य पञ्चममि-

---

(१) १ । २२ ॥
(२) ११ । १३ ॥
(३) १ । २१ ॥
(४) २० । २५ ॥

त्यर्थः । यथा (१) व्रतम् कृणुत । व्रतङ्कृणुत । (२) व्रतम् चरिष्यामि । व्रतञ्चरिष्यामि । (३) एतम् ते देव । एतन्ते देव सवितः । (४) इदम् पितृभ्यः । इदम्पितृभ्यो नमः । (५) सम् ज्ञानमसि । सञ्ज्ञानमसि ॥

## तकारो ले लम् ॥ १३ ॥

तकारो लकारे प्रत्यये लकारमापद्यते । यथा (६) आसीत् लोकम् । आसील्लोकम् । (७) परि चित् लोकम् । परि चिल्लोकम् । क्रमसंहितोदाहरणम् (८) ॥

## नुश्चाऽनुनासिकम् ॥ १४ ॥

नकारो लकारप्रत्यये लकारमापद्यते । यदि

(१) ४ । ११ ॥
(२) १ । ५ ॥
(३) २ । १२ ॥
(४) १९ । ६८ ॥
(५) १२ । ४६ ॥
(६) १४ । ३१ ॥
(७) १२ । ४५ ॥
(८) इदमुदाहरणं क्रमपाठस्थं ज्ञेयम् । क्रमलक्षणविधायकं सूत्रमस्मिन्नध्याये १८१ वक्ष्यमाणमिति ॥

समानाऽनुनासिकम् । यथा (१) अस्मिन् लोके । अस्मिँल्लोकेऽस्मिन् चये । (२) त्रीन् लोकान् । त्रीँल्लोकानुदजयत् ॥

## ङ्नौ क्तकाभ्याᳪ सकारे ॥ १५ ॥

ङकारनकारौ यथासङ्ख्यं ककारनकाराभ्यां व्यवधीयेते सकारे प्रत्यये । यथा (३) प्राङ् सोमः । प्राङ्क्सोमो अति द्रुतः । (४) प्रत्यङ् सोमः । प्रत्यङ्क्सोमो अतिद्रुतः । (५) त्रीन् समुद्रान् । त्रीन्त्समुद्रान्त्समसृपत् । (६) अस्मान् सीते । अस्मान्त्सीते पयसा ॥

## न दाल्भ्यस्य ॥ १६ ॥

दाल्भ्यस्याचार्य्यस्य मते नैतावागमौ भवतः । (७) प्राङ्सोमः । प्रत्यङ्सोमः । त्रीन्समुद्रान् । अस्मा-

---

(१) ३ । २१ ॥
(२) ९ । ३१ ॥
(३) १९ । ३ ॥
(४) तथा ॥
(५) १३ । ३१ ॥
(६) १२ । ७० ॥
(७) पूर्वोक्तोदाहरणाङ्को द्रष्टव्यः ॥

न्सीति ॥ (१) ॥

## रलावृॢवर्णाभ्यामूष्मणि स्वरोदये सर्वत्र ॥ १७ ॥

रेफलकारौ ऋॡवर्णाभ्यां ऋॡसदृशश्रुतिभ्यां यथासङ्ख्यं व्यवधीयेते ऊष्मणि परभूते स्वरपरे सर्वत्र संहितायां पदे च । अन्तःपदे नानापदे च यौ तौ विधायकावुक्तौ तौ स्वरावुत व्यञ्जनाविति । शृणु । ऋॡस्वरसदृशौ व्यञ्जनावर्द्धमात्रकाविति ब्रूमः । तौ स्वरभक्तिरित्यन्येषु पदेषु प्रसिद्धौ । न चैतौ वर्णौ रेफलकारयोरूष्मणां च मध्यवर्त्तिनावपि सन्तौ संयोगस्य विघातं कुरुतः । स्वरसदृशत्वात् । (२) तथा चाह

---

(१) तथा ज्ञातव्यः । याज्ञवल्क्योऽपि । "नकारान्ते पदे पूर्वे सकारे परतः स्थिते । तसवर्णं विज्ञानीयादस्मान्त्सीति निदर्शनम् ॥" अत्र रूपसिद्धिः । नकारतकारसकारसंयोगः । केवलसानुनासिकनकारसकारसंयोगः । नकारसकारसंयोगः । यथा चरणं पाठः । नकारतकारसंयोगं काण्वशाखिनः पठन्ति । द्वयमितरे । इति पाठो बुधैर्बोध्यः ॥

(२) शौनकमहर्षिणा ऋग्वेदिनामुपकारायाष्टादशपटलात्मकं प्रातिशाख्यं निर्मितम् । तत्रत्यतृतीयपटले सूत्रं १०१ बोध्यम् । स च स्वरभक्तिः पञ्चधा याज्ञवल्क्येनाभिहिता । करिणी कुर्विणी चैव हरिणी हारिणी तथा । या तु हंसपदी नाम सा तु रेफषकारयोः ॥ १ ॥ देवं बर्हिरिति करणी उपवल्हेति कुर्विणी । हरिणी अर्शसइत्याहुर्हरिता शतवल्शेति ॥ २ ॥ वर्षो वर्षीयसि प्राह या तु हंसपदीति च । एतल्लक्षणमाख्यातं याज्ञवल्क्येन धीमता ॥ ३ ॥ स्वरभक्तिं प्रयुञ्जानस्त्रीन्दोषान्परिवर्ज्जयेत् । इकारं चाप्युकारं च ग्रस्तदोषं तथैव च ॥ ४ ॥ सम्यग्वर्णं प्रयुञ्जीत ब्रह्मलोके महीयते । नैतत्स्वरन्ति पूर्वाङ्गे नो पराङ्गे कथं च न ॥ ५ ॥ न स्वरे न च मात्रायां कथं स्वारो विधी-

शौनकः । "न संयोगं स्वरभक्तिर्विहन्ति" यथा (१) गार्हपत्यः । अत्र हकाररेफयोरन्तरावपि स्वरभक्तिः सती रेफहकारयोः संयोगं न विहन्ति । एवमन्यत्रापि द्रष्टव्यम् । (२) अर्शसऽउपचितामसि । (३) शतवल्शः । (४) उपवल्हामसि त्वा । पदमध्योदाहरणम् (५) ब्रेह्रीत्रम् । (६) सवितुर्हवामहे । स्वरोदय इति किम् । (७) पार्श्वतः । (८) दिवो वर्ष्मन् । (९) ह्रदँश्वर्रैः । (१०) अश्रुभिर्ह्रादुनीः ॥

## प्रगृह्यं चर्चायामितिना पदेषु ॥१८॥

---

यते । पराङ्गस्य तु यत्पूर्वं पूर्वाङ्गस्य तु यत्परम् ।। ६ ।। उभयोरर्द्धसँय्योगे स्वारं कुर्य्याद्विचक्षणः ।। एतान्यक्षराण्यन्तःपदे नानापदे चोच्चारणं कुर्व्वन्ति तेषामुदाहरणानि प्रदर्शितानि । एतत्सूत्राशयं ज्ञात्वा केशवेनापि सूत्रमकारि "अहल्शल्पूर्द्धरेफस्य सैकारः प्राक् च" एतत्सूत्रार्थाद्धकारिकापि । 'विहल्शल्पूर्द्धरेफो यः सैकारः प्राक्समुच्चरेत्' इति । अस्योच्चारणप्रकारः प्रतिज्ञापारिशिष्टसूत्रे कात्यायनेन प्रदर्शितः ।।

(१) ३ । ३९ ।।
(२) १२ । ९७ ।।
(३) ५ । ४३ ।।
(४) २३ । ५१ ।।
(५) २ । ९ ।।
(६) २२ । ११ ।।
(७) २१ । ४३ ।।
(८) २८ । १ ।।
(९) २५ । १ ।।
(१०) २५ । ९ ।।

प्रगृह्यसञ्ज्ञकं यत्पदं तच्चर्चायां परभूतायामितिना आगमिकेन व्यवधीयते । चर्चाशब्देन इतिकरणात्परतो या तस्यैव पदस्य द्विरुक्तिः सोच्यते । (१) पदेष्वित्यधिकारार्थं वचनम् । इतः प्रभृति पदाधिकारो वर्त्तते । यथा (२) द्वे ऽइति द्वे । (३) शीर्षे ऽइति शीर्षे । (४) अस्मे ऽइत्यस्मे । त्वे ऽइति त्वे ॥

## रिफितं च संहितायामनिरुक्तम् ॥ १९ ॥

रिफितं चशब्दादितिना आगमिकेन व्यवधीयते चर्चायां परभूतायां संहितायामनिर्ज्ञातरेफं यत् । यथा (५) पुनरिति पुन÷ । (६) स्वरिति स्व÷ । संहितायामनिरुक्तमिति किम् । (७) पुन÷ । मन÷ ॥

## पदावृत्तौ चान्तरेण ॥ २० ॥

---

(१) अस्मात्सूत्रादारभ्य पदाधिकारः प्रवृत्तः । चर्चालक्षणं 'इति वचर्चायाम्' अ० ३ सू० २० एतद्व्याख्यानावसरे पूर्वं प्रतिपादितम् ॥

(२) १७ । ८४ ॥

(३) तथा पदपाठादङ्को बोध्यः ॥

(४) उदाहरणद्वयस्यैक एवाङ्को ४ । २२ । बोध्यः ॥

(५) ४ । १५ ॥

(६) ३ । ३६ ॥

(७) ४ । १५ ॥

पदस्यावृत्तिर्द्विरुक्तिः तस्यां पदावृत्तौ सत्यां अन्तरेण इति भवति सा च नोक्ता अतस्तत्प्रतिपादनार्थमाह ॥

## क्रमोक्तावृत्तिः पदेषु ॥ २१ ॥

क्रमशास्त्रे या पदावृत्तिरुक्ता सा पदेष्वपि भवति । क्रमशास्त्रातिदेशोऽयम् । तत्र चैतदुक्तमग्रे । (१) 'स्थितोपस्थितमवगृह्यस्यान्तःपददीर्घीभावे' 'विनामे' 'प्रगृह्ये' 'रिफिते निरुक्ते' । अवगृह्ये यथा (२) प्रजावतीरिति प्रजा । वतीः । अन्तःपदे दीर्घीभावे यथा (३) मामहानः' ममहान इति ममहानः । विनामे च भवति । यथा (४) सुषाव । सुसावेति सु । सावा । प्रगृह्ये यथा (५) इन्द्राग्नी इतीन्द्राग्नी । रिफिते निरुक्ते भवति यथा (६) पुनरिति पुनः । प्राणः ॥

## सुपदावसानवर्ज्जम् ॥ २२ ॥

क्रमोक्तावृत्तिः पदेष्वित्युक्तम् । तस्यायमपवादः । सुपदावसाने वर्जयित्वाऽन्यत्र क्रमोक्तावृत्तिर्भवति । तत्र

---

(१) अत्रैतदध्यायस्थाग्रिमसूत्राणि १८८ । १९० । १९१ । १९२ । १९३ । पञ्चसंख्याकानि स्मृतानि भाष्यकारेण । तानि ज्ञातव्यानि ॥

(२) १ । १ ॥

(३) १७ । ५१ ॥

(४) १९ । २ ॥

(५) ३ । १३ ॥

(६) ४ । १५ ॥

'सुपदे शाकटायन' (१) इति शाकटायनमतेनावृत्तिः। सा च (२) कतमानां भवति। अवसाने तु सर्वशाखिनामावृत्तिर्भवति। तदुभयं निषिध्यते॥

## अनितावन्तर्व्विकारागमं प्रागुक्त्वा॥ २३॥

'अनितावध्याय'इत्यतआरभ्य यावदध्यायपरिसमाप्तिरस्मिन्नन्तराले यस्य पदस्य अन्तरा विकारआगमो वा विहितस्तदन्तर्विकारागमं पदं पूर्वमुक्त्वा पश्चात्पदावृत्तिः कर्त्तव्या। स्थितोपस्थितं कर्त्तव्यमित्यर्थः। तत्र चोपचरितषत्वणादि विकारजातमुक्त्वा। यथा (३) श्रेयस्कर। श्रेयः करोति श्रेयः। कर। (४) सुषाव। सुसावेति सु। साव। (५) परमेष्ठी। परमेस्थीति परमे। स्थी। (६) त्वष्टिमाँ २॥ऽ इव। त्वष्टिमानिवेति त्वष्टिमान्। इव। अनितावन्तर्व्विकारागममिति किम्। अस्यावधेरधस्तादुपरिष्टाच्च प्राग्वचनं मा भूत्। यथाऽवधेरधस्ताद्भवति। 'विसर्ज्जनीयः'। 'चच्छयोः शम्।'

(१) अस्मिन्नध्याये सूत्रं १८९ ज्ञेयम्॥
(२) काण्वानामिति "ख" पुस्तकपाठः॥
(३) १० । २६॥
(४) १९ । २॥
(५) ८ । ४८॥
(६) ७ । ३९॥

दुरश्च्यवनऽइति दुः । च्यवनः । "तयोः सम्" । तवस्तरमिति तवः । तरम् । एवमादि । अथोपरिष्टादवधेर्ग्रहीष्यामः । 'अनुस्वारꣳ रोष्मसु मकारः' । सꣳ समिति सम् । सम् । 'नुश्चान्तः पदेऽरेफे' । पपिवाꣳसऽइति पपि । वाꣳसः । संस्कृतिः । अस्यावधेर्बहिर्यथा संहितायां पदे भवतीत्यर्थः (१) ॥

## विश्पतीवेति च ॥ २४ ॥

विश्पतीवेत्येतच्च पदं प्रागुक्त्वा पश्चात्पदावृत्तिः कर्त्तव्या । वेष्टकइत्यर्थः । यथा (२) आ विश्पतीव । विश्पतीऽइवेति विश्पती । इव । एतत्पदमस्यावधेर्बहिरन्तः प्रागुक्तिरुच्यते ॥

## स्वरश्छकारे चकारेण सर्वत्र ॥२५॥

स्वरो व्यवधीयते छकारे प्रत्यये परभूते चकारेणागामिकेन सर्वत्र संहितायां पदे च । यथा (३) अच्छा वदामसि । (४) यच्छा नः शर्म्म सप्रथाः । पदेषू-

---

(१) एतानि पूर्वोक्ततृतीयाध्यायस्थानि सूत्राणि बोध्यानि ॥
(२) ३३ । ४० ॥
(३) १६ । ४ ॥
(४) ३५ । १७ ॥

दाहरणं यथा (१) आच्छच्छन्दः । प्रच्छच्छन्दः । (२) वर्म्मणाच्छादयामि । संहितोदाहरणम् (३) । ककुप्छन्दः । पदाधिकारात्पदेष्वेव चकारेण व्यवधानं मा भूदिति सर्वत्र ग्रहणात्संहितापदक्रमेष्वपि भवति(४) ॥

## यस्यातिहायसहेति न ॥ २६ ॥

यस्य अतिहाय सह इत्येतैः पदैरुपहितः स्वरः छकारे प्रत्यये न चकारेण व्यवधीयते । यस्य यथा (५) यस्य छाया । अतिहाय यथा (६) अतिहायं छिद्रा गात्राणि । सह यथा (७) सह स्तोमाः सह छन्दसः ॥

विश्वाऽऊष्मान्तं परिद्विषस्त्वं त्वां यदयो विराजत्त्यनिराऽअवीवृधन्नपरिष्टाः सुक्षितयऽ आशाऽ ओ-

(१) १५ । ५ ॥

(२) १७ । ४६ ॥

(३) १५ । ४ । एतान्युदाहरणानि पदपाठाद्बोध्यानि ॥

(४) चकारेणेत्येकवचननिर्देशात्संयोगरूपं द्वित्वं भवतीति ज्ञेयम् । पुनर्द्वित्वं तु 'स्वरात्संयोगादि'रित्यनेन वक्ष्यमाणसूत्रेण प्राप्तं परन्तु न "सवर्णे" इति निषेधात् ॥

(५) २५ । ११ ॥

(६) २५ । ४१ ॥

(७) ३४ । ४८ ॥

## षधीराभाद्यमीवा हि मायास्तेऽ सीतेषु ॥ २७ ॥

विश्वा इत्येतत्पदं ऊष्मान्तं भवति परिद्विषादिषु प्रत्ययेषु । परिद्विषशब्दे यथा (१) येन विश्वाः परिद्विषः । त्वं यथा (२) विश्वास्त्वप्रजाऽउपावरोह । त्वां यथा (३) विश्वास्त्वाम्प्रजाऽ उपावरोहन्तु । यद्जयो यथा (४) विश्वा यद्जयस्पृधः । विराजति यथा (५) धियो विश्वा विराजति । अनिरा यथा (६) व्यस्यन्विश्वाऽ अनिराः । अवीष्टधन्यथा (७) इन्द्रँविश्वाऽअवीवृधन् । परिष्ठा यथा (८) अति विश्वाः परिष्ठाः । सुक्षितयो यथा (९) विश्वाः सुक्षितयः पृथक् । आशा यथा (१०) विश्वाऽ आशाःप्र-

(१) ४ । २९ ॥
(२) ६ । २४ ॥
(३) तथाङ्को बोध्यः ॥
(४) १९ । ६९ ॥
(५) २० । ७७ ॥
(६) ११ । ४४ ॥
(७) १२ । ४८ ॥
(८) १२ । ७५ ॥
(९) १२ । १०७ ॥
(१०) २७ । ७ ॥

मुञ्चन् । ओषधीर्यथा (१) पृष्टो विश्वाऽओषधीराविवेश । आभाहि यथा (२) विश्वाऽ आभाहि प्रदिशश्चतस्रः । अमीवा यथा (३) विश्वाऽ अमीवाः । हिमाया यथा (४) विश्वा हि मायाः । ते यथा (५) विश्वास्ते स्पृधः श्नथयन्त । असि यथा (६) अभि विश्वाऽ असि स्पृधः । ननु 'स्वरसंस्कारयोश्छन्दसि नियम' इति स्वरसंस्कारावधिकृतौ वेदितव्यौ न चायं स्वरो न संस्कारः । अत्र हि इदमूष्मान्तं पदमिदं स्वरान्तं पदमित्येतदुच्यते । अप्रस्तुताभिधानमेतत् । उच्यते पदानां संदिह्यमानानां निश्चयो नैव दोषायेति तावत्पश्यामः । अतः साधुपदनिश्चयलक्षणमिति । अनभिज्ञस्य बोधनार्थम् ॥

पृथिव्या स्वरान्तरं सम्भवः शुक्रो मन्थी पृथिवीं परो देवेभिरित्येतेषु ॥ २८ ॥

---

(१) १८ । ६६ ॥

(२) २७ । १ ॥

(३) कारावानामुदाहरणम् ॥

(४) खाण्डिकेयशाखिनामुदाहरणम् ॥

(५) ३३ । ६१ ॥

(६) ३३ । ६० ॥ इमे ह्युदाहरणाङ्काः पदाधिकारात्पदपाठादवगन्तव्याः ॥

पृथिव्या इत्येतत्पदं स्वरान्तं भवति सम्भवादिषु पदेषु परेषु । सम्भव यथा (१) पृथिवी मा विभ्रत पृथिव्व्या सम्भर्व । शुक्री यथा (२) सञ्जग्मानो दिवा पृथिव्व्या शुक्रः । मन्थी यथा (३) सञ्जग्मानो दिवा पृथिव्व्या मन्थी । पृथिवीं यथा (४) पृथिव्व्या पृथिवीम् । परो देवेभिर्यथा (५) पृथिव्व्या परो देवेभिः । स्वरान्तमिति किम् । (६) नाभा पृथिव्व्याःऽ समिधाने ॥

# च व्विश्श्वा वो ब्रह्म्म व्विश्श्वा हरी युक्क्तास्त्ते शफानां जजान नु कमित्येतेष्विमा ॥ २९ ॥

च विश्वादिषु प्रत्ययेषु परेषु इमा इत्येतत्पदं स्वरान्तं भवति । च व्विश्श्वा यथा (७) इमा च व्विश्श्वा भु-

(१) ४ । १३ ॥
(२) ७ । १२ ॥
(३) ७ । १७ ॥
(४) १५ । ६ ॥
(५) १७ । २६ ॥
(६) ११ । ७१ । इमान्युदाहरणान्यपि पदपाठाज्ज्ञातव्यानि ॥
(७) ९ । २३ ॥

वनानि । वो यथा (१) इमा वो हव्या चकृमा जुषस्व । ब्रह्म यथा (२) इमा ब्रह्म पीपिहि सौभगाय । विश्वा यथा (३) यऽ इमा विश्वा भुवनानि जुहृत् । हरी यथा (४) इमा हरी वहतस्तानोऽ अच्छ । युक्ता यथा (५) सवना कृतेमा युक्ता ग्रावाणः । ते यथा (६) इमा ते वाजिन्नव मार्ज्जनानि । आफा यथा (७) इमा आफानाᳬ सनितुः । जजान यथा (८) न तँव्विदाथ यऽ इमा जजान । नु कं यथा (९) इमा नु कं भुवना सीषधाम ॥

## ह्वेमोतेमा च ॥ ३० ॥

ह्वेमा उतेमा एते च द्वे पदे यथागृहीतमेव स्वरान्ते भवतः । ह्वेमा यथा (१०) श्रुतम्मे मित्रावरुणा

(१) १९ । ५३ ॥
(२) १४ । २ ॥
(३) १७ । १६ ॥
(४) ३३ । ६९ ॥
(५) ३४ । १९ ॥
(६) २९ । १६ ॥
(७) पूर्वोक्ताङ्को बोध्यः ॥
(८) १७ । २८ ॥
(९) २५ । ४४ । इमान्युदाहरणानि पदपाठाद्द्रष्टव्यानि ॥
(१०) २१ । ८ ॥

ष्वेमा । उतेमा यथा (१) व्विश्वकर्म्मन्नुतेमा ॥

## व्विष्णो ते बभूव नासत्त्या भिषजा नऽआवोढं या देवा हविषो नो मृडातो नोऽअच्छ व्विमुञ्चेत्त्येतेषु ता ॥ ३१ ॥

विष्णो इत्यादिषु प्रत्ययेषु परेषु ता इत्येतत्पदं स्वरान्तं भवति । विष्णो यथा (२) ता व्विष्णो पाहि । ते यथा (३) सर्व्वा ता ते ब्रह्मणा सूदयामि । बभूव यथा (४) परि ता बभूव । नासत्त्या यथा (५) ता नासत्त्या सुपेशसा । भिषजा यथा (६) ता भिषजा सुकर्म्मणा । नऽआवोढं यथा (७) ता नऽआवोढमश्विना । या देवा यथा (८) इति ता या देवा दे-

(१) १७ । २० ॥
(२) २ । ६ ॥
(३) २५ । ४० । अयमुदाहरणाङ्कः संहितापाठाद्बोध्यः ॥
(४) १० । २० ॥
(५) २० । ७४ ॥
(६) २० । ७५ ॥
(७) २० । ८३ ॥
(८) २१ । ५७ ॥

वदानानि । हविषो यथा (१) स्रुचेव ता हविषोऽअ-ध्वरेषु । नो मृडातो यथा (२) ता नो मृडाता तऽईदृ-शे । अच्छ यथा (३) इमा हरी व्वहतस्ता नोऽअ-च्छ । विमुञ्च यथा (४) नियुद्भिर्व्वायविह ता व्विमु-ञ्च ॥

## ता ता च ॥ ३२ ॥

एतौ च ता ता शब्दौ पदावयवभूतौ स्वरान्तौ भव-तः । यथा (५) ता ता पिण्डानां प्रजुहोम्म्यग्नौ ॥

## धिष्ण्या व्वरिवो व्विदं धिष्ण्या युवमिति च ॥ ३३ ॥

एतौ च यथागृहीतौ धिष्ण्याशब्दौ स्वरान्तौ भव-तः । यथा (६) धिष्ण्या व्वरिवो व्विदम् । यथा (७) तदश्विना भृणुतं धिष्ण्या युवम् । इतिशब्दः पदा-

(१) २५ । ३८ ॥
(२) ३३ । ५५ ॥
(३) ३३ । ६२ ॥
(४) २७ । २२ । इमे ह्युदाहरणाङ्काः पदपाठादवगन्तव्याः ॥
(५) २५ । ४२ ॥
(६) २० । ७४ ॥
(७) २५ । १५ । अत्राङ्काः पदपाठाद्बुधैर्ज्ञेयाः ॥

धिकारप्रकरणसमाप्तिज्ञापनार्थः ॥

भाव्युपधश्च रिद्विसर्जनीयः ॥ ३४ ॥

भावी उपधाभूतो यस्य स भाव्युपधः कोऽसौ विसर्जनीयः । रिद्विसर्जनीयश्च 'विसर्जनीयो रिफित' इत्यतश्चारभ्य यः परिभाषितः एतौ विसर्जनीयावधिकृतौ वेदितव्यौ । अधिकारसूत्रमेतत् (१) ॥

रेफे लुप्यते दीर्घश्चोपधा ॥ ३५ ॥

रेफे प्रत्यये लुप्यते विसर्जनीय उभयरूपोऽपि भाव्युपधो रिद्विसर्जनीयश्च उपधाभूतश्च स्वरो दीर्घमापद्यते । भाव्युपधो भवति यथा (२) रुरुः रौद्रः । रुरूरौद्रः क्रूयिः । (३) मतिभिः रिहन्ति । मतिभी रिहन्ति । रिद्विसर्जनीयो भवति यथा (४) प्रातः रात्रिः । प्रातारात्रिः । (५) पुनः रक्तम् । पुनारक्तम् । रूपोदाहरणमेतत् । उपरितनसूत्रे प्रयोजनं भविष्यति । भावीत्यादिकिम् । (६) परि नो रुद्रस्य ॥

---

(१) इदं सूत्रं यदत्र स्मृतं तत्पूर्वमुक्तम् ॥

(२) २४ । ३९ ॥

(३) ७ । १६ ॥

(४) इदमुदाहरणं लौकिकम् । जटायामुदाहरणानि भवन्ति ॥

(५) इदमप्युदाहरणं पूर्वोक्तवद्बोध्यम् ॥

(६) १६ । ५० । इति प्रत्युदाहरणमपि 'ग' 'घ' पुस्तके नास्तीति ॥

## रेफᳪ स्वरधौ ॥ ३६ ॥

रेफमापद्यते उभयरूपो विसर्जनीयः स्वरेषु परभूतेषु धिसञ्ज्ञकेषु च परभूतेषु । स्वरे भवति यथा (१) अग्निः एकाक्षरेण । अग्निरेकाक्षरेण । (२) प्रातः अग्निम् । प्रातरग्निम् । प्रातः इन्द्रम् । प्रातरिन्द्रम् । धिसञ्ज्ञकेषु भवति यथा (३) विचक्षुः वनेषु । विचक्षुर्वनेषु । (४) सवितः वामम् । वाममद्य सवितर्वामम् । भावीत्यादिकिम् । दिवो मूर्द्धा । (५) ॥

## कण्ठ्यपूर्व्वो यकारमरिफितः ॥ ३७ ॥

अवर्णः कण्ठ्यः अवर्णपूर्वो विसर्जनीयो अरिफितो यकारमापद्यते । स्वरेषु यथा (६) श्वित्रः आदित्यानाम् । श्वित्रयादित्यानामित्येवं स्थिते यवयोः पदान्तयोरित्यादिना यकारलोपः । ततः श्वित्रऽआदित्या-

---

(१) ९ । ३१ ॥

(२) ३४ । ३४ ॥

(३) ३ । १५ ॥

(४) ८ । ६ ॥

(५) इति प्रत्युदाहरणं 'ग' 'घ' पुस्तके नास्तीति ज्ञेयम् ॥ १८ । ५४ । इमान्युदाहरणानि संहितायां बोध्यानि ॥

(६) २४ । ३९ ॥

नामिति रूपं सिद्ध्यति । (१) इन्द्रः एकम् । इन्द्रऽ एकꣳ सूर्य्यम् । (२) याः ओषधीः । याऽ ओषधीः पूर्व्वीः । (३) याः अफलाः । याऽ अफलाऽअपुष्पाः ॥

## लोपन्धौ ॥ ३८ ॥

अरिफितः कण्ठ्यपूर्वो विसर्ज्जनीयो लोपमापद्यते धिसञ्ज्ञकेषु प्रत्ययेषु । यथा (४) अयक्ष्माः मा । अयक्ष्मा मा वः । (५) शततेजाः वायुः । शततेजा वायुरसि । अरिफित इति किम् । (६) मा ह्वार्मा ते यज्ञपतिः । (७) ॥

## भूमेश्चाकारेऽपृक्ते ॥ ३८ ॥

भूमिशब्दसम्बन्धी विसर्ज्जनीयो लुप्यते । आकारेऽपृक्तसञ्ज्ञके परे । यथा (८) भूमिः आददे । दिवि सद्भूम्यादंदे । आकारेऽपृक्त इति किम् । (९) भूमि-

(१) १७ । ९२ ॥
(२) १२ । ७५ ॥
(३) १२ । ८९ ॥
(४) १ । १ ॥
(५) १ । २४ ॥
(६) १ । २ ॥
(७) लोपशास्त्रस्य बलवत्त्वान्न पूर्वसूत्रेण यकारः ॥
(८) २६ । १६ ॥
(९) २३ । १० ॥

रा वर्पनम्महत् ॥

## यकाराकारयोर्ज्जास्पत्ये पदे ॥४०॥

जास्पत्ये पदे यकारस्य च लोपो भवति । जायास्पत्यमिति प्राप्ते यकाराकारयोर्लोपे कृते जास्पत्यमिति रूपं भवति । यथा (१) सञ्जास्पत्यꣳ सुयममा कृणुष्व । (२) ॥

## अलोपो माँस्पचन्याः ॥ ४१ ॥

अकारलोपो माँस्पचनीशब्दे द्रष्टव्यः । माँसपचनी इति प्राप्ते यथा (३) यन्नीक्षणं माँस्पचन्याः । (४) ॥

## सर्व्वो अकार ओकारम् ॥ ४२ ॥

सर्वः अकारः ओकारमापद्यते । सर्वग्रहणात्सोपधो विसर्ज्जनीयो घिसञ्ज्ञकेषु प्रत्ययेषु । यथा (५)

---

(१) ३३ । १२ ॥

(२) अत्र यकाराकारयोर्लोपः सकारागमश्च निपात्यते ॥

(३) २५ । २६ । माँसपचनीयमिति 'ग' पुस्तकपाठः ॥

(४) अत्र ऋक्प्रातिशाख्यसूत्रेण "माँस्पचन्यामाँश्च त्वेमांश्चतोश्च" इत्यनेन एतेषां पदानामादिस्वरोऽनुनासिको वेदितव्यः संहितायां पदे च । अतोऽनुस्वाराभावाद "नुस्वारस्यꣳ मित्यादेशः शषसहरेफेषु" इत्यनेन वक्ष्यमाणप्रातिज्ञापारिशिष्टसूत्रेण ꣳकारादेशो न भवतीति बुधैर्बोध्यम् ॥

(५) १ । १ ॥

अवश॑ठ॑◦सः ध्रुवाः । अवश॑ठ॑◦सो ध्रुवाः' (१) मातरिश्वनः घर्म्मः । मातरिश्वनो घर्म्मः । अरिफित इति किम् । (२) पुनर्म्मनः । (३) ॥

## अकारे च ॥ ४३ ॥

अकारे च प्रत्यये सर्वो अकार ओकारमापद्यते । यथा (४) वेदः' असि । वेदोऽसि । (५) अग्ने गुवोऽग्ने पुवः । अरिफितइति किम् । (६) पुनरग्ने । (७) पुनरायुः ॥

## एषो ह च ॥ ४४ ॥

एष इत्ययं विसर्ज्जनीय ओकारमापद्यते ह इत्येतस्मिन्पदे प्रत्यये । अवश्यमत्र 'एष चे' त्यनेन एषशब्द-

---

(१) १ । २ ॥

(२) ४ । १५ ॥

(३) अस्मिन् सूत्रे अकारग्रहणान्न दीर्घोपधग्रहणम् । ननु पूर्वेषु लोपशास्त्रस्य बलवत्त्वान्नायं विधिः । शृणु पूर्वविधेरप्राप्तत्वाद्विशेषावगमाच्च । न लोपशास्त्रस्य बलवत्त्वं किन्तूत्तरसूत्रस्य बलवत्त्वं बोध्यम् ॥

(४) २ । २१ । 'एदोद्भ्यां पूर्व्वमकार' इत्याकारस्य पूर्वरूपता बोध्याऽथ च 'एदोद्भ्यामकारो लुगभिनिहितः' इति प्रथमाध्यायस्थेन चतुर्द्दशोत्तरैकशततमेन सूत्रेणाऽभिनिहितः स्वरो भवतीति सुज्ञैर्ज्ञेयम् ॥

(५) १ । १२ ॥

(६) १२ । ९ ॥

(७) ४ । १५ ॥

स्य व्यञ्जनमात्रे विसर्ज्जनीयलोपो विहितः तेनात्र ओ-कारो निपात्यते । यथा (१) एषो ह देवः । (२) ॥

## स्वो रुहावहश्चरात्र्याम् ॥ ४५ ॥

स्वरित्ययं विसर्जनीयो रुहौ प्रत्यये ओकारमापद्यते । अहरित्ययं च रात्रिप्रत्यये । यथा । (३) स्वः रुहाणाः । स्वो रुहाणाऽ अधिनाकम् (४) स्वः रोहाव । जायऽएहि स्वो रोहाव (५) अहः रात्रे । श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे । (६) अहो रात्रेऽ ऊर्व्वष्ठीवे । (७) अहो रात्रास्ते कल्पन्ताम् ॥

## स्वरे भाव्यन्तस्थाम् ॥ ४६ ॥

स्वरे ऽसवर्णे प्रत्यये भावी अन्तस्थामापद्यते । यथा (८) त्रि अम्बकम् । त्र्यम्बकं यजामहे । (९) वाजी

(१) ३२ । ३ ॥

(२) अस्मिन्सूत्रे हकारेतिग्रहणं किमर्थं 'स्यएषचे'त्यनेनसूत्रेण एतत्सम्बन्धी विसर्जनीयो व्यञ्जनमात्रे लोपमेति तन्मा भूदेतदर्थं हकारग्रहणमित्येतच्छास्त्रज्ञैर्ज्ञेयम् ॥

(३) ११ । २२ ॥

(४) इदमुदाहरणं शाखान्तरीणम ॥

(५) ३१ । २२ ॥

(६) १८ । २३ ॥

(७) २७ । ४५ ॥

(८) ३ । ५९ ॥

(९) ११ । ४४ ॥

अर्व्वन् । आशुर्भ्भऽव व्वाज्यर्व्वन् । (१) द्रु अन्नः । द्रुन्नः सर्प्पिरासुतिः । (२) वीडु अङ्गः । स्थिरो भव व्वीड्वङ्गः ॥

## सन्ध्यक्षरमयवायावम् ॥ ४७ ॥

ए ओ ऐ औ एतानि च यथाक्रमं स्वरे प्रत्यये अय् अव् आय् आव् द्विवर्णमापद्यते । यथा (३) इडे आ इहि । इडऽ एहि । (४) कृशानो एते । कृशानवेते । (५) सरस्वत्यै अग्रजिह्वम् । सरस्वत्याऽअग्रजिह्वम् । (६) हिरण्यरूपौ उषसः । हिरण्यरूपाऽउषसः । अत्र च 'यवयोः पदान्तयो'रित्यादिना यकारवकारलोपः । 'न वकारस्यासस्थानऽएकेषामिति' न वकारस्य लोपः ।

## उदात्तस्यान्तस्थीभावे स्वरितं परमनुदात्तम् ॥ ४८ ॥

(१) ११ । ७० ॥
(२) ११ । ४४ ॥
(३) ३ । २७ ॥
(४) ४ । २७ ॥
(५) २५ । १ ॥
(६) १० । १६ ॥

उदात्तस्य स्वरस्यान्तस्यापत्तौ सत्यां परं यदनुदात्तमक्षरं तत्स्वरितं भवति । (१) त्रि अम्बकम् । त्र्यम्बकम् । (२) देवी एतु । देव्येतु सूनृता । (३) इ अन्नः । इन्नः । (४) नु इन्द्र । योजान्न्विन्द्र । ननु 'युवर्णौ यवौ क्षैप्र' इत्यत्र स्वरितो विहितः पुनः किमर्थमिदमुच्यते 'स्वरितं परं परमनुदात्तमिति' द्वयोः स्वरयोः सन्धावयं स्वरितो निगद्यते तत्र न ज्ञायते किं पूर्वस्य स्वरस्य स्थाने स्वरित उत उत्तरस्य तत्र यत्परमक्षरं अनुदात्तं तत्स्वरितं भवतीति सूत्रारम्भार्थः ॥

## कण्ठ्य ऋकारे ह्रस्वम् ॥ ४९ ॥

कण्ठ्यः स्वरः ऋकारे प्रत्यये ह्रस्वस्वरमापद्यते । यथा (५) विश्वकर्मा ऋषिः । विश्वकर्मऽऋषिः । (६) स्वाहा ऋषभम् । स्वाहऽऋषभमिन्द्राय । (७) येन ऋषयः । येनऽऋषयस्तपसा । (८) यत्र ऋष-

(१) ३ । ५९ ॥
(२) ३३ । ८९ ॥
(३) ११ ॥ ७० ॥
(४) ३ । ५२ ॥
(५) १३ । ५८ ॥
(६) २१ । ४० ॥
(७) १५ । ४९ ॥
(८) १८ । ५२ ॥

यः । यवऽक्षयो जग्मुःऽ । ह्रस्वस्य स्थाने ह्रस्वो विधीयमानोऽन्यस्याः संहिताया निवृत्तिं करोति विवृत्तिसंहितैवात्र भवति न स्वरसंहिता ॥

## अथैकमुत्तरश्च ॥ ५० ॥

अथानन्तरमुत्तरो वर्णः चशब्दात्पूर्व्वश्च एकं वर्णं विकारभूतमापद्यते, इत्येतदधिकृतं वेदितव्यम् ॥

## सिमं सवर्णे दीर्घम् ॥ ५१ ॥

'सिमादितोऽष्टौ स्वराणा'मित्युक्तम् । सिम् सञ्ज्ञकः स्वरः सवर्णे स्वरे प्रत्यये परे पूर्व उत्तरश्च एकं वर्णं दीर्घमापद्यते । यथा (१) प्र अर्प्पयतु । प्रार्प्पयतु । (२) तव अयम् । तवायम् । (३) नासत्या अश्वावत् । नासत्याश्वावत् । (४) स्रुचि इव । स्रुचीव घृतम् । (५) हि इम् । व्वि ह्वीमिद्ध्वःऽ । (६) अनु उत् । अनूज्जेषम् ॥

## अनुनासिकवत्यनुनासिकम् ॥५२॥

(१) १ । १ ॥
(२) २६ । २३ ॥
(३) २० । ८१ ॥
(४) २० । ७९ ॥
(५) १२ । ६ ॥
(६) २ । १५ ॥ एतत्सूत्रोदाहरणेषु स्थानैक्ये प्रयत्नभेदेपि 'सवर्णवर्जे'त्यनेन ज्ञापकेन दीर्घत्वम् ॥

अनुनासिकवत्येकीभावे पूर्वस्य परस्य एकमनुनासिकमापद्यते । यथा (१) उप अꣳ शुः । उपाꣳशुःऽ । (२) उप अꣳशुना । उपाꣳशुना समंक्तत्त्वम् । 'अनुनासिका चोपधे'त्यादिना एकस्मिन्पक्षे उपधाऽनुनासिक्यं एकस्मिन्पक्षे अनुस्वारो विहितः । तत्र यस्मिन्पक्षे उपधाऽनुनासिक्यं तमधिकृत्योच्यते । एतदनुनासिकवत्यनुनासिकमिति ॥

## कण्ठ्यादिवर्णं एकारम् ॥ ५३ ॥

कण्ठ्यात्पर इवर्णः पूर्वस्वरस्य परस्य कण्ठ्य एकमेकारं वर्णमापद्यते । यथा (३) वरुण इह । वरुणेह बोधि । (४) आ इदम् । एदमंगन्म ॥

## उवर्णं ओकारम् ॥ ५४ ॥

कण्ठ्यादुत्तरे उवर्णे कण्ठ्य उवर्णस्यैकमोकारमापद्यते । यथा (५) त्वा ऊर्ज्जे । त्वोर्ज्जे । (६) त्वा उत्तरतः । मित्रावरुणौ त्वोत्तरतःऽ ॥

---

(१) २५ । १९ ॥
(२) २७ । ८९ ॥
(३) २८ । ४९ ॥
(४) ४ । १ ॥
(५) १ । १ ॥
(६) २ । ३ ॥

## समुद्रस्येमँ स्त्वेमँ स्त्वोद्मानिति च ॥ ५५ ॥

'सन्ध्यक्षर ऐकारौकारा'विति वक्ष्यति तस्य पुरस्तादपवादभूतउत्तरसन्ध्यक्षरस्वरूप एकादेशो निपात्यते । यथा (१) समुद्रस्य एमन् । समुद्रस्येमन् । (२) त्वा एमन् । अपान्त्वेमन् (३) त्वा ओद्मन् । अपान्त्वोद्मन् (४) ॥

## एजत्योजोरेकेषाम् ॥ ५६ ॥

अवर्णात्पूर्वस्मादेजत्योजोः प्रत्यययोरेकेषामाचार्याणाम्मतेन उत्तरसवर्ण आदेशो भवति । यथा (५) न एजति । नेजति । ओजः यथा (६) सह ओजः । व्यागोजः सहोजः । एकेषामिति किम् । (७) तदेजति तन्नैजति । व्यागोजः सहौजः ॥

---

(१) १३ । १७ ॥
(२) १३ । ५३ ॥
(३) १३ । ५३ ॥
(४) किन्नाम निपातनत्वम् । अन्यथा प्राप्तस्यान्यथोच्चारणं निपातनमिति ॥
(५) ४० । ६ ॥
(६) ३६ । १ ॥
(७) पूर्वोक्तमुदाहरणद्वयं ज्ञेयम् ॥

## सन्ध्यक्षर ऐकारौकारौ ॥ ५७ ॥

अवर्णः सन्ध्यक्षरे प्रत्यये पूर्व उत्तरश्च एकमक्षरमापद्यते । ऐकारम् । औकारञ्च । अत्र चत्वारि सन्ध्यक्षराणि द्वावेतौ विकारौ ऐकारौकारौ तत्र यथासम्भवा'द्विकारौ यथासन्न'मिति एकारे ऐकारे च प्रत्यये ऐकारो भवति । ओकारे औकारे च प्रत्यये औकारो भवति । एकारे भवति यथा (१) स्वाहा एकताय । स्वाहैकताय । ऐकारे भवति यथा (२) इन्द्राय ऐन्द्रम् । इन्द्रायैन्द्रम् । ओकारे भवति यथा (३) इन्द्र ओजिष्ठ । इन्द्रौजिष्ठ । औकारे भवति यथा (४) प्र औक्षन् । प्रौक्षन् (५) ॥

## वाहौ च स्वरभूते ॥ ५८ ॥

वाहौ च प्रत्यये स्वरभूते पूर्वः कारश्च उत्तरश्च वाहेः सम्बन्धी उवर्ण एकमौकारमापद्यते । यथा (६) तुर्य्य ऊही । तुर्य्यौही । (७) पष्ठ ऊही । पष्ठौही । स्वर-

(१) २२ । ३४ ॥
(२) १९ । १८ ॥
(३) ८ । ३९ ॥
(४) ३१ । ९ ॥
(५) 'सन्ध्यक्षरमेकारौकारौ' इति 'ख' पुस्तकपाठः ॥
(६) १८ । २६ ॥
(७) १८ । २७ ॥

भूत इति किम् । (१) पष्ठवाट् च मे । 'उवर्ण ओकार' मित्यस्यायमपवादः ॥

## आरमृकारोऽपृक्तात् ॥ ५९ ॥

अपृक्तात्पदात्पर ऋकार आरमापद्यते सहापृक्तेन । यथा (२) आ ऋत्यै । आर्त्यै परिवित्तम् । अत्र स्वरो रेफस्तकारमारोहति (३) ॥

## ऌकारश्चाल्कारम् ॥ ६० ॥

इदं सूत्रं केचिन्न पठन्ति व्यर्थत्वात् । ऌकारश्चाल्कारमापद्यते । आ ऌकारः । आल्कारः ॥

## एदोद्भ्यां पूर्वमकारः ॥ ६१ ॥

एकारौकाराभ्यां पर अकारः पूर्वरूपमापद्यते । यथा (४) ते अवन्तु । तेऽवन्त्वस्मान् । (५) ते अप्सरसाम् । तेऽप्सरसाम् । (६) त्वेदः असि । त्वेदोऽसि ।

---

(१) १८ । २७ ॥

(२) ३० । ९ ॥

(३) 'कण्ठ्य ऋकारे ह्रस्व'मित्यस्यापवादः । यस्या ऽवश्यं प्राप्तौ सत्यां यो विधिरारभ्यते स तस्यापवादः ॥

(४) १८ । ५७ ॥

(५) २४ । ३७ ॥

(६) २ । २१ ॥

(१) सुपः असि । सुपोऽसि । (२) 'सर्वो अकार ओकारम्' । 'अकारे चे'त्यनेन च ओकारः (३) ॥

## तौ चेदुदात्तावनुदात्ते स्वरितौ ॥ ६२ ॥

तौ यदि एकारौकारौ उदात्तौ भवतः तदाऽनुदात्ते अकारे परे स्वरितौ भवतः । यथा (४) व्वेदो असि । व्वेदोऽसि । (५) सुपो असि । सुपोऽसि । (६) ते अप्सरसाम् । तेऽप्सरसाम् । 'एदोद्भ्यामकारो लुगभिनिहित'इति स्वरितत्त्वं विहितमेव । इह त्वपवादार्थं तदुच्यते (७) ॥

## न देशे भवति ॥ ६३ ॥

देशे इत्ययमेकारः अभवदित्येतस्मिन्प्रत्यये न स्वरितो भवति । यथा (८) देशे अभवत् । सो देशेऽभं-

(१) २ । २ ॥

(२) सर्वोऽकार ओकारमिति 'क' पुस्तकपाठः ॥

(३) एतत्प्रकरणे यानि विसर्गान्तानि पदानि तेषां सर्वो अकार ओकारमित्यनुवर्त्तमाने अकारे चेत्यनेन ओकारान्तत्वम् । कारग्रहणेन तत्कालमात्रस्य ग्रहणं ज्ञातव्यमिति विवेकः ॥

(४)

(५)

(६) उदाहरणत्रयस्य चिन्हस्योदाहरणत्रयं पूर्वोक्तं ज्ञातव्यमिति ॥

(७) तदनु गृह्यन्ते इति 'स' पुस्तकपाठः ॥

(८) ३४ । ११ ॥

वत्सरित् ॥

गाहमानः शिवो भरन्तो द्वेषोब्भ्यो जम्भयन्तो व्वाजे व्वाजजितो मदन्तः शोचेऽवसे सुषुवे ज्ज्योते सुपर्णो व्वीरुधः सुवीरो धातवे सूनवे दूणानऽआशवो व्वहतः सङ्क्रन्दनो बाहवो युद्ध्योऽद्रुहः ॥ ६४ ॥

एतेभ्य एकारौकारेभ्यः परोऽकारोऽभिनिधीयते । अभिनिधानं च पूर्वरूपता । गाहमानो यथा (१) गाहमानोऽद्य । शिवो यथा (२) अर्हिठं० सन्नः शिवोऽतीहि । भरन्तो यथा (३) भरन्तोऽश्वायेव तिष्ठते । द्वेषोभ्यो यथा (४) द्वेषोभ्योऽन्यकृतेभ्यः । जम्भयन्तो यथा (५) जम्भयन्तोऽहिम् । व्वाजे यथा (६)

(१) १७ । ३९ ॥
(२) ३ । ६१ ॥
(३) ११ । ७५ ॥
(४) ५ । ३५ ॥
(५) ९ । १६ ॥
(६) ९ । १८ ॥

व्वाजेवाजेऽवत । व्वाजजितो यथा (१) व्वाजजितोऽद्व्न: । मदन्तो यथा (२) मदन्तोऽग्ग्ने मा ते । घोचे यथा (३) भद्द्रघोचेऽपूपम् । अवसे यथा (४) अवसेऽग्निमन्न्वारभामहे । सुषुवे यथा (५) सुषुवेऽग्ग्रेसोमम् । ज्योते यथा (६) ज्योतेऽदिति सरस्वति । सुपर्णो यथा (७) सुपर्णोऽसि गरुत्मान् । व्वीरुधो यथा (८) व्वीरुधोऽस्यैसन्द्दत्त । सुवीरो यथा (९) सुवीरोऽवीरहा । धातवे यथा (१०) सरस्वति तमिह धातवेऽक: । सूनवे यथा (११) सूनवेऽग्ग्ने सूपायनो भव । दूणानो यथा (१२) दूणानोऽस्त्तासि । आशवो

---

(१) ९ । १३ ॥
(२) ११ । ७५ ॥
(३) १२ । २६ ॥
(४) ९ । २६ ॥
(५) ९ । २३ ॥
(६) ८ । ४३ ॥
(७) १२ । ४ ॥
(८) १२ । ९४ ॥
(९) ४ । ३७ ॥
(१०) ३८ । ५ ॥
(११) ३ । २५ ॥
(१२) १३ । ९ ॥

यथा (१) आग्नवोऽस्त्वम् । ब्रहतो यथा (२) ब्रहतोऽप्रतिधृष्टशवसम् । सङ्क्रन्दनो यथा (३) सङ्क्रन्दनोऽनिमिषः । बाह्वो यथा (४) बाह्वोऽनाधृष्या यथाऽसथ । अयुध्यो यथा (५) अयुध्योऽस्माकꣳ सेनाः । अद्रुहो यथा (६) अद्रुहोऽनमीवाऽदूषो मही: । ननु 'एदोद्भ्यां पूर्व्वमकार' इत्यनेनैवाभिनिहितः सिद्धः किमर्थं गाहमानादिभ्य उत्तरस्याकारस्याभिधानमुच्यते । नैवाभिनिहितः सिद्धः 'प्रकृतिभाव ऋच्छु' इति प्रकृतिभावमृच्छु वक्ष्यति तस्यायं पुरस्तादपवादः ॥

वोहꣳ सोऽहꣳ सोऽस्माकं तेऽभिगरो वोऽर्वाची ॥ ६५ ॥

एते द्विपदा यथागृहीतमेवाभिनिधीयन्ते । वोऽहँ यथा (७) तेषाँम्विशिप्प्रियाणां वोऽहम् । सोऽहं यथा

---

(१) १५ । ४१ ॥
(२) ८ । ३५ ॥
(३) १७ । ३३ ॥
(४) १७ । ४६ ॥
(५) १७ । ३९ ॥
(६) १२ । ५० ॥
(७) ९ । ४ ॥

(१) सोऽहँव्वार्जम् । सोऽस्माकं यथा (२) उपंस्तिर-स्तु सोऽस्माकम् । तेऽभिगरो यथा (३) अनुष्टुप्ते-ऽभिगरः ॥ अर्व्वाची यथा (४) आवोऽर्व्वाची सुम-तिः ॥ (५) ॥

## येऽन्नात्रयोः ॥ ६६ ॥

ये इत्येतस्मात्परयोः अन्नात्रसम्बन्धी अकारोऽभि-निधीयते । अन्न यथा (६) येऽन्नेषु । अत्र यथा (७) येऽत्र स्थ पुराणा ये च नूतनाः ॥

## अविद्याऽसम्भूत्योश्च ॥ ६७ ॥

अविद्या असम्भूतिसम्बन्धी अकारोऽभिनिधीयते । चशब्दात् ये इत्येतस्मात्परः । अविद्या यथा (८) ये ऽविद्यामुपासते । असम्भूतिं यथा (९) येऽसंम्भूतिमु-

(१) १८ । ३५ ॥

(२) १२ । १०१ ॥

(३) ८ । ४७ ॥

(४) ८ । ४ गाहमान इत्यारभ्य यत्पूर्वरूपतोक्ता तत्र लुप्ताकारलेखनेनाभिनिधानं ज्ञातव्यम् । (क) पुस्तके अभिनिधानश्च पूर्वरूपता इति पाठोऽपपाठो ज्ञातव्यः ॥

(५) पाणिनीयसूत्रं पूर्वरूपविधायकं सामान्यमतो विशेषाभिनिधायकमिदम् ॥

(६) १६ । ६२ ॥

(७) १२ । ४५ ॥

(८) ४० । १२ ॥

(९) ४० । ९ ॥

पासते । इत्येतयोरिति किम् (१) अथो येऽअस्य सत्वानः ॥

## उपस्थेऽन्तस्तेभ्योऽकरम् ॥ ६८ ॥

एतौ च द्विपदौ यथागृहीतमेवाऽभिनिधीयेते (२)। उपस्थेऽन्तो यथा (३) घोषे मातुर्यथोपस्थेऽन्तरस्याम् । तेभ्योऽकरं यथा (४) अहन्तेभ्योऽकरन्नमः ॥

## नमोऽस्त्वसौत्रामण्याम् ॥ ६९ ॥

नमोऽस्तु एतच्च द्विपदं यथागृहीतमेवाभिनिधीयते। सौत्रामण्यां चेन्न भवति यथा (५) नमोऽस्तु सर्पेभ्यः । (६) असौत्रामण्यां किम् । (७) नमोऽअस्त्वस्य ये ॥

## विश्वेऽग्ने विशो रायोऽनग्नौ ॥ ७० ॥

विश्वे इत्यादिभ्य एकारौकारेभ्यः परोऽकारोऽभि-

(१) १६ ॥ ८ ॥

(२) एते द्विपदे इति 'ख' पुस्तकपाठः ॥

(३) १२ । ३९ ॥

(४) १६ । ८ ॥

(५) १३ । ६ ॥

(६) स्वाद्वीन्त्वेत्यारभ्याध्यायत्रयं सौत्रामणिसञ्ज्ञकम् ॥

(७) १९ । ६८ ॥

निधीयतेऽग्नौ चेन्न भवति (१) युञ्जानःऽ प्रथममित्यत आरभ्य स्वाहीन्त्वेति यावदग्निरुच्यते । विश्वे यथा (२) विश्वेऽसुह्वम् । अग्ने यथा (३) तेऽअग्नेऽश्व-मयुञ्जन् । विष्णो यथा (४) अथा नऽइन्द्रऽइद्विष्णोऽस-पत्नाःऽ । रायो यथा (५) त्वष्टा सुदत्रो विदधातु रायोऽनु । अनग्नाविति किम् । (६) विश्वेऽअद्य मरुतः । (७) मयि गृह्णाम्यग्रेऽअग्निम् । (८) भवा पायुर्विष्णोऽअस्याः । (९) अस्मे रायोऽअमर्त्य ॥

## सूर्य्योऽग्नेऽभौ ॥ ७१ ॥

सूर्यो अग्ने इत्येताभ्यां परः अभिशब्दस्याकारोऽभि-निधीयते । सूर्यो यथा (१०) सूर्य्योऽभितापीत् । अ-

---

(१) युञ्जानः प्रथममित्येकादशाध्यायमारभ्याष्टाध्याय्यग्निचयनसञ्ज्ञकास्तान्मन्त्रान्वर्जयित्वाऽभिनिधानं भवति ॥

(२) ८ । १९ ॥

(३) ९ । ७ ॥

(४) ७ । २५ ॥

(५) ८ । १४ ॥

(६) १८ । ३१ ॥

(७) १३ । १ ॥

(८) १३ । ११ ॥

(९) १२ । १०९ ॥

(१०) १३ । ३० ॥

ग्ने यथा (१) अग्नेऽभ्यावर्त्तिन् । अभाविति किम् । (२) चक्षोः सूर्योऽअजायत । (३) अग्नेऽअच्छा व्वदेह नः ॥

## रिषो यवसे पुरुप्प्रियोऽन्नपतेऽर्णवे ॥ ७२ ॥

एतेभ्य एकारौकारेभ्यः परोऽकारोऽभिनिधीयते । रिषो यथा (४) मा सुरिषोम्ब । यवसे यथा (५) प्रोथदश्वो न यवसेऽविष्यन् । पुरुप्प्रियो यथा (६) पुरुप्प्रियोऽग्ने । अन्नपते यथा (७) अन्नपतेऽन्नस्य । अर्णवे यथा (८) अर्णवेऽन्तरिक्षे भवाः ॥

## व्यपरे च ॥ ७३ ॥

एकारौकारेभ्यः परोऽकारोऽभिनिधीयते । स चे-

---

(१) १२ । ७ ॥
(२) ३१ । १२ ॥
(३) ९ । २९ ॥
(४) ११ । ६८ ॥
(५) १५ । ६२ ॥
(६) ११ । ७२ ॥
(७) ११ । ८३ ॥
(८) १६ । ५५ ॥

दकारो वकारपरो यकारपरो वा भवति । यथा (१) सहस्रयोजनेऽवधन्वांनि । (२) तिग्मतेजोऽयस्मयं-म् (३) ॥

# गवे मे मनसो व्वाजयन्तः सोम्म्यासः पाशिनो व्विदानोऽनृते मूजवतो वृष्णोऽपाको दीदिवस्त्र्यस्त्रिꣳशे ब्रह्म्मणे यको रथो व्विश्वतः पादो व्वसन्तः ॥ ७४ ॥

एतेभ्य एकारौकारेभ्यः परोऽकारोऽभिनिधीयते । गवे यथा (४) गवेऽश्वाय । मे यथा (५) व्विशो मेऽङ्गानि । मनसो यथा (६) मनसोऽसि व्विलायकः । वाजयन्तो यथा (७) व्वाजयन्तोऽश्श्याम । सोम्यासो यथा (८) सोम्म्यासोऽग्निष्वात्ताः । पाशिनो यथा

(१) १६ । ५४ ॥

(२) १२ । ६३ ॥

(३) 'प्रकृतिभाव ऋक्षु' इत्यस्यापवादभूतमिदं सूत्रं ज्ञातव्यमिति ॥

(४) ३ । ५९ ॥

(५) २० । ८ ॥

(६) २० ३४ ॥

(७) १८ । ७४ ॥

(८) १९ । ५८ ॥

(१) पाशिनोऽति धन्वेव । विदानो यथा (२) सँविदानोऽनु द्यावापृथिवी । अनृते यथा (३) अश्रद्धामनृतेऽदधात् । मूजवतो यथा (४) मूजवतोऽतीहि । वृष्णो यथा (५) त्वष्टाऽदधच्छुष्ममिन्द्राय वृष्णेऽपाकः । अपाको यथा (६) अपाकोऽचिष्णुर्व्यशसे । दीदिवो यथा (७) स नः पावक दीदिवोऽग्ने । त्रयस्त्रिंशो यथा (८) त्रयस्त्रिंशोऽस्तुताः । ब्रह्मणो यथा (९) अस्मै ब्रह्मणेऽस्मै क्षत्राय । यको यथा (१०) यकोऽसकौ शकुन्तकः । रघो यथा (११) दूडभो रघोऽस्मान् । व्विश्वतो यथा (१२) व्विश्वतोऽदभ्यासः । पादो यथा

---

(१) २० । ५३ ॥
(२) १९ । ५४ ॥
(३) १९ । ७७ ॥
(४) ३ । ६१ ॥
(५) २० । ४४ ॥
(६) २० । ४४ ॥
(७) १७ । ९ ॥
(८) २१ । २८ ॥
(९) ७ । २१ ॥
(१०) २३ । २३ ॥
(११) ३ । ३६ ॥
(१२) २५ । १४ ॥

(१) पादो॑ऽस्य॒ विश्वा॑ भू॒तानि॑ । वसन्तो यथा (२) व॒स॒न्तो॑ऽस्यासीत् ॥

अवोऽस्त्वग्ने गृहपतेऽभि सत्त्वानोऽहं नोऽजस्रया विमानोऽजस्रः सुतेऽश्विना नमोऽग्नये तेऽग्रे वृक्षस्य प्रथमोऽन्तस्त्तोऽन्येन ॥ ७५ ॥

एतेषां च द्विपदानां उत्तरपदादिर्यथागृहीतमेवाकारोऽभिनिधीयते । अवोऽस्तु यथा (३) मर्हि॒ त्री॒णा॒मवो॑ऽस्तु । अग्ने गृहपते यथा (४) अग्ने॑ गृहपते॒ऽभि द्युम्नम् । सत्त्वानो यथा (५) अ॒स्य सत्त्वा॑नो॒ऽहम् । नोऽजस्रया यथा (६) पुरो नो॑ऽज॑स्रया सू॒र्म्या॑ यविष्ठ्य । विमानोऽजस्रो यथा (७) वि॒मानो॑ऽज॑स्रो घ॒र्मो

(१) ३१ । ३ ॥
(२) ३१ । १४ ॥
(३) ३ । ३१ ॥
(४) ३ । ३९ ॥
(५) १६ । ८ ॥
(६) १७ । ७४ ॥
(७) १८ । ६८ ॥

हविः । सुतेऽश्विना यथा (१) तनूपा भिषजा सुतेऽश्विनोभा । नमोऽग्नये यथा (२) ब्रह्मा क्षत्रमश्च नोऽवतु । तेऽग्रं यथा (३) माता च ते पिता च तेऽग्रम् तेऽग्रे वृक्षस्य यथा (४) तेऽग्रे वृक्षस्य क्रीडतः । वृक्षस्येति किम् । (५) तेऽग्रेऽश्वमयुञ्जन् । प्रथमोऽन्तो यथा (६) सुभूः स्वयम्भूः प्रथमोऽन्तः । तेऽन्ये यथा (७) महिमा तेऽन्येन ॥

## पणयो जह्रीमोऽम्बिके ॥ ७६ ॥

पणयः जह्रीमः अम्बिके एतेभ्य एकारौकारेभ्यः परोऽकारोऽभिनिधीयते । पणयो यथा (८) अपेतो यन्तु पणयोऽसुम्नाः । जह्रीमो यथा (९) अत्रा जह्रीमोऽशिवा ये । अम्बिके यथा (१०) अम्बेऽम्बिके-

(१) २० । ५६ ॥
(२) २३ । १३ ॥
(३) २३ । २४ ॥
(४) २३ । २५ ॥
(५) ९ । ७ ।
(६) २३ । ६३ ॥
(७) २३ । १५ ॥
(८) ३५ । १ ॥
(९) ३५ । १० ॥
(१०) २३ । १८ ॥

ऽम्बालिके ॥

नो नुमोऽदुग्धाऽइव प्रचेतसोऽश्वा-
न्नरोऽस्माकँ वृषपाणयोऽश्वाः प्र-
दिशोऽनूदितेऽनागाऽअन्धसोऽर्चीप-
नस्य तेऽद्धा यज्ञियेभ्योऽमृतत्त्वँ-
विपश्चितोऽभि जनोऽनमीवऽआयु-
वोऽनु नोऽद्य देशोऽभवद्धयुनेऽजानि-
ष्ट विद्मनाऽपसोऽजायन्त पूर्व्या-
सोऽरेणवो नोऽश्मानोऽदितिर्नो-
हिः ॥ ७७ ॥

एते च द्विपदा यथा गृहीतमेवाभिनिधीयन्ते । नो नुमोऽदुग्धाऽइव यथा (१) अभि त्वा शूर नो नुमोऽदुग्धाऽइव । प्रचेतसोऽश्वान् यथा (२) अश्वाजनि प्रचेतसोऽश्वान् । नरोऽस्माकं यथा (३) नो नरो-

(१) २७ । ३५ ॥
(२) २९ । ५० ॥
(३) २९ । ५७ ॥

ऽस्माकमिन्द्र । वृषपाण्योऽश्वा यथा (१) वृषपाणयोऽश्वा रथेभिः । प्रदिशोऽनु यथा (२) प्रदिशोऽनु सर्वाः । उदितेऽनागा यथा (३) यदद्य सूरऽउदितेऽनागाः । अन्धसोऽर्वा यथा (४) अन्धसोऽर्वा विश्वानराय । पनस्य तेऽद्वा यथा (५) पनस्य तेऽद्वा देव मह्ँ २॥ऽ असि । यज्ञियेभ्योऽमृतत्वम् यथा (६) यज्ञियेभ्योऽमृतत्वꣳ सुवसि भागमुत्तमम् । विपश्चितोभिर्यथा (७) पावकवर्णाः शुचयो विपश्चितोऽभिस्तोमैः । जनोऽनमीवो यथा (८) सर्वऽइज्जनोऽनमीवः । आयवोऽनु यथा (९) आयवोऽनुष्टुवन्ति । नोऽद्य यथा (१०) अनु नोऽद्यानुमतिः । देवोऽभवद्यथा (११) सो देवोऽभवत्सरित् । व्युनेऽजनिष्ट यथा

(१) २९ । ४४ ॥
(२) ३२ । ४ ॥
(३) ३३ । २० ॥
(४) ३३ २३ ॥
(५) ३३ । ३९ ॥
(६) ३३ । ५४ ॥
(७) ३३ । ८१ ॥
(८) ३३ । ८६ ॥
(९) ३३ । ९७ ॥
(१०) ३४ । ९ ॥
(११) ३४ । ११ ॥

(१) इडायास्पुत्रो वयुनेऽजनिष्ट । विष्मनाऽपसोऽजायन्त यथा (२) विष्मनाऽपसोऽजायन्त मरुतः । पूर्व्यासोऽरेणवो यथा (३) पूर्व्यासोऽरेणवः सुक्रताः । नोऽश्मा यथा (४) नोऽश्मा भवतु नस्तनूः । नोऽदितिर्यथा (५) अधि ब्रवीतु नोऽदितिः । नोऽहिर्यथा (६) उतनोऽहिर्बुध्न्यः ॥

## ब्राह्मणः ॥ ७८ ॥

ब्राह्मण इत्येतस्मादोकारात्परोऽकारोऽभिनिधीयते । यथा (७) ब्राह्मणोऽस्य मुखम् ॥

## यजुष्षु च ॥ ७९ ॥

'गाह्मान' इत्यादिभिः सूत्रैर्ऋक्सम्बन्ध्यभिनिधानमुक्तम् । इदानीं यजुष्ष्वाह । यजुष्षु च विशेषेण एकारादोकाराच्च परोऽकारोऽभिनिधीयते । यथा (८)

(१) ३४ । १४ ॥
(२) ३४ । १२ ॥
(३) ३४ । २७ ॥
(४) २९ । ४९ ॥
(५) पूर्वोक्तोदाहरणाङ्को द्रष्टव्यः ॥
(६) ३४ । ५३ ॥
(७) ३१ । ११ ॥
(८) पूर्वोक्तमुदाहरणं ज्ञेयम् ॥

व्वेद॑ः असि । व्वेदो॑ऽसि । यथा (१) कः असि । कोऽसि ।
यथा (२) ते अप्सरसाम् । तेऽप्सरसाम् ॥

## सङ्क्रमे च सर्व्वत्र ॥ ८० ॥

गलत्पदमतिक्रम्यागलता सह सन्धानं सङ्क्रमः । 'त्रिपदाद्यावर्त्तमाने सङ्क्रम' इति वक्ष्यति तत्र सङ्क्रमे एकारौकाराभ्यां परोऽकारोऽभिनिधीयते । च शब्दात्सर्वत्र यजुष्षु ऋक्षु च । यजुष्षु भवति यथा (३) श्रूद्रे यदर्य्ये । अत्र पदेषु सङ्क्रमो भवति । यथा (४) श्रूद्रेऽर्य्ये । (५) तार्क्ष्यः अरिष्टनेमिः । अत्र क्रमसंहितायामभिनिहितो भवति । यथा (६) श्रूद्रेऽर्य्ये । तार्क्ष्योऽरिष्टनेमिः । ऋक्षु भवति यथा (७) यज्ञः अभि । यज्ञोऽभि । सङ्क्रम इति किम् । (८) स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः ॥

---

(१) तथा ॥
(२) तथैव ॥
(३) २० । १४ । अत्र पदपाठस्याङ्को बोध्यः ॥
(४) इदमपि तथा ॥
(५) २५ । १९ ॥
(६) तथैव ॥
(७) १७ । ९० । अत्रापि पदपाठादङ्को बोध्यः ॥
(८) २५ । १९ ॥

## प्रकृतिभाव ऋक्षु ॥ ८१ ॥

'गाहमाना'दिभिः सूत्रैर्ऋच्चभिनिहितोऽभिहितः। ततोऽन्यत्र ऋक्षु प्रकृतिभावो भवति। यथा (१) उप-प्रयन्तोऽअध्वरम्। (२) आरेऽअस्मे च शृण्वते॥

## जुषाणश्चानध्वनि ॥ ८२ ॥

'यजुष्षुचे'त्यनेन सूत्रेण यजुष्ष्वभिनिधानमुक्तम्। तदपवादभूतमिदमारभ्यते। जुषाणशब्दसम्बन्धी ओ-कारः अनध्वनि प्रत्यये प्रकृत्या भवति। यथा (३) जुषाणोऽअप्तुराज्यस्य वेतु स्वाहा। अनध्वनीति कि-म्। जुषाणोऽध्वाज्यस्य वेत्तु स्वाहा। इदमुदाहरणं शाखान्तरीयम्॥

## ते चानुदात्तमनुदात्ते ॥ ८३ ॥

ते इत्येतच्च पदं अनुदात्तं चेत्प्रकृत्या भवति अनुदा-त्ते च प्रत्यये। यथा (४) या तेऽअग्नेऽयः शया। अ-नुदात्तमिति किम्। (५) तेऽप्सरसाम्॥

(१) ३ । ११ ॥
(२) तथा ॥
(३) ५ । ३४ ॥
(४) ५ । ७ ॥
(५) २४ । ३७ ॥

हेडऽआपो गुवोऽपाग्ग्ने धीरासो दे-
वासऽउरो रक्षाणो मो व्वैश्वानरो
व्वृषभो व्वचः प्प्राणऽउदानोऽङ्गऽइ-
मा मे व्वृष्णो दशमास्योन्धऽआवि-
त्तोऽरिष्टोऽअर्ज्जुनः प्प्रत्याश्रावः
स्विष्टो घासे प्प्रणीतस्त्तेब्भ्यो नमो-
ऽअस्तु दूरे नोऽअद्य यज्ञे सध-
स्त्थे सोऽअद्ध्वरायेन्द्रे हिरण्यपर्ण्णो
द्वारो देवोऽब्दो रथिब्भ्यो महद्भ्यः
सꣳसदः ॥ ८४ ॥

एते च एकारौकारा ऋक्षु यजुष्षु च प्रकृत्या भवन्ति अकारे प्रत्यये। अत्र च यत्र द्वयोः पदयोः पाठः सूत्रे तत्र नियमार्थः स तेनैव पदेन परभूतेनाधस्तनपदस्य प्रकृतिभावः । एकपदे समाम्नाये त्वकारान्ते प्रकृतिभावः। हेडो यथा (१) देवस्य हेडोऽअव यासिसीष्ठाः ऋक्त्वयं प्रकृतिभावः। 'व्यपरे चे'त्यनेनाभिनि-

(१) २१ । ३ ॥

ह्निते प्राप्ते (१) देवीरापोऽअपान्नपात् । द्वितीयमुदाहरणं आपो । यथा (२) आपोऽअस्मान् । शुवो यथा (३) देवीरापोऽअग्रे गुवोऽअग्रे पुवः । अपाग्ने यथा (४) अपाग्नेऽ अग्निम् । धीरासो यथा (५) तामुधीरासोऽ अनु दिश्य । देवासो यथा (६) यत्र देवासोऽअजुषन्त । उरो यथा (७) द्यावापृथिवीऽउरो अन्तरिक्ष । रक्षाणो यथा (८) रक्षाणोऽअप्युयुक्षन् । मो यथा (९) मोऽअहन्तवं वीरम् । वैश्वानरो यथा (१०) वैश्वानरोऽअदब्धः । वृषभो यथा (११) अस्तभ्नाद्यांवृषभोऽअन्तरिक्षम् । वचो यथा (१२) उग्रंवचोऽअपावधीत् । प्राणो यथा (१३) प्राणोऽअङ्गेऽअ-

(१) ६ । २७ ॥
(२) ४ । २ ॥
(३) १ । १२ ॥
(४) १ । १७ ॥
(५) १ । २८ ॥
(६) ४ । १ ॥
(७) ४ । ७ ॥
(८) ४ । १४ ॥
(९) ४ । २२ ॥
(१०) ४ । १४ ॥
(११) ४ । ३० ॥
(१२) ५ । ८ ॥
(१३) ६ । २० ॥

ङ्क्ते । उदानो यथा (१) उदानोऽअङ्क्तेऽअङ्क्ते निधीतः । इमा मे यथा (२) इमा मेऽअग्नऽइष्टकाः । वृष्णो यथा (३) वृष्णोऽअर्ठ०शुभ्यांम् । दशमास्यो यथा (४) दशमास्योऽअस्तत् । अन्धो यथा (५) अन्धोऽअच्छेतः । आवित्तो यथा (६) आवित्तोऽअग्निः । (७) अरिष्टोऽअर्जुनः । द्विपदमेतत् । प्रत्याश्रावो यथा (८) प्रत्याश्रावोऽ अनुरूपः । स्विष्टो यथा (९) स्विष्टोऽअग्निरग्निना । घासे यथा (१०) घासेऽअज्राणाम् । प्रणीतो यथा (११) प्रणीतोऽअग्निरग्निना । तेभ्यो नमोऽअस्तु यथा (१२) तेभ्यो नमोऽअस्तु ते नोऽवन्तु । तेभ्यो नमो इति किम् । (१३) नमोऽस्तु नील-

(१) ६ । २० ॥
(२) १७ । २ ॥
(३) ७ । २ ॥
(४) ८ । २८ ॥
(५) ८ । ५४ ॥
(६) १० । ९ ॥
(७) १० । २१ ॥
(८) १९ । २४ ॥
(९) २१ । ५८ ॥
(१०) २१ । ४४ ॥
(११) १९ । १७ ॥
(१२) १५ । १५ ॥
(१३) १६ । ८ ॥

ग्रीवाय । दूरे यथा (१) दूरेऽअमित्रश्च गणाः । नो यथा (२) सम्मितासो नोऽ अद्य । यज्ञे यथा (३) यज्ञे-ऽअस्मिन् । सधस्थे यथा (४) पृथिव्याः सधस्थेऽअ-ङ्गिरस्वत् । सो यथा (५) सोऽअद्वराय परिणीयते । इन्द्रे यथा (६) सुदेवमिन्द्रेऽअश्विना । हिरण्यपर्णौ यथा (७) हिरण्यपर्णौऽअश्विभ्याम् । द्वारो यथा (८) देवीर्द्वारोऽ अश्विना । देवो यथा (९) देवोऽअ-ग्निः स्विष्टकृत् । अब्दो यथा (१०) सजूरब्दोऽअय-वोभिः । रथिभ्यो यथा (११) नमो रथिभ्योऽअरथे-भ्यः । महद्भ्यो यथा (१२) महद्भ्योऽअर्भकेभ्यः ।

---

(१) १७ । ८३ ॥
(२) १७ । ८४ ॥
(३) पूर्वोक्तमुदाहरणं ज्ञेयम् ॥
(४) ११ । ६१ ॥
(५) ३३ । ७५ ॥
(६) २१ । ४८ ॥
(७) २१ । ५६ ॥
(८) २१ । ४९ ॥
(९) २१ । ५८ ॥
(१०) १२ । ७४ ॥
(११) १६ । २६ ॥
(१२) पूर्वोक्तमुदाहरणं बोध्यम् ॥

सꣳसदो यथा (१) सꣳसदोऽअष्टमी (२) ॥

छन्दोऽअङ्कुपमङ्काङ्कमस्त्रीव-

यः ॥ ८५ ॥

छन्दइत्ययमोकारः अङ्कुपं अङ्काङ्कं अस्त्रीवयइत्येतेषु प्रकृत्या भवति । अङ्कुपं यथा (३) काव्यं छन्दोऽअङ्कुपम् । अङ्काङ्कं यथा (४) तन्द्रं छन्दोऽअङ्काङ्कम् । अस्त्रीवयो यथा (५) प्रतिमा च्छन्दोऽ अस्त्रीवयश्छन्दः । एतेष्विति किम् (६) सꣳस्तुप्छन्दोऽनुष्टुप्छन्दः ॥

का द्ध्रुवोती सदना होतारा ज्ज्या स्वधा पृथिवी प्रतिमेमसदन्नऽइया-माकम्मोर्द्ध्वमियमवस्त्तादुतास्मि-षु ॥ ८६ ॥

(१) २६ । १ ॥

(२) अस्मिन्सूत्रे अरिष्टेऽर्जुनइति पूर्वरूपघटितपाठः सोऽपपाठः 'घ' पुस्तकस्थो बुधैर्ज्ञातव्य इति ॥

(३) १५ । ४ ॥

(४) १५ । ५ ॥

(५) १४ । १८ ॥

(६) १५ । ५ ॥

का ध्रुवा ऊती सदना होतारा ज्या स्वधा पृथिवी प्रतिमा एतानि पदानि प्रकृत्या भवन्ति । ईम् असदन् अश्याम अक्रन् ऊर्ध्वम् इयम् अवस्तात् उत अस्ति इत्येतेषु प्रत्ययेषु यथासङ्ख्यम् । का यथा (१) काऽईम॑रे । ध्रुवा यथा (२) ध्रुवाऽअ॑सदन् । ऊती यथा (३) ऊतीऽअ॑श्याम॑ र॒यिम् । सदना यथा (४) सु॒गावो॑ दे॒वाः॒ सद॑नाऽ अक्रन् । होतारा यथा (५) दैव्या॑ हो॒तारा॑ऽऊर्ध्वम् । ज्या यथा (६) ज्याऽइ॒यम् । स्वधा यथा (७) स्व॒धाऽअ॑वस्तात् । पृथिवी यथा (८) पृ॒थि॒वीऽउ॒त द्यौः । प्रतिमा यथा (९) न तस्य॑ प्र॒ति॒माऽअ॑स्ति ।

## प्रगृह्यपदं स्वरे ॥ ८७ ॥

प्रगृह्यं पदं स्वरे प्रत्यये प्रकृत्या भवति । यथा (१०)

---

(१) २३ । ५५ ॥
(२) २ । ६ ॥
(३) १८ । ७४ ॥
(४) ८ । १८ ॥
(५) २७ । १८ ॥
(६) २९ । ४० ॥
(७) ३३ । ७४ ॥
(८) ३३ । ४२ ॥
(९) ३२ । २ ॥
(१०) ७ । ३१ ॥

इन्द्राग्नीऽ आगतम् । (१) स्वर्त्येऽ अन्न्यान्न्यां । स्वरसन्धेरपवादः ॥

## न रोदसीमे ॥ ८८ ॥

रोदसी इत्येतत्पदं प्रगृह्यं इमे इत्येतस्मिन्पदे न प्रकृत्या भवति । यथा (२) राये नु यञ्जज्ञतूरोदसीमे । इमे इति किम् । (३) आ पप्रिवान्नोदसीऽ अन्तरिक्षम् ॥

## विश्पतीवोपस्थिते ॥ ८९ ॥

विश्पती इत्येतत्पदं इवे परभूते उपस्थिते इतिकरणे प्रकृत्या भवति । यथा (४) विश्पतीऽ इवेति विश्पतीऽ इव । उपस्थित इति किम् । (५) आ विश्पतीव बीरिटे ॥

## उकारोऽपृक्तोऽस्पर्शात् ॥ ९० ॥

---

(१) ३३ । ५ ॥

(२) २७ । २४ ॥

(३) १७ । ५९ ॥

(४) ३३ । ४० । अस्योदाहरणस्य पदपाठे सत्वात् पदपाठादयमङ्गोऽवगन्तव्यः ॥

(५) ३३ । ४४ । किन्नामोपस्थितत्वम् । उक्तं च ज्योत्स्नायाम् । उपस्थितं सेतिकारं केवलं तु पदं स्थितम् । तत्स्थितोपस्थितं नाम यत्रोभे आह संहितेति ॥

उकारोऽपृक्त एकवर्णः असम्प्राप्तपरः प्रकृत्या भवति स्वरे प्रत्यये । यथा (१) न वाऽउँऽ एतत् । (२) एतवाऽउँऽ अग्नी । अपृक्त इति किम् । (३) योजा न्विन्द्र । असम्प्राप्तादिति किम् । (४) किम्वा वपनं मह्यत् ॥

## प्लुतमितौ ॥ ९१ ॥

प्लुतान्तं पदं प्रकृत्या भवति इतौ प्रत्यये । यथा (५) विवेशा ३ इति । तेषु विश्वभुवनमाविवेशा ३ ॥

## ओकारश्च ॥ ९२ ॥

ओकारः पदान्तीयः प्रकृत्या भवति इतौ प्रत्यये । यथा (६) चित्रभानो इति । (७) कृशानो इति । इताविन्यनुवृत्तिः कस्मात् स्वरमात्रे मा भूत् इताविन्येव

(१) २३ । १६ ॥

(२) १७ । ९७ ॥

(३) ३ । ५१ ॥

(४) २३ । ९ ॥

(५) २३ । ४९ । अत्र अस्मिन्नुदाहरणे इतिपरत्वं नास्ति संहितायां न पद-पाठेऽपि न क्रमपाठवेलायां इतिपरत्वं वेष्टने ज्ञातव्यम् ॥

(६) २० । ७८ ॥

(७) ४ । २७ । इत्युदाहरणद्वयस्याङ्कः पदपाठाद्बोध्यः ॥

(१) छ्रम्नानवेते वं० ॥

## उकारोऽपृक्तो दीर्घमनुनासिकम् ॥ ९३ ॥

उकारोऽपृक्त एकवर्णो दीर्घमनुनासिकं चापद्यते । यथा (२) ऊँ इति । इताविल्येव । यथा (३) न वा ऽउ एतत् । नात्र दीर्घमनुनासिकं च । इतावविद्यमानत्वात् ॥

## इतेश्च परं पदं चर्चायाम् ॥ ९४ ॥

इतिकरणाच्च परं उ इत्येतत्पदमपृक्तं दीर्घमनुनासिकमापद्यते पदचर्चायाम् । चर्चापदस्वरूपमुक्तम् (४) एतदुक्तं भवति वेष्टने यदितिकरणात्परं पदं चर्चा तदेवमुच्यते । तत्पदस्वरूपज्ञापनार्थम् । यत्र तु तथाभूतं पदस्वरूपं न भवति तत्र उ इत्येतत्स्वरूपं हि तत्पदं भवति । अयं चार्थोऽनेन सूत्रावयवेन ज्ञाप्यते । इतिकरणात्परतो यत्पदवचनं तत्स्वरूपज्ञापनार्थमिति । (५) उत् । ऊँ इत्यूम् । त्यम् जातवेदसमिति

---

२७ ॥

ज्ञात । ब्वेदसम् । पदचर्चायामिति किम् । (१) उद्धृति ॥

तकारवर्गश्चकारवर्गे चकारवर्गम् ॥ ९५ ॥

तकारवर्गः पदान्तीयः चकारवर्गे प्रत्यये परे चकारवर्गमापद्यते । यथा (२) तत् चक्षुः । तच्चक्षुः । (३) आरात् चित् । आराच्चिद्द्वेषः । (४) आच्छत् छन्दः । आच्छच्छन्दः । (५) उत् जिहानाः । प्रवयामुज्जिहानाः । झकारादि ञकारादि च पदानामुदाहरणं संहितायां न विद्यते । नकारस्य चकारछकारप्रत्ययोः सन्धिरुक्तः । 'नुः' । 'चछयोः शम्' । (६) । जकारे उदाहरणम् । यथा (७) वाजान् जयतु । वाजाञ्जयतु । (८) ॥

---

(१) इदमुदाहरणं लौकिकम् ॥

(२) ३६ । २४ ॥

(३) २० । ५२ ॥

(४) १५ । ५ ॥

(५) १५ । २४ ॥

(६) पूर्वोक्तं द्वितीयाध्यायस्थं सूत्रद्वयं ज्ञेयम् ॥

(७) ५ । ३६ ॥

(८) अत्र स्थान्यादेशयोर्यथासङ्ख्यम् । निमित्तकार्यिणोस्तु न 'शकारे चे'त्यस्याप्केतरत्वेऽशषत्वेन निमित्तानां षट्त्वात् । योगविभागस्तु तावत् उत्तरसूत्रानुवृत्त्यर्थः ॥

## शकारे च ॥ ९६ ॥

शकारे च प्रत्यये परे तकारवर्गश्चकारवर्गमापद्यते । यथा (१) तत् शकेयम् । तच्छकेयं तन्मे । (२) उत् शिषः । माऽमीषां कञ्चनोच्छिषः । (३) स्वधावान् शुक्रः । स्वधावाञ्छुक्रः । (४) पिशङ्गान् शिशिराय । पिशङ्गाञ्छिशिराय । (५) आदित्यान् श्मश्रुभिः । आदित्याञ् श्मश्रुभिः ॥

## परश्चास्पर्शपरश्छम् ॥ ९७ ॥

परश्च शकारः अस्पर्शपरश्छकारमापद्यते । यथा (६) तच्छकेयम् । माऽमीषां कञ्चनोच्छिषः । स्वधावाञ्छुक्रः । पिशङ्गाञ्छिशिराय । अस्पर्शपरइति किम् । (७) आदित्याञ् श्मश्रुभिः ॥

## उदस्त्तभाने लोपम् ॥ ९८ ॥

---

(१) १ । ५ ॥

(२) १७ । ४५ ॥

(३) ३३ । ५ ॥

(४) २४ । ११ ॥

(५) २५ । १ ॥

(६) पूर्वोक्तसूत्रोदाहरणानि ज्ञेयानि ॥

(७) पूर्वोक्तमुदाहरणं बोध्यम् ॥

उद उपसर्गात्परस्तभाने प्रत्यये सकारो लोपमापद्यते । यथा (१) उत् स्तभान । ज्योतिषा दिवमुत्तभान । (२) उत् स्तम्भनम् । उत्तम्भनम् ॥

## अश्वात्स्थे तकारश्छ॰ सञ्ज्ञायाम् ॥ ९९ ॥

अश्वशब्दादुत्तरः सकारः तकारमापद्यते सञ्ज्ञायां स्थे प्रत्यये । अश्वः अशनव्यापारोऽग्निरस्मिँस्तिष्ठतीत्यश्वत्थो वृक्षः । यथा (३) अश्वत्थे वो निषदनम् । सञ्ज्ञायां किम् । अश्वस्थः पुरुषः । (४) ॥

## स्वरात्संय्योगादिर्द्विरुच्यते सर्व्वत्र ॥ १०० ॥

इत उत्तरं द्विर्भावप्रकरणं वर्त्तिष्यते । स्वरात्परः संयोगादिभूतो वर्णो द्विरुच्यते सर्वत्र । अधस्तनविधानं पदान्तपदाद्योः । इदं तु सर्वत्र पदान्तपदाद्योर्मध्ये च पदान्तपदाद्योर्भवति । यथा (५) सम्म्यक् स्रवन्ति ।

---

(१) १७ । ७२ ॥

(२) ४ । ३६ । इदमुदाहरणं 'ग' 'घ' पुस्तके नास्तीति सुधीभिर्बोध्यम् ॥

(३) १२ । ७९ ॥

(४) लौकिकमुदाहरणम् ॥

(५) १३ । ३८ ॥

सम्यक् स्रवन्ति । द्वौ ककारौ सकारो रेफश्च संयोगः । तत्र पूर्वककारो द्विरुक्तिजः । (१) अनुष्टुप्प्रारदी । द्वौ पकारौ शकारश्च संयोगः । तत्र प्रथमः पकारो द्विरुक्तिजः । पदमध्ये भवति यथा (२) अश्वः । द्वौ शकारौ वकारश्च संयोगः । तत्र प्रथमः शकारो द्विरुक्तिजः । स्वरादिति किम् । (३) सुधिश्शुत्कसं । अत्र शकाररेफौ संयोगः । (४) ॥

## परं तु रेफहकाराभ्याम् ॥ १०१ ॥

रेफहकाराभ्यां परं व्यञ्जनं द्विरुच्यते न तु रेफहकारौ । यथा (५) ऊर्ज्जे । रेफो द्वौ जकारौ संयोगः । तत्र प्रथमो जकारः क्रमजः । (६) सूर्य्यः । रेफो द्वौ यकारौ संयोगः । तत्र पूर्वो यकारः क्रमजः । (७) बाह्वोः । हकारो द्वौ वकारौ संयोगः । तत्र प्रथमो वकारः क्रमजः । (८) ॥

---

(१) १३ । ५७ ॥

(२) २४ । १ ॥

(३) ३३ । १५ ॥

(४) अत्र सूत्रे सर्वत्रपदेन प्रकृतौ विकृतौ च द्वित्वविधानं ज्ञेयम् ॥

(५) १ । १ ॥

(६) ३१ । १२ ॥

(७) २४ । १ ॥

(८) अत्र सूत्रे तु एवार्थः । बाह्वोरित्युदाहरणे रेफहकारयोः प्रत्यक्षश्रुतिनिमित्तत्वेन सामान्यप्राप्तकार्यित्वबाधः । तेन रहभिन्नव्यञ्जनस्यैवानेन द्वित्वम् । ३ । २२ ।

## ऊष्मान्तस्थाभ्यश्च स्पर्शः ॥१०२॥

ऊष्माणः शषसहाः । अन्तस्था यरलवाः । एतेभ्यः परः स्पर्शो द्विरुच्यते । यथा (१) पृश्निः । एकः शकारो द्वौ नकारौ संयोगः । तत्र प्रथमो नकारः क्रमजः । (२) अश्मा । शकारो द्वौ मकारौ संयोगः । तत्र प्रथमो मकारः क्रमजः । (३) पार्ष्ण्यां । रेफः षकारो द्वौ णकारौ यकारश्च संयोगः । तत्र प्रथमो णकारः क्रमजः । (४) सस्नितमम् । सकारो द्वौ नकारौ संयोगः । तत्र प्रथमो नकारः क्रमजः । (५) राष्ट्रा राष्ट्रम् । षकारो द्वौ टकारौ रेफश्च संयोगः । तत्र प्रथमष्टकारः क्रमजः । (६) हस्ते । सकारो

---

अति ह्रस्वम् । ३० । २२ । अत्रैतयोर्न द्वित्वम् । स्वरे परे रेफात्परेषां ऊष्मणामनेन द्वित्वं प्राप्तं तत्र रेफस्य एकारसहितोच्चारणविधानाद्रेफधर्माभावात् ११ । ३७ । दर्शतम् । २१ । २५ । स्वर्षाभिः । यत्र तुल्यरत्वं तत्र विधानाभावाद्द्वित्वं भवत्येव । २५ । १ । स्वर्वैः । १६ । ३८ । स्वर्ण्याय । अत एव पाणिनिना 'शरोची' ति द्वित्वनिषेधः कृतः । उक्तं चामरेशकृतशिक्षायाम् । परं रेफहकाराभ्यां व्यञ्जनं तूष्मवर्जितम् । द्वित्वमापद्यते रेफहकारौ तु न कुत्र चित् । इति ॥

(१) २४ । ४ ॥

(२) १८ । १३ ॥

(३) २५ । ४० ॥

(४) १ । ८ ॥

(५) १० । २ ॥

(६) ११ । ११ ॥

इड्वः । डकारढकारौ वकारश्च संयोगः । (१) अद्दृध्वनस्मात् । दकारधकारौ वकारश्च संयोगः । (२) व्विब्भ्राट् । बकारभकारौ रेफश्च संयोगः ॥

## नानुस्वारः ॥ १०९ ॥

संयोगपूर्व इत्यनुवर्त्तते । संयोगपूर्वोऽनुस्वारो न द्विरुच्यते । यथा (३) इमᳪं स्तनम् । (४) सोमानᳪं स्वरणम् । असंयोगपूर्वस्य ह्यनुस्वारस्योपरिष्टाद्वक्ष्यति । 'अनुस्वारो ह्रस्वपूर्वोऽद्ध्यर्द्धमात्रा पूर्वा चार्द्धमात्रे'ति । यथा (५) हᳪंसः ॥

## सवर्णे ॥ ११० ॥

सवर्णे प्रत्यये न द्विरुक्तिर्भवति । अन्तस्थासंयोगोऽस्योदाहरणम् । 'स्ववर्गीये चानुत्तम' इति स्पर्शानां वक्ष्यति । यथा (६) सम् यौमि । सँय्यौमि । द्वौ यकारौ संयोगः । (७) सम् व्वपामि । सँव्वपामि । द्वौ वकारौ संयोगः ॥

(१) ४ । १९ ॥
(२) ३३ । ३० ॥
(३) १७ । ८७ ॥
(४) ३ । २८ ॥
(५) १० । २४ ॥
(६) १ । २२ ।
(७) १ । २१ ॥

## ऋवर्णे ॥ १११ ॥

ऋवर्णे प्रत्यये न द्विरुक्तिर्भवति । यथा (१) अनिष्टृतः । षकारटकारौ संयोगः । 'ऊष्मान्तस्थाभ्यश्च स्पर्शः' इति प्राप्तस्य प्रतिषेधः ॥

## ऌवर्णे ॥ ११२ ॥

ऌवर्णे प्रत्यये न द्विरुक्तिर्भवति । यथा (२) कॢंद्विः । (३) क्लृप्तम् । 'विसर्जनीयाद्यञ्जनपर' इति प्राप्तिः । ऌकारस्य मध्ये लकारस्यार्द्धमात्रां पश्यताऽऽचार्येण निषेधः कृतः । वक्ष्यति च 'ऋऌवर्णौ रेफलकारौ सश्लिष्टावश्रुतिधरावेकवर्णौ' (४) ॥

## यमे ॥ ११३ ॥

यमे प्रत्यये न द्विरुक्तिर्भवति । यथा (५) सक्थ्ना दे-

---

(१) २७ । ४ ॥

(२) १८ । १२ ॥

(३) १८ । ११ ॥

(४) अस्मिन्वक्ष्यमाणसूत्रे 'ऋऌवर्णे इति' 'क' पुस्तकपाठः । तस्मिन्नेव सूत्रे अश्रुतिधराविति 'ख' पुस्तकपाठः । ऋकारऌकारयोः परयोर्यत्र द्विरुक्तिर्भवति न भवति व्यञ्जनस्य तत्र प्रमाणममरेशकृतायां प्रातिशाख्यानुसारिण्यां वर्णरत्नप्रदीपिकाख्यायां शिक्षायाम् । ऋवर्णे न द्विरुक्तिः स्यात् ङनकारौ विहाय च । ऌवर्णेऽपि तथैव स्यात्कॢप्तं चानिष्टृतं यथा । १ । इत्यादि बुधैर्ज्ञेयम् ॥

(५) २३ । २९ । यमलक्षणं वक्ष्यमाणम् । सक्थ्नेत्यत्र ककारथकारौ थकारसम-

दिदृश्यते नारी । ककारः थकारयमौ नकारश्च संयोगः । तत्र 'स्वरात्संयोगादि' रिति द्विरुक्तिः प्राप्ता सा यमे प्रत्यये निषिद्ध्यते । यथा (१) सञ्ज्ञानमसि । ज्ञकारञकारयमौ ञकारश्च संयोगः । अत्रापि 'स्वरात्संयोगादि' रिति जकारस्य द्विरुक्तिः प्राप्ता सा यमे प्रत्यये इति नास्ति विरोधः । रुक्क्मपाप्मप्रभृतीन्युदाहरणानि ददन्ति तेषां 'सँय्योगादिः पूर्व्वस्य' 'यमश्च' त्यनेन सह विरोधः प्राप्नोति ॥

## विसर्ज्जनीयः ॥ ११४ ॥

विसर्जनीयो न द्विरुच्यते । व्यञ्जनत्वाद्विसर्जनीयस्य द्विरुक्तौ प्राप्तायां प्रतिषेधोऽयम् । यथा (२) दिवः ककुत्पतिः पृथिव्याः । (३) याः फलिनीः । (४) ॥

---

सङ्ख्यस्वकारप्रतिरूपथकारनकाराः संयोगः तत्र थकारस्य न द्वित्वम् । ककारस्य द्वित्वं न भवत्येव तत्र प्रमाणममरेशकृतशिक्षावचनम् । सक्थ्ना देदिश्यते नारी ककारोऽत्रैक एव हि । यमे परे निषेधस्तु पुनर्द्वित्वनिवारकः । १ । इति सुज्ञैर्बोद्धव्यम् ॥

(१) १२ । ४६ । अस्मिन्नुदाहरणे जकारसमसङ्ख्यगकारप्रतिरूपञकाराः संयोगः तत्र जकारस्य न द्वित्वम् ॥

(२) ३ । १२ ॥

(३) १२ । ७८ ॥

(४) अत्र विसर्गादीनां व्यञ्जनानामुच्चारणेऽङ्गुलिप्रक्षेपे च प्रमाणमुक्तं याज्ञवल्क्यशिक्षायाम् । मुष्ट्याकृतिर्मकारे तु नकारे तु नखग्रहः । अनुस्वारेऽङ्गुष्ठक्षेप ऊष्मान्तेऽङ्गुलिमोक्षणम् । १ । ककारान्ते टकारान्ते ङणेऽधोऽङ्गुलिनामनम् । पञ्चाङ्गुल्यं

# स्ववर्गीये चानुत्तमे ॥ ११५ ॥

स्ववर्गीये च प्रत्ययेऽनुत्तमे पूर्वो वर्णो न द्विरुच्य-

पकारे तु तकारे कुण्डलाकृतिः । २ । ऊर्ध्वक्षेपाच्च योष्मा स्यादधः क्षेपाच्च या भवेत् । एकैकामुत्सृजेद्धीरः स्वरिते तूभयं क्षिपेत् । ३ । अङ्गुष्ठाकुञ्चनं लघावनुस्वारे त्वपा- रसम् । दीर्घे रङ्गे च तर्जन्याः प्रसारः परिकीर्त्तितः । ४ । तर्जन्यङ्गुष्ठयोः स्पर्श- उदात्तं प्रतिचक्षते । नीचं तु मध्यमे कुर्याच्छेषं नीचतरं क्रमात् । ५ । ह्रस्वादग्रे भवे- द्दीर्घो दीर्घादग्रे भवेल्लघुः । संयोगे च परे ह्रस्वः सिंह्यसि निदर्शनम् । ६ । स्वरितं यद्भवेत्किञ्चिद्धकारसहसंयुतम् । ऊष्माणं तं विजानीयान्निक्षेप उभयोरपि । ७ । त्रिविधा तु भवेदूष्मा प्रचिता वल्का तरा । स्वरिते प्रचितां विद्यान्निपाते वल्कां विदुः । ८ । उत्थाने तु तथा तारैताभिस्तिसृभिरूष्मभिः । मात्रामादौ विदित्वा तु ततः क्षेपं प्रयो- जयेत् । ९ । एकत्वं भजते काचित्काचिद्द्वित्वे प्रतिष्ठिता । समानकान्तिका काचि- त्काचिदूष्मप्रदायिनी । १० । यथा बालस्य सर्पस्य उच्छ्वासो लघुचेतसः । एवमूष्मा प्रयोक्तव्या हकारं परिवर्जयेत् । ११ । स्वरिते समभिक्षिप्ते संयोगो यत्र दृश्यते । द्वि- मात्रिके भवेदेको मात्रिके तूभयं क्षिपेत् । १२ । अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम् । शिष्याणामुपदेशार्थे कुर्याद्वृत्तिं विलम्बिताम् । १३ । ऐन्द्री तु मध्यमा वृ- त्तिः प्राजापत्या विलम्बिता । अग्निमारुतयोर्वृत्तिः सर्वशास्त्रेषु निन्दिता । १४ । वि- वृत्तिप्रत्ययादूष्मां प्रवदन्ति मनीषिणः । तामेव प्रतिषेधन्ति अइउऋओ निदर्शन- म् । १५ । एतेषां पद्यानां स्पष्टार्थः । अमुमेवार्थं पाणिनिरप्यवदत् । अयोगवाहा वि- ज्ञेया आश्रयस्थानभागिनः । न विद्यते योगस्संयोगो वर्णान्तरेण येषां ते अयोगवाहा इत्यनुस्वारविसर्गजिव्हामूलीयोपध्मानीयाश्चत्वारः । आश्रयस्य ककारादेः स्थानं भा- जितुं शीलं येषां ते आश्रयस्थानभागिनः । अन्ये आचार्या यमवर्णानामयोगवाहान्म- न्यन्ते तेषां मतेन अयोगवाहशब्दः प्रत्यस्तमितावयवो रूढिशब्दोऽश्ववर्णवद्वेदित- व्यः । विसर्गोच्चारणे प्रमाणं माध्यन्दिनीयशिक्षायामपि । अवर्णाच्च ऋकाराच्च विसर्गः कण्ठ्य एव सः । इवर्णाच्च तथोवर्णात्तथा चैकारपूर्वकः । १ । औकारपूर्वकश्चैव ता- लव्यो भवति ध्रुवम् । एकाराच्च कण्ठतालुर्विसर्गो भवति ध्रुवम् । २ । कण्ठ्योष्ठ्यस्तु तथौकाराद्विसर्गो भवति ध्रुवम् । देवो वः सविता चात्र हकारसदृशो भवेत् । ३ । देवीरित्सो विसर्गस्तु हिकारसदृशो भवेत् । आखुस्ते पशुरित्यादौ हुकारसदृशो भवे- त् । ४ । विसर्गश्चाग्नेरित्यादौ हेकारसदृशो भवेत् । विसर्गो बाह्वोरित्यादौ होकारस-

ते । यथा (१) तत् देवानाम् । तद्देवानामवो अद्य । द्वौ दकारौ संयोगो द्विरुक्तेर्निषिद्धत्वात् । (२) अन्तरिक्षम्पुरीतता । मकारपकारौ संयोगः । अनुत्तम इति किम् । (३) तन्नो मित्रो वरुणः । अत्र द्विरुक्तिर्भवत्येव ॥

## अवसितं च ॥ ११६ ॥

निरर्थकं व्यञ्जनमवसानगतमवसितशब्देनोच्यते । अवसितं व्यञ्जनं न द्विरुच्यते । यथा (४) ऊर्क् । रेफककारौ संयोगः । अवसितमिति किम् । (५) ऊर्क् च मे । 'परं तु रेफहकाराभ्यामि'ति प्राप्तिः । रेफस्यात्र

दृशो भवेत् । ५ । अथ स्वैर्ह्लक्ष्णैरित्यादौ हिकारसदृशो भवेत् । विसर्गो द्यौष्पितेत्यादौ हुकारसदृशो भवेत् । ६ । हकारो नैव मन्तव्य इति शास्त्रव्यवस्थितिः । फणिनिश्वाससदृशो विसर्गो भवति ध्रुवम् । ७ । कनिष्ठिकामोचनं तु नीचे च प्रचये सति । नमः कूप्याय प्रथमो द्वितीयो जाग्रतस्तथा । ८ । तर्जनीमोचनं कुर्यादुदात्ते तु विसर्गके । देवो घर्म्मस्तथा ह्रस्वे स्वरिते तूभयं क्षिपेत् । ९ । अश्वो मर्त्यो भवेल्लक्ष्यं स्वारे दीर्घे कनिष्ठिकाम् । उभयोरपि ह्रस्वे च वकारे स्वरिते सति । १० । दीर्घेऽपि चोभयोः क्षेप इति शास्त्रव्यवस्थितिः । यथा स्फटिकदण्डादिरुपाधिवशतो भवेत् । ११ । तद्वदूष्मा प्रयोक्तव्या हिहुहेहो निदर्शनम् । व्यसोः पवित्रं वै तत्र ह्युदाहरणमुच्यते । १२ । इत्यादिवाक्यैरङ्गुलिप्रक्षेपे प्रमाणं बोध्यम् ॥

(१) ३३ । १७ ॥

(२) २५ । ८ ॥

(३) ३३ । ४२ ॥

(४) १८ । ९ ॥

(५) पूर्वोक्तमुदाहरणं ज्ञेयम् ॥

द्विरुक्तिर्न भवति ॥

## नान्तःपदे स्वरपञ्चमान्तस्थासु ॥ ११७ ॥

स्वरे प्रत्यये पञ्चमे च परे अन्तस्थासु च प्रत्ययभूतासु यद्वक्ष्यति तदन्तःपदे न भवति पदान्तीयस्य स विकार इत्यर्थः । यथा (१) पूषन् । पकारस्य प्रथमस्य स्वरे तृतीयभाव उक्तः सोन्तःपदे न भवति । पञ्चमे यथा (२) त्मन्न्या समञ्जन् । (३) आक्नीं ऽइमे विष्फुरन्तीऽ अमित्रान् । अत्र 'पञ्चमे पञ्चम' मिति पञ्चमभाव उक्तः सोऽन्तःपदे न भवति । अन्तस्थासु यथा (४) इषे त्वा (५) आ प्यायस्व । प्रथमस्य तृतीयभाव उक्तः सोऽन्तःपदे न भवति । वक्ष्यमाणप्रकरणस्यास्यापवादभूतोऽयं योगः । अधिकारसूत्रमेतत् ॥

## स्पर्शोऽपञ्चमः स्वरयो तृतीयम् ॥ ११८ ॥

---

(१) ३४ । ४१ ॥
(२) २० । ४५ ॥
(३) २९ । ४१ ॥
(४) १ । १ ॥
(५) १२ । ११२ ॥

अपञ्चमः स्पर्शः स्वरे प्रत्यये धिसञ्ज्ञके च तृतीयमापद्यते । स्वरे परे भवति यथा (१) उत् एनम् । उदेनमुत्तरान्नय । (२) समुद्रात् ऊर्मिः । समुद्रादूर्म्मिः । धौ परे यथा (३) यत् ग्रामे । यद्‌ग्रामे । (४) यत् वर्म्मी । यद्वर्म्मी । (५) ॥

## जिति प्रथमम् ॥ ११९ ॥

जित्सञ्ज्ञके प्रत्यये स्पर्शोऽपञ्चमः प्रथममापद्यते यथा (६) अनुष्टुप्तेऽभिगरः । (७) ऊर्क् च मे । (८) तत्सवितुः । (९) अनुष्टुप्शारदी ॥

---

(१) १७ । ४९ ॥

(२) १७ । ८९ ॥

(३) ३ । ४५ ॥

(४) २९ । ३८ ॥

(५) पूर्वोक्तेऽधिकारसूत्रे पदान्ते किम् । ३४ । ४१ । पूषन् । पदादेः परस्य वर्गतृतीयभावो न । २० । ४५ । त्मन्या समञ्जन् । तस्य दकारो न भवति 'पञ्चमे पञ्चम' मिति तकारस्य नकारो न भवति । धौ किम् । ८ । ४७ । अनुष्टप्ते । तकारान्ते पदे पूर्वे चकारे परतः स्थिते । मोक्षं तत्र न कुर्वीत यच्च पर्पौ २५ । ३७ । निदर्शनम् । अपञ्चमः किम् । १३ । ५१ । त्वम् यविष्ठ । अत्र मकारस्य वकारो न भवति । स्वरे किम् । ३ । ३५ । तत्सवितुःऽ ॥

(६) ८ । ४७ ॥

(७) १८ । ९ ॥

(८) ३ । ३५ ॥

(९) १३ । ५७ ॥

## असस्थाने मुदि द्वितीयठं० शौनकस्य ॥ १२० ॥

असमानस्थाने मुत्सञ्ज्ञके प्रत्यये स्पर्शोऽपञ्चमो द्वितीयमापद्यते शौनकस्याचार्यस्य मतेन । यथा (१) सम्म्यक् स्रवन्ति । सम्म्यख् स्रवन्ति । (२) अनुष्टुप् शारदी । अनुष्टुफ् शारदी । असस्थान इति किम् । (३) तत्सवितुः' । केचिदत्र तृतीय'मवसाने चे' त्येतत्सूत्रं पठन्ति सोऽपपाठः । यतः 'प्रथमोत्तमाः पदान्तीया' इत्यधस्तादुक्तम् । (४) ॥

## पञ्चमे पञ्चमम् ॥ १२१ ॥

---

(१) १३ । ३८ ॥

(२) १३ । ५७ ॥

(३) ३ । ३५ ॥

(४) अस्मिन्सूत्रे असस्थाने किम् । १२ । ६८ । इत्सूण्य ÷ । उक्तं च याज्ञवल्क्यशिक्षायाम् । ककारान्ते पदे पूर्वे सकारे परतः स्थिते । खसवर्णंविजानीयाद्विषख् सीसेन दर्शनम् । १ । टकारान्ते पदे पूर्वे सकारे परतः स्थिते । ठसवर्णंविजानीयात्सम्म्राट्सम्भृतो निदर्शनम् । २ । तकारान्ते पदे पूर्वे सकारे परतः स्थिते । थसवर्णंविजानीयात्तथ्सवितुर्निदर्शनम् । ३ । पकारान्ते पदे पूर्वे शकारे परतः स्थिते । फसवर्णंविजानीयादनुष्टुफ् शारदी यथा । ४ । इति । शौनकस्येते किम् । तत्सवितुः । इत्यादिपूर्वोक्तान्येवोदाहरणानि । वस्तुतस्तु तत्सवितुरित्यत्र दन्त्यसकारः पूर्वतकारसमानस्थानीयः । नकारान्ते पदे पूर्व्वे सकारे परतः स्थिते । तसवर्णंविजानीयात्त्रीन्त्समुद्रान्निदर्शनम् । इति ॥

पञ्चमे स्पर्शे प्रत्यये अपञ्चमः स्पर्शः पञ्चममापद्यते । यथा (१) ब्वाक् मात्या । ब्वाङ् मात्या । (२) ब्वट् महान् । ब्वण्महान् । (३) तत् मित्रस्य । तन्मित्रस्य ॥

## हश्च तस्मात्पूर्व्वचतुर्थम् ॥ १२२ ॥

हश्च तस्मादपञ्चमात्स्पर्शात्तृतीयभूतादुत्तरः सन्नधस्तनस्य स्पर्शस्य चतुर्थमापद्यते । यथा (४) उत् हर्षय । उद्धर्षय । (५) अवाट् हव्यानि । अवाड्ढव्यानि ॥

## नर्कारपरो जातूकर्ण्यस्य ॥ १२३ ॥

ऋकारपरो हकारः अपञ्चमस्पर्शादुत्तरो न चतुर्थमापद्यते । न च पूर्वस्तृतीयं जातूकर्ण्यस्याचार्यस्य मतेन । यथा । (६) सम सुस्रोत् हृदः । समसुस्रोद्दृहृदः । जातूकर्ण्यस्येति किम् (७) समसुस्रोद्धृ-

(१) १३ । ५८ ॥
(२) ३३ । ३९ ॥
(३) ३३ । ३८ ॥
(४) १७ । ४२ ॥
(५) १९ । ६६ ॥
(६) १८ । ५८ ॥
(७) पूर्वोक्तमुदाहरणं ज्ञेयम् ॥

द्दो वां ॥

## हि ॥ १२४ ॥

'ह्यन्तराः काला' इत्यधस्तादुक्तं कालशब्दस्येहाऽवधिवचनः । अतोऽवधिपरिज्ञापनार्थमिदं सूत्रम् । अवधेः प्रयोजनं 'न परकालः पूर्व्वकाले पुन' रित्यधस्तादेवोक्तम् ॥

## यवयोः पदान्तयोः स्वरमध्ये लोपः ॥ १२५ ॥

यकारवकारयोः पदान्तभूतयोः स्वरमध्ये वर्त्तमानयोर्लोपो भवति । अश्रवणमनुच्चारणं भवतीत्यर्थः । अधस्तात्सूत्रकारेण यौ यकारवकारौ विहितौ तयोरनेन लोपः क्रियते । पदान्तीययोर्यकारवकारयोरसम्भवात् । यथा (१) 'आकारोपधो यकारम्' । यथा । (२) महाँयिन्द्रः । महाँ२॥ऽइन्द्रः । (३) स्वाँय् अहम् । स्वाँ२ ॥ऽअहम् । तथा 'कण्ठ्यपूर्व्वो यकारमरिफितः'। (४) श्वित्य् आदित्यानाम् । श्वित ऽ-

---

(१) प्रा० अ० ३ सू० १४३ ॥

(२) ७ । ३९ ॥

(३) ११ । ८२ ॥

(४) २४ । ३९ ॥

आदित्यानाम् । (१) ता य् अस्य । ता ऽअस्य सूददो-हसः । 'सन्ध्यक्षरमयवायावम्' । (२) इड य् एहि । इड ऽएहि । (३) अदित य् एहि । अदित ऽएहि । (४) भूम्या य् आवृन् । भूम्या ऽआवृन् (५) विष्णु व् उरुगाय ॥ विष्णु ऽउरुगाय । (६) ता व् उभौ । ता ऽउभौ चतुरः । लुप्तयोश्च यकारवकारयोर्यः स्वरसन्धिः प्राप्नोति स 'न परकाल' इत्यादिना निषिध्यते ॥

## न वकारस्यासस्थान एकेषाम् ॥ १२६ ॥

वकारस्य पदान्तस्य असस्थाने स्वरे प्रत्यये लोपो न भवत्येकेषामाचार्याणां मतेन । यथा (७) विष्णवेते दाधर्थ । (८) द्युम्नानवेते वः । असस्थान इति कि-

---

(१) १२ । ५५ ॥
(२) ३ । २७ ॥
(३) तथा ॥
(४) २४ । २६ ॥
(५) ८ । १ ॥
(६) २३ । २० ॥
(७) ५ । १६ ॥
(८) ४ । २७ ॥

म् । (१) विष्णो॑ऽउरुगाय । (२) हिर॑ण्यरूपाऽउष॑सः । (३) ॥

## असौ च शाकटायनः ॥ १२७ ॥

असावित्येतस्य पदस्य असस्थाने प्रत्यये वकारो न लुप्यते । शाकटायनस्य मतेन । (४) असौ॑ एहि॑ । असावेहि॑ । एके एतत्सूत्रं पठन्ति सोऽपपाठः पूर्वेणैव सिद्धत्वात् । (५) ॥

## प्रऽउगमिति यकारलोपः ॥ १२८ ॥

प्रयुगमित्येतस्मिन्पदे यकारलोपः प्रत्येतव्यः कर्त्तव्यो वा । प्रयुज्यत इति प्रयुगम् । तत्र युजेर्यकारो लुप्यते । यथा (६) प्र ऽउ॑गमुक्थम॑व्य॑थायै । ‘न पर-

(१) ८ । १ ॥

(२) १० । १६ ॥

(३) एकेषामिति किम् । एकशब्दोऽत्र प्रधानवाची तेन प्रधानाचार्यस्य महर्षिकात्यायनस्य मतेन वकारलोपनिषेधोऽत्र प्रत्युदाहरणे न भवतीति सुज्ञैर्बोध्यम् ॥

(४) ३८ । २ ॥

(५) एतस्मिन्सूत्रे शाकटायनपदेन तच्छिष्यस्य बोधः पुराणे तथा दर्शनात् । तेन शिष्याचार्ययोरेकमतत्वादेकमतेऽप्येवमेव । यद्वा केचिच्छाकटायन इति काण्वाचार्यस्यैव नामान्तरं वदन्ति तन्मतेऽपि वकारस्य लोपो न भवति तथैवोच्चारणत्वात् । परन्तु इतिशब्दे परे विकल्पेन वकारलोपो भवति इति सप्तमाध्याये वक्ष्यति ॥

(६) १५ । ९ ॥

काल इत्यनेन' स्वरसन्धिर्न भवति ॥ (१) ॥

## अनादेशेऽविकारः ॥ १२९ ॥

इत उत्तरं स्वराणामुदात्तानुदात्तस्वरितप्रचितानामेकीभावगतं विकारं विवक्षुः परिभाषां चकाराऽऽचार्योऽनादेशेऽविकार इति । यत्रोदात्तादीनां स्वराणां सन्धावादेशो न क्रियते तत्राविकारः प्रत्येतव्यः । यथा (२) अग्निर्मूर्द्धा दिवः ककुत् । तथा (३) इयमुपरि ॥

## प्रागुवर्णादक्षराणामेकीभावः ॥ १३० ॥

उवर्णोपलक्षितात्सूत्रात् 'उदात्ताच्चानुदात्तं स्वरित' मित्येतस्मात्प्राग्यदित ऊर्ध्वमनुक्रमिष्यामस्तत्राक्षराणामेकीभावोऽधिकृतो वेदितव्यः । 'स्वरोऽक्षर' मित्यधस्तादुक्तमित्यतः स्वराणामेकीभावोऽधिकृतो वेदितव्यः । अधिकारसूत्रमेतत् । (४) ॥

---

(१) इत्यादिना स्वरसन्धेरभाव इति 'ख' पुस्तकपाठः । प्रयुगमिति 'ख' पुस्तकपाठो बोध्यः ॥

(२) ३ । १२ ॥

(३) १३ । ५८ ॥

(४) अथ वा वर्णग्रहणादनपृक्तादुवर्णात्परेषामक्षराणां प्राग्भूतस्यादिभूतस्याक्षरस्य उवर्णेन सहैकीभावो भवति । स्थानकरणाभ्यामेकीभावयोग्यो वकार एव । अत्र 'यवयोः पदान्तयोः स्वरमध्ये लोप' इत्यनेन उवर्णस्य लोप इति सिद्धे पुनः सन्ध्यर्थम् ।

## स्वरितवान्स्वरितः ॥ १३१ ॥

स्वरितवानेकीभावः स्वरितो भवति । यथा (१) पत्थ्या इव । पत्थ्येव सूरेः । (२) चम्वी इव । चम्वी-व सोमं । जात्योदाहरणे यथा (३) ब्रह्म असृज्यत ब्रह्माऽसृज्यत । (४) न्यवे असितः । न्यवेऽसितः । तैरोव्यञ्जनोदाहरणे ॥

## उदात्तवानुदात्तः ॥ १३२ ॥

उदात्तोऽस्मिन्नस्तीति उदात्तवान् । उदात्तवाने-

---

तेन 'न परकालः पूर्वकाले पुन' रित्यस्य प्रवृत्तिरिति ज्ञापित एकीभाव इति । उतम्नु वै प्रयाजमिष्यति । 'स्वरे भाव्यन्तस्था'मिति 'वाहौ च स्वरभूते' इत्यनेन उवर्णवकारयोः परस्य दृष्टत्वात् । इदं च प्रायो लक्ष्यादर्शनाद्ब्राह्मणे एव । 'अथ ब्राह्मणस्वरसंस्कारनियमः' इति भाषिकसूत्रकर्त्ता कात्यायनः शातपथब्राह्मणगतानां स्वराणां संस्कारस्य च पार्थक्येन नियममभिधत्ते । तथार्षीणां तथा मनुष्याणामिति मन्त्रे तु विश्वकर्म्मऽऋषिः । एवं सर्ववर्णस्वरसाम्येऽपि मन्त्रे मात्राकालो विलम्बः । ब्राह्मणे तु सन्निकर्षोच्चारणम् । पूषंस्तवेत्यृचो मन्त्रे सकारलोप इष्यते । ब्राह्मणे तु सकारो भिद्यते । तयोर्यथा च कृपणं त्वा अध्वर्युर्यजमानात् । कृपाणं तु वै । इति पदच्छेदः । चक्षुः सु वा एषः । वैश्वानरस्य तु वा एषः । मानुषो न्वा एषः । क्वचिल्लोपः । सुवर्णम् । अमुमर्थं तैत्तिरीयप्रातिशाख्यकृत् आह । "तु न पूर्व उदात्तयोर्वकार इति" उदात्तयोस्तु न्वोः परभूतो वकारो लुप्यते । स तु वै । स वै यजते । इत्यादीन्युदाहरणानि शतपथब्राह्मणस्यैव । तेनोदात्तयोरेव तुन्वोरेकीभावो नान्यत्रेति ध्येयम् ॥

(१) ११ । ४ ॥
(२) २० । ७० ॥
(३) २४ । २२ ॥
(४) २४ । ३७ ॥

कीभाव उदात्तो भवति । स चोदात्तः पुरस्तात्पश्चाद्वा भवति । इतरत्नोदात्तानुदात्तस्वरितप्रचिताः । यथा (१) उभयत्नोदात्तो भवति । ये अग्नेषु । येऽग्नेषु । (२) दूणाशः अस्त्रा । दूणाशोऽस्त्राऽसि । उदात्तपूर्वोऽनुदात्तपरो भवति यथा (३) प्र अर्प्पयतु । प्रार्प्पयतु । (४) आ इदम् । एदम् । उदात्तपरोऽनुदात्तपूर्वो यथा (५) त्वा आघ्राभ्यः । त्वाघ्राभ्यः । (६) मे अङ्गानि । मेऽङ्गानि सर्व्वतः । उदात्तपूर्वः स्वरितपरो यथा (७) सु ऊर्व्याय । नम ऽऊर्व्याय च सूर्व्याय च । अवग्रह एतदुदाहरणम् । स्वरितपूर्व उदात्तपरो यथा (८) अद्यूर्त्ये अवसे । अद्यूर्त्येऽवसे । (९) सुप्त्वा इति । सुप्त्वेति पदसंहितायामुदाहरणम् । अत्नोदात्तस्वरितसन्धौ 'विप्रतिषेध ऽउत्तरं बलवदलोपे' इति परिभाषाबलेनोदात्त एव भवति । उदात्तप्राप्तस्य प-

(१) १६ । ६१ ॥
(२) १३ । ९ ॥
(३) १ । २ ॥
(४) ४ । १ ॥
(५) १ । १८ ॥
(६) २० । ७ ॥
(७) १६ । ४५ ॥
(८) ३४ । २९ ॥
(९) १ । ३ ॥

रत्वात् । न तु स्वरितः । स्वरितशास्त्रस्य पूर्वत्वात् । उदात्तपरः प्रचितपूर्वो यथा (१) ओजिष्ठ ओजिष्ठः । इन्द्रौजिष्ठौजिष्ठः । (२) वाजजितः अद्व्रनः । वाजिनो वाजजितोऽद्व्रनः । अभ्यस्तनयोगापवादः ॥

## इवर्णमुभयतो ह्रस्वमुदात्तपूर्वमनुदात्तपरं स्वरितम् ॥ १३३ ॥

इकारो वर्णो यस्याक्षरस्येति इवर्णमक्षरम् । बहुव्रीहिरयमक्षरप्रधानः । इवर्णमक्षरं स्वरितं भवति । कथं भूत उभयतो ह्रस्वम् । उभयत इवर्णो ह्रस्वस्याक्षरस्येत्युभयतो ह्रस्वम् । उदात्तपूर्वो यस्याक्षरस्येत्युदात्तपूर्वमक्षरम् । अनुदात्तपरो यस्येत्यनुदात्तपरमक्षरम् । यथा (३) स्रुचि इव । स्रुचीव घृतम् । (४) अभि इन्धताम् । अभीन्धताम्मुखे । उभयतो ह्रस्वमिति किम् । (५) हि ईम् । ह्वीमिद्वः । उदात्त पूर्वमिति किम् । (६) इमे ऽइतीमे । (७) वीड्वायेति वि ।

(१) ८ । ३९ ॥
(२) ९ । १३ ॥
(३) २० । ७० ॥
(४) ११ । ६१ ॥
(५) १२ । ६ ॥
(६) २९ । ३४ ॥
(७) १६ । ३८ ॥

ई॒ङ्ख्या॑य । अधस्तनयोगापवादः ॥

व्वीक्षितायेति च ॥ १३४ ॥

वीक्षितायेत्ययं च एकीभावः स्वरितो भवति यथा (१) व्वीक्षि॑ताये॒ति वि । ई॒क्षि॑ताय । उदात्तपूर्वोऽनुदात्तपर एकीभावो भवति । उभयतो ह्रस्वस्तु न भवति । अतो निपात्यते ॥

उदात्ताच्चानुदात्तꣳ स्वरितम् ॥ १३५ ॥

अक्षराणामेकीभावस्य पूर्वो विधिः । इदानीमक्षराणां व्यञ्जनव्यवहितानां यः स्वरसंहितायां भवति स उच्यते । उदात्ताच्चाक्षरात्परं व्यञ्जनव्यवहितमनुदात्तमक्षरं स्वरितं भवति । यथा (२) स्वाहा॑ । (३) व्वाज॑÷ । (४) पय॑÷ । (५) नम॑÷ । (६) मो षु णः । मो षू॒ण॑÷ । (७) हि स्म । हि ष्मा॑ते ॥

---

(१) २२ । ८ ॥
(२) ४ । ५ ॥
(३) १८ । १ ॥
(४) १८ । ३५ ॥
(५) १६ । १ ॥
(६) ३ । ४५ ॥
(७) ३ । ४५ ॥

## निहितमुदात्तस्वरितपरम् ॥ १३६ ॥

निहन्यते स्वरितमुदात्तपरं स्वरितपरं च । (१) स्वाहा सोमाय । (२) नमः हिरण्यबाहवे । नमो हिरण्यबाहवे । (३) अस्त्थूरि णौ गार्हपत्यानि सन्तु । (४) भासे त्वा ज्योतिषे त्वा । (५) स्वर्ण घर्मः । (६) स्वर्ग्यायेति स्वः । ग्याय । (७) प्रसवे ऽश्विनोः । (८) अयुङ्क्ष्योऽस्माकम् । (९) परमेष्ठ्यभिधीतः । (१०) स्रुचीवेति स्रुचि । इव घृतम् । (११) दिवीवेति दिवि इव चक्षुः । एवमेतत्तैरोव्यञ्जनजात्याभिनिहितक्षैप्रप्रश्लिष्टाः स्वरिता उदात्तेऽनुदात्तीभूताः प्रदर्शिताः । अथेदानीं स्वरिते यथासम्भवं

---

(१) १० । ५ ॥
(२) १६ । १७ ॥
(३) २ । २७ ॥
(४) १३ । ३९ ॥
(५) १८ । ५० ॥
(६) ११ । २ ॥
(७) १ । १० ॥
(८) १७ । ३९ ॥
(९) ८ । ५४ ॥
(१०) २० । ७० ॥
(११) ६ । ४ ॥

प्रदर्श्यन्ते । (१) भूर्भुवः स्वः द्यौरिव । (२) सुवर्णो घर्मः स्वाहा स्वरर्णार्कः ॥

## अनवग्रहे ॥ १३७ ॥

यदेत'न्निहितमुदात्तस्वरितपर'मित्यधस्तादुक्तम् । एतदेके आचार्या अनवग्रहे मन्यन्ते । अवग्रहे तु स्वरित एव भवति । यथा (३) तनूनपादिति तनू । नपात् । (४) तनूनप्त्रऽइति तनू । नप्त्रे । एतच्च परमतम् । यत औज्जिहायनकैरिदमुक्तम् । अवग्रहो यदा नीचउच्चयोर्मध्यतः क्वचित् । ताथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनमिति । (५) ॥

## स्वरितस्य चोत्तरो देशः प्रणिहन्यते ॥ १३८ ॥

स्वरितस्य यउत्तरो भागः स निहन्यते । उदात्ते

---

(१) ३ । ५ ॥

(२) १८ । ५० । इमेऽङ्काः पदपाठाद्बोध्याः क्वचित्संहितापाठाच्चोदाहरणीया ज्ञेयाः ॥

(३) २१ । १० । अयमङ्कः पदपाठाद्बोध्यः ॥

(४) ५ । ५ । अयमपि तथा ॥

(५) अनवग्रहमेके इति 'ख' पुस्तकपाठः । एकशब्दोऽत्रान्यवचनः तेन काण्वादीनामवग्रहेऽप्यनुदात्त एव भवतीति गम्यते । याज्ञवल्क्यशिक्षावचनात्पदपाठे तु कम्पः स्वरो भवतीति ॥

स्वरिते वा परभूते एकेषामाचार्याणां मतेन । अत्र च जात्याभिनिहितचैप्रप्रश्लिष्टा एवोदाहरणम् । तथाभूतं तेषां शाखिनां हि स्मरणम् । यथा (१) स्वर्णं घर्म्मः । (२) प्रसवेऽश्विनोः । (३) परमेष्ठ्यभिधीतः । (४) स्रुचीवेति स्रुचि । इव । वाजसनेयिनान्तु अनुदात्त एव भवति । 'निहितमुदात्तस्वरितपर' मित्यनेन सूत्रेणानुदात्त एवेति ज्ञेयम् ॥

## स्वरितात्परमनुदात्तमुदात्तमयम् ॥ १३९ ॥

स्वरिताद्क्षरात्परं व्यवहितं यदनुदात्तमक्षरं तदुदात्तमयं भवति । उदात्तमयं प्रचितमेकश्रुतीति पर्यायाः (५) व्यायवस्त्य । व्यञ्जनव्यवहितं प्रायो निदर्शनं दृश्यते । यथा (६) अग्ने अङ्गिरः ॥

## अनेकमपि ॥ १४० ॥

स्वरिताद्क्षरात्परं व्यञ्जनव्यवहितं यदनुदात्तम-

(१) १८ । ४६ ॥
(२) १ । ११ ॥
(३) ८ । ५४ ॥
(४) २० । ७० ॥
(५) १ । १ ॥
(६) १२ । ८ ॥

त्वरमेकमनेकं वा तत्सर्वमनुदात्तमयं भवति । प्रचितं भवतीत्यर्थः । यथा (१) त्वाजे वाजेऽवत त्वाजिनः । (२) त्वामद्य ऽऋषऽआर्षेयऽऋषीणाम् ॥

## नोदात्तस्वरितोदयम् ॥ १४१ ॥

स्वरितादक्षरात्परस्यानुदात्तस्योदात्तमयत्वं विधायाधुना तदपवादमिति । उदात्तोदयं स्वरितोदयं च नोदात्तमयं भवति किन्त्वनुदात्तमेव भवति । उदात्तोदयं भवति यथा (३) सरस्वति तमिह धातवेऽकः । (४) त्वाजे वाजेऽवत त्वाजिनो नो धनेषु । स्वरितपरं यथा (५) रथौजाश्च सेनानीग्रामण्यौ । (६) उपयामगृहीतोऽसि सहस्याय त्वा । (७) ॥

## द्विवर्णमेकवर्णवद्धारणात्स्वरमद्ध्ये समानपदे ॥ १४२ ॥

'स्वरात्संय्योगादि' रित्यादिना प्रकरणेन यस्य द्वि-

(१) ९ । १८ ॥
(२) २१ । ६१ ॥
(३) ३८ । ५ ॥
(४) ९ । १८ ॥
(५) १५ । १५ ॥
(६) ७ । ३० ॥
(७) 'अनेकमपी'ति प्राप्तापवादभूतमिदं शास्त्रम् ॥

भाव उक्तः तस्यैतदुच्यते । वर्णौ द्विवर्णसंयोग एकवर्णवत्कर्त्तव्यः । मुखसञ्चारणाविशेषात्स्वरयोर्मध्ये वर्त्तमानमेकस्मिन्पदे भवति । एतच्चाभिधानमुच्यते इत उत्तरं द्वयोर्वर्णयोरेकीभावः प्रायशो निरूप्यते । यथा (१) व्यात्तम् । (२) कुक्कुटः । द्विवर्णस्वरमध्य इति किम् । (३) आज्ज्यम् । (४) सुज्ज्युः । अत्र जकारस्य द्विर्भवति न तु स्वरयोर्मध्ये यकारेण व्यवधानात् । समानपदग्रहणेन च संहिता लक्ष्यते । पदविच्छेदे न भवति यथा (५) इमम् । मे । इमम्मे वरुण ॥

## ऐकारौकारौ च ॥ १४३ ॥

ऐकार औकारश्च द्विवर्णौ सन्तौ एकवर्णवदुच्चारणादेकवर्णौ भवतः । एकप्रयत्ननिर्वर्त्यौ भवतः । यथा (६) कस्मै । (७) तस्मै । (८) आनन्दनन्दौ आण्डौ ॥

## डढौ ळळ्हावेकेषाम् ॥ १४४ ॥

---

(१) ३१ । २२ ॥
(२) १ । १६ ॥
(३) २ । ८ ॥
(४) १८ । ४२ ॥
(५) २१ । १ ॥
(६) १ । ६ ॥
(७) इदमपि तथा ॥
(८) २० । ९ ॥

डकारढकारौ एकेषामाचार्याणां मतेन यथासंख्यं लकारल्हकारावापद्येते । स्वरमध्ये समानपद इत्यनुवर्त्तते । यथा (१) ईळे । (२) अषाल्हा । स्वरमध्ये समानपद इति किम् । यथा (३) वनस्पते वीडुङ्गः । मीडुस्तोकाय । एतच्च परमतम् । तथा हि वक्ष्यति । (४) तस्मिंल्लल्हजिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दिनानामिति । (५) ॥

## द्विसकारं० शास्स्वरास्स्वेति ॥ १४५ ॥

द्वौ सकारौ अस्मिन्पदद्वय इति द्विसकारं पदद्वयम् । कतमत्तदित्यत आह । शास्स्व । रास्स्व । यथा (६) आ च शास्स्वा च । (७) रास्स्वेयत्सोम । शासे-रासेश्चैकः प्रकृतिसकारः प्रथमः स्वेति प्रत्ययस्य द्विती-

---

(१) ८ । ४३ ॥

(२) १३ । २६ ॥

(३) १६ । ५० ॥

(४) इदं सूत्रमष्टमाध्यायस्थं बोध्यम् ॥

(५) इदं माध्यन्दिनभिन्नानामेकेषाम्मतं, शाकलवाष्कलादीनामाचार्याणाम्मतेन तेषां 'तस्मिन्नि' त्यादिनाष्टमाध्यायस्थेन सूत्रेण निषेधात् "द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ढकारो ळकारतां ळ्हकारतामेति स एव चास्य ळकारः सन्नूष्मणा सम्प्रयुक्त" इति ऋग्वेदप्रातिशाख्ये शौनकाचार्यो निरूपितवान् तन्मतेऽवग्रहेऽपि स्वरमध्यस्थत्वाद्भवतीति बोध्यम् ॥

(६) २१ । ६१ ॥

(७) ४ । १६ ॥

यः तृतीयः क्रमजः प्राप्नोति सोऽन्यत्र निषिध्यतेऽनेन सूत्रारम्भसामर्थ्येनेति । (१) ॥

## ऋलृवर्णे रेफलकारौ संश्लिष्टा-वश्रुतिधरावेकवर्णौ ॥ १४६ ॥

ऋकारे लृकारे च यथासङ्ख्यं रेफलकारौ कण्ठ्याणुमात्रयोर्मध्येऽर्द्धमात्रिकौ संश्लिष्टौ एकीभूतौ अविद्यमानपृथक्श्रुतिधरौ एकश्रुतिभूतौ भवतः । तथा हि वैय्याकरणा "उरण्रपर" इति रेफमधिकं विदधति । यथा (२) कृत्तिवासाः । (३) कृद्धिः । (४) क्लृप्तिः । (५) ॥

## मात्राणुमात्रा वर्णापत्तीनाम् ॥ १४७ ॥

'ऋलृवर्णे रेफलकारा' वित्यनेन सूत्रेण ऋलृवर्ण-

---

(१) एतस्मिन्सूत्रे केचित् चकारमधिकं वदन्ति तदसमीचीनं दृश्यते अनार्षपाठादिति बोध्यम् ॥

(२) ३ । १ ॥

(३) १८ । ११ ॥

(४) इदमपि तथा ॥

(५) तथा च वैय्याकरणानां गुणे क्रियमाणे 'उरण्रपर' इति पृथङ् न कर्त्तव्यं तत्र रेफस्य सत्त्वात् । कृत्तिवासा इत्यत्र ककाररेफऋकाराः । क्लृप्तिरित्यत्र ककारलकारलृकाराः सन्तीति ज्ञेयम् । एवं रलयोरपि ऋलृवर्णौ कण्ठ्यार्द्धमात्रिकावश्रुतितरौ संयोगविघातमकुर्वन्तौ स्वरभक्तिसञ्ज्ञौ वेदितव्यौ । अमुमेवार्थमभिज्ञाय याज्ञवल्क्यमहर्षिणा शिक्षायां स्वरभक्तिरूपेण पञ्चधा प्रतिपादितेति बोध्यम् ॥

घोरेफलकारौ विद्येते । इत्येतत्प्रतिपादितमिदमिदानीं चिन्त्यते कियती मात्रा कस्य कियती मात्रा रेफलकारयोस्तत्प्रसङ्गेनान्याऽपि वर्णापत्तिश्चिन्त्यते । वर्णापत्तीनां त्रयः काला भवन्ति मात्रार्द्धमात्राणुमात्रोपलक्षिताः एतच्च 'विकारी यथासन्न' मित्यनेन व्यवस्थाप्यते । (१) ॥

## अनुस्वारो ह्रस्वपूर्व्वोऽप्यर्द्धमात्रा पूर्व्वा चार्द्धमात्रेति ॥ १४८ ॥

'नानुस्वार' इत्यनेन सूत्रेण संयोगपरस्यानुस्वारस्यार्द्धमात्राकाल इत्यवधारितत्वाद्यमसंयोगपरार्थं आरम्भः । अनुस्वारो ह्रस्वपूर्वोऽप्यर्द्धमात्राकालो भवति । पूर्वश्च ह्रस्वोऽर्द्धमात्राकालो भवति यथा । (२) माऽवर्ग्मठं॰सो इभुवाः' । (३) मठं॰हिष्ठो मत्सद्न्वंसः ॥

## दीर्घादर्द्धमात्रा पूर्व्वा चाप्यर्द्धा ॥ १४९ ॥

दीर्घात्स्वरात्परोऽनुस्वारोऽर्द्धमात्राकालो भवति ।

---

(१) किन्नामापत्तित्वं वर्णस्य वर्णान्तरभाव आपत्तिः तत्रोच्चारणकाले विलोमेन मात्रादयः काला भवन्ति द्विवर्णमेकवर्णवद्धारणं कण्ठ्यादिवर्णं एकवर्णवत्सन्धारयेत्संहितायां कर्त्तव्यायामिति सुज्ञैर्ज्ञेयम् ॥

(२) १ । १ ॥

(३) २७ । ४० ॥

यथा (१) माꣳसम् । (२) त्वाꣳ हि ॥

## द्वियकारम् ॥ १५० ॥

द्वौ यकारौ समाहृतौ द्वियकारम् । इत उत्तरं द्वियकारमधिकृतं वेदितव्यम् ॥

## आप्प्याय्यमानो यमो रय्यै धाय्या रूपꣳ श्रवाय्यं नृपाय्यं पौरुषेय्या हृदय्या सहरय्या निचाय्य सान्नाय्य सन्ताय्येति च ॥ १५१ ॥

एते द्वियकाराः संयोगा भवन्ति । क्रमजस्तृतीयः प्राप्नोति स निषिध्यते । यथा (३) आप्प्याय्यमानो यमः । (४) रय्यै त्वा पोषाय त्वा । (५) यजेति धाय्या रूपम् । (६) तन्नो गीर्भिः श्रवाय्यम् । (७)

(१) २० । १३ ॥
(२) ३३ । १३ ॥
(३) ८ । ५७ ॥
(४) १४ । २२ ॥
(५) १९ । २४ ॥
(६) १९ । ६४ ॥
(७) २० । ८१ ॥

वर्त्तीं रुद्द्रा नृपाय्यम् । (१) पौरुषेय्या गृभः । (२) नमो हृद्य्याय च । (३) सहरय्या निवर्त्तस्व । (४) अग्नेर्ज्योतिर्न्निचाय्यं । (५) सान्नाय्यभाजनावा अमावास्या । (६) मैवः शरसि संन्नाय्यमाने । (७) ॥

एकः ॥ १५२ ॥

इत उत्तरमेकयकाराः संयोगा भवन्तीत्यधिकृतं वेदितव्यम् । अधिकारसूत्रमेतत् ॥

ज्योतिश्च्च्यवनः श्येनः श्याम७ं श्यामाकाः श्येतो ज्ज्येष्ठो ज्ज्यो-ग्ज्याच्छ्यति ॥ १५३ ॥

एते संयोगा एकयकारा भवन्ति । अस्वरपूर्वार्थ-आरम्भः । स्वरपूर्वास्तु 'स्वरपूर्व्वाश्च शचजा' इत्यने-

(१) २१ । ४३ ॥
(२) १६ । ४४ ॥
(३) १२ । १० ॥
(४) ११ । १ ॥
(५) इदमुदाहरणं शतपथब्राह्मणस्य बोध्यम् ॥
(६) ३९ । ५ ॥
(७) अत्र 'स्वरात्सँय्योगादि'ना द्वित्वं प्राप्तमनेन निषिध्यते ॥

नैव सेत्स्यन्ति । कस्त्वाच्छ्यतीत्येतदधिकमुदाहरणं विहितम् । प्रचुराण्येवोदाहरणानि । (१) बृहज्ज्योतिः करिष्यतः । (२) दुघ्रश्च्यवनः शतनाषाट् । (३) इन्दुर्दक्षः श्येनऽऋतावा । (४) श्यामं च मे लोहं च मे । (५) श्यामाकाश्च मे । (६) श्येतो मलहविः सारस्वतः । (७) यो ह वै ज्यैष्ठ्यं च श्रैष्ठ्यं च । (८) ज्योते सन्दृशि जीव्यासम् । (९) ज्याऽइयथं सम्ने । (१०) कस्त्वाऽऽच्छ्यति । इति विहितान्युदाहरणानि । (११) ॥

जुषस्व यविष्ठ्य शोचा यविष्ठ्येति च ॥ १५४ ॥

---

(१) ११ । ३ ॥

(२) १७ । ३९ ॥

(३) १८ । ५३ ॥

(४) १८ । १३ ॥

(५) १८ । १२ ॥

(६) परकीयशास्त्रोदाहरणम् ॥

(७) इदमपि तथा ॥

(८) ३६ । १९ ॥

(९) २९ । ४० ॥

(१०) २३ । ३९ ॥

(११) अस्मिन्सूत्रीयान्तिमोदाहरणे आङो भिन्नपदस्थत्वात्सूत्रकारेण महर्षिणा कात्यायनेन छ्यतीत्येवोदाहरणं प्रकटीकृतमिति सुधीभिर्बोध्यम् ॥

एतौ द्वौ यविष्ठ्यशब्दसंयोगावेकयकारौ भवतः (१) तञ्जुषस्व यविष्ठ्य । (२) बृहच्छोचा यविष्ठ्य । एताविति किम् । (३) सूर्म्यां यविष्ठ ॥

स्येति ण्यत्वं च ॥ १५५ ॥

स्य इत्ययं पदावयवो ण्यत्वं च पदावयवभूतं गृह्यते । एतौ च संयोगावेकयकारौ भवतः । (४) कस्यं । (५) यस्यं । (६) हिरण्यम् । (७) अरण्योः कविक्रतुम् ॥

स्वरपूर्वाश्च शचजाः समानपदे द्विरुक्ताः ॥ १५६ ॥

स्वरपूर्वाः शकारचकारजकारा एकस्मिन्पदे वर्त्तमाना द्विरुक्ताः सन्त एकयकारा भवन्ति । यथा (८)

---

(१) ११ । ७३ ॥
(२) ३ । ३ ॥
(३) १७ । ७६ । इदं प्रत्युदाहरणं 'ख' पुस्तके नास्तीति ज्ञेयम् ॥
(४) २३ । ४७ ॥
(५) ७ । २९ ॥
(६) ३४ । ५२ ॥
(७) ४ । २५ ॥
(८) १८ । ७४ ॥

अश्श्याम तङ्कामम् । (१) पश्श्येम शरदः शतम् । (२) प्राच्च्यै दिशे । (३) आच्च्या जानु । (४) भुज्ज्युः सुपर्णः । स्वरपूर्वाः समान पद इति किम् । (५) तचक्षुः । (६) तज्जुषस्व । (७) ॥

व्यञ्जनपराश्च न ॥ १५७ ॥

व्यञ्जनपराश्च शचजाः चशब्दाद्व्यञ्जनपूर्वा वा द्विरुक्तास्सन्तो यकारा न भवन्ति । (८) अहंश्श्रमस्य केतवः । (९) प्रशस्त दर्शतम् । (१०) अर्च्चीऽषि । (११) कूर्चः । (१२) वज्ज्रः । (१३) वर्ज्जयन्ति ॥

---

(१) ३६ । २४ ॥

(२) २२ । २४ ॥

(३) १९ । ६२ ॥

(४) १८ । ४२ ॥

(५) ३६ । ३४ ॥

(६) ११ । ७३ ॥

(७) "दीर्घादाचार्य्याणा" मिति पाणीनीयसूत्रेण द्वित्वविधानपक्षे अप्राप्तस्य द्वित्वस्य शकारादेरेकयकारता मा भूदतो द्विरुक्तितोक्तेति विज्ञैर्विभावनीयम् ॥

(८) ८ । ४० ॥

(९) ११ । ३७ ॥

(१०) इदमुदाहरणं शाखान्तरीयम् ॥

(११) इदमपि तथा ॥

(१२) १० । २१ ॥

(१३) इदमपि शाखान्तरीणम् ॥

## कश्यपस्यानार्षेये जातूकर्ण्य-स्य ॥ १५८ ॥

कश्यपशब्दस्यार्षेयवर्जं जातूकर्ण्यस्याचार्यस्य मतेन यकारो न भवति एतदुक्तं भवति कश्यपे वाच्ये द्विरुक्तौ सत्यां यकारो न भवति । यथा (१) अपामुद्गो मासाङ्कश्यपः । अनार्षेय इति किम् । (२) त्र्यायुषं जमदग्नेः कश्यपस्य । अत्र ऋष्यभिधानं कश्यपशब्दो जमदग्न्यादिभिः सहोच्चारणात् । जातूकर्ण्यस्येति किम् । (३) कश्यपो रोहित् । 'स्वरपूर्वोश्च शचजा' इत्यस्यापवादः । (४) ॥

## उच्चैरज्जुमज्जानश्च ॥ १५९ ॥

उच्चैः रज्जुः मज्जानः इत्येतानि पदानि सयकाराणि न भवन्ति । यथा (५) उच्चैर्घोषाय । (६) वाल्वजी-

---

(१) २४ । ३७ ॥

(२) ३ । ६२ ॥

(३) २४ । ३७ ॥

(४) एवं च यथाशास्त्रं पाठव्यवस्था माध्यन्दिनानां यकारोपधः । काण्वानां केवलशकारोपध एवेति ॥

(५) १६ । १९ ॥

(६) इदं शाखान्तरीयम् ॥

भीरज्जुभिर्व्युता भवति । (१) रज्जुसन्दानमादाय । (२) रज्जुसर्ज्जम् । (३) अस्थि मज्जानम्मासरैः । इ-दमपि 'स्वरपूर्व्वाश्च यचजा' इत्यस्यापवादभूतम् ॥

## मर्त्ता व्वुरीत मर्त्तेष्वग्निः परो मर्त्तस्त्ते मर्त्त इति च ॥१६०॥

एते मर्त्तशब्दाः सयकारा न भवन्ति । यथा (४) म-र्त्तां व्वुरीत सक्ख्यम् । (५) मर्त्तेष्वग्निरम्मृतो निधा-यि । (६) परो मर्त्तैः परः श्वा । (७) यदा ते मर्त्तो ऽअनु । एत इति किम् । (८) देव ऽआ मर्त्त्येष्वा । (९) तन्मर्त्त्यस्य । (१०) सोमो देवो ऽअमर्त्त्यः ॥

## अन्तःपदेऽपञ्चमः पञ्चमेषु वि-

---

(१) इदमपि तथा ॥
(२) ३० । ७ ॥
(३) १९ । ८२ ॥
(४) ४ । ८ ॥
(५) १२ । २४ ॥
(६) २१ । ५ ॥
(७) २९ । १८ ॥
(८) ४ । १६ ॥
(९) ३१ । १७ ॥
(१०) २१ । १४ ॥

## च्छेदम् ॥ १६१ ॥

पदमध्येऽपञ्चमः स्पर्शः पञ्चमेषु स्पर्शेषु प्रत्ययेषु विच्छेदमापद्यते । विच्छेदो यम इत्यनर्थान्तरम् । रुक्क्मइत्यत्र 'स्वरात्सँय्योगादि'रित्यादिना ककारस्य द्विर्भावे कृतेऽनेन सूत्रेण द्वितीयस्य ककारस्य यम इत्ययं कार्यक्रमः क्रियते । यथा (१) यज्ज्ञः' । जकारयमौ ञकारश्च संयोगः । (२) दद्ध्न्मा । दकारधकारयमौ नकारश्च संयोगः । अन्तःपद इति किम् । (३) तन्व्यां समञ्जन् । अत्र द्वित्वाभावात्तकारमकारौ संयोगः । (४) ॥

---

(१) ८ । ४ ॥

(२) इदमुदाहरणं सूत्रोक्तम्बोध्यम् ॥

(३) २० । ४५ ॥

(४) 'स्वरात्सँय्योगादि' रित्यनेन सूत्रेण द्विर्भूतस्य द्वितीयस्य वर्णस्य यमसञ्ज्ञा भवति । रुक्क्मइत्यत्र यमककारमकाराः संयोगाः । यमाश्चत्वारः । कुंखुंगुंघुं इति । गौतमो ऽपि । अथानन्त्याश्चत्वारस्ते यमाः कुंखुंगुंघुं इत्यनन्त्यसंयोगानन्तरपूर्वोऽन्त्यान्तरे व्यवधानवर्जिते तत्र यमा वर्त्तन्ते न सन्देह इति । अनन्तसंयोगमध्ये यमः पूर्वगुण इत्यौदव्रजिरपि । नारदश्च भवेत्पूर्वामन्त्यश्च परतो यदि । तत्र मध्ये यमास्तिष्ठेत्सवर्णः पूर्ववर्णयोः । १ । वर्गान्त्याः शषसैः सार्द्धमन्तस्थैश्चापि संयुतान् । दृष्ट्वा यमा निवर्त्तन्ते आदेशिकमिवाध्वगाः । २ । अयमपि वर्णागमोविधीयनेऽस्माच्छास्त्रात् । चत्वारश्च यमा इति वर्णान्तरत्वेनोपदेशः संयोगशास्त्रात् । भगवता याज्ञवल्क्येन सप्तविधाः संयोगपिण्डा उपदिष्टाः । अयस्पिण्डो दारुपिण्ड ऊर्णापिण्डो ज्वालापिण्डो मृत्पिण्डो वायुपिण्डो वज्रापिण्डश्चेति । तल्लक्षणानि च यमान्विद्यादयस्पिण्डानन्तसान्तस्थान्दारुपिण्डकान् । अन्तस्था यमवर्जन्तु ऊर्णापिण्डं विनिर्दिशेत् । १ । अन्तस्थयमसंयोगे विशेषो नोपलभ्यते । अशरीरं यमं विद्यादन्तस्थं पिण्डनायकम् । २ । ज्वाला-

ऊष्मभ्यः पञ्चमेषु यमापत्तिर्दोषः ॥ १६२ ॥

एवमधस्तनसूत्रेण यमापत्तिं विधायाधुना यत्र यमा नेष्यन्ते तत्र दोषमाह । ऊष्मभ्यः परेषु पञ्चमेषु 'ऊष्मान्तस्थाभ्यश्च स्पर्शे' इत्यनेन सूत्रेण पञ्चमानां स्पर्शानां द्विरुक्तौ कृतायां प्रथमानां स्पर्शानां यमापत्तिः सम्भवति स चात्र दोषः । (१) ॥

---

पिण्डान्सनासिक्यान्त्सानुस्वारश्च मृण्मये । सोपध्मानान्वायुपिण्डान् जिव्हामूले तु वज्रिणः । ३ । अयस्पिण्डो यथा ८ । १० । पत्न्कीवन् । तकारवर्गसमसंख्ययमककाररूपतकारनकारेकाराः । २३ । २९ । सक्थ्ना । थकारवर्गसमसंख्यखकारप्रतिरूपथकारयमनकाराः संयोगाः । १ । ५ अग्न्म्ने इत्यत्र गकारयमगकारनकाराः । १ । १३ । पराजग्घ्नुः । गकारसमसंख्यघकारनकाराः । यञ्ज्ज्ञइत्यत्र जगञाः । अत्र चवर्गतृतीयो जकारस्तस्य संख्यासवर्णो गकारसमावेशः । वर्णक्रमे यकारः जकारपूर्ववर्गसमसंख्यसवर्णयमगकारञकाराः । अत्र जकारयमगकारञकारसंयोगे स्थानकरणपरित्यागेन वर्णान्तरोत्पत्तिः । यथा ताम्रत्रपुसंयोगे कांस्यस्योत्पत्तिरेवम् । वर्गान्त्याः शषसैरिति किम् । उदङ् घ्नक् । अन्तस्थैरिति किम् । वर्ष्मन्पृथिव्व्याः । दारुपिण्डो यथा अश्वः । सूर्य्यः । ऊर्णापिण्डो यथा अस्म्मिन् । अन्यस्म्मिन् । अमुष्म्मिन् । ज्वालापिण्डो यथा ब्रह्म्म । वन्न्हिः । गृह्णामीति । वायुपिण्डो यथा देव सवितः प्र । युञ्जानः ᳴प्रथमम् । वज्रपिण्डो यथा दिवः ककुत् । माध्यन्दिनव्यतिरिक्तानां चैतत् । तेषां जिव्हामूलीयोपध्मानीयनिषेधात् । मृत्पिण्डो यथा सँस्कर्त्ता । त्रयस्त्रिꣳशौ । उक्तं च प्रथमेन इकारेण सकारेणैव संयुतम । एतत्स्वारं समासाद्य त्रिणवत्रयस्त्रिꣳशाविति निदर्शनम् । अस्यार्थः । सानुस्वारश्च मृन्मय इत्युपदेशः । प्रथमेन इकारेण अकारेण वा युतेन सकारेण संयुतं एतत्स्वारं अनुस्वारं अनु भवतीत्यनुस्वारं स्वरान् अनुलक्ष्यीकृत्य प्राप्ताऽन्वर्थसञ्ज्ञा । स्वरानुगतोऽयोगवाहः ꣳकारविसर्गे उपलभ्य मृत्पिण्डो बोध्य इति ॥

(१) स चात्र दोषस्तम्परिजिहीर्षेत् । यथा प्रश्नः । अत्र नकारसदृशोऽनुनासिकः

**स्फोटनं च ककारवर्गे वा स्पर्शात् ॥ १६३ ॥**

स्फोटनं च स्पर्शानां दोषमापद्यते ककारवर्गे परभूते । स्फोटनं नाम पिण्डीभूतस्य संयोगस्य पृथगुच्चारणं स्फोटनाख्यो दोषो वा न दोषः । यथा (१) काण्डात्काण्डात् । (२) व्वषट्कृतम् । (३) युक्तश्लोमानम् । यथा सूत्रकारप्रस्थानं तथा स्फोटनं दोषः 'स्वरात्संयोगादि'रिति द्विरुक्तेर्विधानं न च स्फोटने सति द्विरुक्तिः सम्भवति तथा चोक्तं याज्ञवल्क्येन "यमान्विद्याद्यस्पिण्डान्त्सान्तस्थान्हाकपिण्डवत् । अन्तस्था यमवर्ज्जन्तु ऊष्मापिण्डं विनिर्दिशेत्" । यथाऽयस्पिण्डादीनामाश्लेषस्तथैतेषां व्यञ्जनानामिति श्लोकार्थः । (४) ॥

---

परसवर्णश्च तदुभयं ऊष्मणामनुनासिके परे सति क्रियते चेत्स्थानकरणाद्यसाम्येऽपि कृतं स्यादिति दोषविशेषः । इतरेषां तु स्पर्शत्वस्पृष्टसामान्याद्भवतीत्यदोषः । ऊष्मभ्य इति किम् । अन्तस्थाभ्यो दोषो मा भूत् । प्रति दीव्नं । विविल्मने । इत्यत्र वळयोः स्पृष्टत्वाभावेऽपि परेण समानस्थानत्वमन्तरङ्गमस्ति तेनात्र यमापत्तिर्न दोषः सत्यप्यत्रापञ्चमत्वान्न यमव्यवहारः किन्तु क्रमज एवेति बोध्यम् ॥

(१) १३ । २० ॥

(२) ७ । २६ ॥

(३) १९ । ८५ ॥

(४) अत्र यम इव स्फोटनेऽपि स्वरात्संयोगादिरित्यादिना सूत्रेण द्वित्वं न प्रवर्त्तत इति भावार्थः ॥

## स्वरात्स्वरे परे समानपदे जोय-न्नतु ऋकारे ॥ १६४ ॥

वाशब्दो विकल्पार्थः पूर्वसूत्रादिहानुवर्त्तते । स्वरात्परो जकारो वा यकारमापद्यते । स्वरे परभूते समानपदे न तु ऋकारे परे । यथा (१) अजो ह्यग्ने-रजनिष्ट । स्वरादिति किम् । (२) अब्जा गोजाः । स्वरइति किम् । (३) भुज्युः । (४) आज्यम् । समानपद इति किम् । (५) तदिन्द्रेण जयत । नत्वृकार इति किम् । (६) विजृम्भमाणाय । (७) ॥

## ख्यातेः खयौ कशौ गार्ग्यः सकृख्यो-कृख्यमुकख्यवर्ज्जम् ॥ १६५ ॥

ख्या प्रकथनइत्यस्य धातोः खकारयकारौ संयो-

---

(१) १३ । ५१ ॥
(२) १० । २४ ॥
(३) १८ । ४२ ॥
(४) २ । ८ ॥
(५) १७ । ३४ ॥
(६) २२ । ७ ॥
(७) अस्मिन्सूत्रे पूर्वसूत्राद्वापदमनुवर्त्य रूपद्वयं भवति प्रकृतिरूपं संहिताग्रन्थाद्बोध्यं, विकृतिरूपं यथा अयोह्यग्नेः । अजीजनो हि । इदमप्युदाहरणान्तरं बोध्यम् ॥

गमाङ्गः केचित् । यथा (१) विक्ख्याय चक्षुषा । (२) आक्ख्यातम् । ककारखकारौ संयोगार्थं गार्ग्य आह । विक्शाय चक्षुषा । आक्शातम् । एतानि पदानि वर्जयित्वा (३) सक्ख्यम् । (४) उक्ख्यम् । (५) सुक्ख्यम् । अधस्तनयोगे जकारस्य यकारापत्तिरुक्ता या चास्मिन्योगे ख्यातेः क्शापत्तिरुक्ता एते चरकाणां इतरेषां माध्यन्दिनानां न भवत इति । (६) ॥

# त्रिपदाद्यावर्त्तमाने सङ्क्रमः॥ १६६ ॥

'सꣳहितायाम्' मित्यत आरभ्य संहिताया लक्षणं विधायाधुना पदसंहितालक्षणं विधित्सयेदमाह । त्रिपदप्रभृत्यावर्त्तमाने ग्रन्थे सङ्क्रमो भवति । आवर्त्तमानानि पदानि अतिक्रम्यानावर्त्तमानेन पदेन सह सन्धिर्भवतीत्यर्थः । यथा (७) व्ययम् । स्याम । पतयः । रयीणाम् । स्वाहा । रुद्र । यत् । (८) तस्मै । ते ।

---

(१) ११ । २० ॥

(२) इदं लौकिकोदाहरणं बोध्यम् ॥

(३) समानं ख्यायत इति सख्यम् । न तु सख्युरिदमिति ॥

(४) उत्कर्षेणाख्यायत इति । न तूखायां भव इति ॥

(५) मुदा ख्यायत इति मुख्यः । न तु मुखे भवो मुख्य इति यकारस्यार्थोऽभिप्रेतः ॥

(६) क्शापत्तिस्तु चरकाणां शाखिनां न तु माध्यन्दिनीयशाखिनां भवतीति दिक् ॥

(७) इमान्युदाहरणानि पदपाठस्थानि दशमाध्यायोक्तानि ॥

(८) इदं पदद्वयं पदपाठस्थं ज्ञेयम् ॥

इन्द्रो । हविषा । विधेम । (१) बर्हिषदः । पितरः । (२) इन्द्र । आ । याहि । चित्रभानो । सुताः । इमे । त्वायवः । अण्वीभिः । तना । पूतासः । धिया । इषितः । अयं तावदुत्सर्गः ॥

## द्विपदैकपदान्न्यप्यनुवाके ॥ १६७॥

द्वे पदे समाहृते द्विपदं एकं च तत्पदं च एकपदं द्विपदानि च एकपदानि च बहुवचनोपदेशात् त्रिवर्त्तमानानि सङ्क्रम्यन्ते । अतिक्रम्यन्त इत्यर्थः । त्रिरावृत्त इति हि वक्ष्यति । (३) वाजः । च । मे । प्रसवः । प्रयतिः । एकपदं यथा (४) मा । छन्दः । प्रमा । प्रति मा । अनुवाक इति किम् । (५) वसोः । पवित्रम् । असि । द्यौः । पृथिवी । (६) कुक्कुटः । असि । त्रिरावृत्त इति किम् । (७) व्रतम् । कृणुत ।

---

(१) इदमपि तथा ॥
(२) २० । तथा ॥
(३) इमानि पदपाठस्य क्रमसन्धानार्थमुदाहरणानि प्रदर्श्यन्ते । १८ । १ ॥
(४) १४ । १४ ॥
(५) १ । २ ॥
(६) १ । १६ ॥
(७) ४ । ११ ॥

व्रतम् । कृणुत । (१) सोमः । पवते । सोमः । पवते । (२) इषे । त्वा । ऊर्ज्जे । त्वा ॥

## अनन्तरे ॥ १६९ ॥

उभयोरपि योगयोरयं योगविशेषः । 'त्रिपदाद्या वर्त्तमान' इति यदुक्तं तदनन्तरे पुनरुक्तो भवति । आनन्तर्य्यं चार्थकृतं शब्दकृतं च गृह्यते । यत्रानन्तरोऽर्थो व्यवहितो वा बुद्धौ विपरिवर्त्तते तदर्थकृतमानन्तर्य्यम् । यथा (३) गन्धर्व्वः । त्वा । विश्वावसुः । परि । दधातु । अरिष्टै । यजमानस्य । परिधिः । असि । अग्निः । इडः । ईडितः । इन्द्रस्य । बाहुः । असि । दक्षिणः । मित्रावरुणौ । त्वा । अनन्तरेऽर्थे एतदुदाहरणम् । व्यवहिते तु । यथा (४) मधुः । च । माधवः । च । वासन्तिकौ । ऋतू । (५) शुक्रः । शुचिः । ग्रैष्मौ । स्वयमातृणाद्यासु एवं स्वमहर्षिणा प्रथमादिचितिषु ऋतव्योपधाने दृष्टासु क-

---

(१) ७ । २० ॥
(२) १ । १ ॥
(३) २ । ३ ॥
(४) १३ । २३ ॥
(५) १४ । ५ ॥

लिङ्कासु अर्थकृतमानन्तर्यं द्रष्टव्यम् । शब्दकृतं तु यथा (१) हविःकृत् । आ । इहि । कुक्कुटः । असि 'द्विपदैकपदान्यप्यनुवाके' इत्यत्रार्थानन्तर्यमुच्यते । यथा (२) कः । त्वा । युनक्ति । सः । कस्मै । तस्मै । (३) त्वम् । अग्ने । द्युभिः । आशु शुक्षणिः । (४) याः । ओषधीः । पूर्वाः । जाताः अत्र या इत्येतदोषधिविषयं पदम् । याः फलिनीरित्येतदपि ओषधिविषयं तदर्थव्यवधानान्न लुप्यते । अतो याः । फलिनीः । अफलाः इत्यत्र सन्निधानाल्लुप्यते । यद्येवं अपुष्पाः । याः । पुष्पिणीः । इत्यत्र कस्माद्या इत्येतत्पदं न लुप्यते शृणु । (५) याः । फलिनीः । याः । अफलाः । याः । अपुष्पाः । याः । च । पुष्पिणीः । एवं चत्वारोऽत्र याःशब्दा अर्थदृष्टा भवन्ति । तत्र प्रथमस्य द्वितीयेन सम्बन्धः । तृतीयस्य चतुर्थेन सम्बन्धः । तत्र तृतीयं या इत्येतत्पदं न विद्यत इत्येतस्य ख्यापनार्थं चतुर्थं न लुप्यते या इत्येतत्पदम् । शब्दानन्तर्यं तु यथा (६)

---

(१) १ । १४ । १५ ॥
(२) १ । ६ ॥
(३) ११ । २४ ॥
(४) १२ । ६६ ॥
(५) १२ । ८० ॥
(६) ३८ । २ ॥

अश्विभ्यां पिन्वस्व सरस्वत्यै । इन्द्राय । स्वाहा । इन्द्रवत् । यः । ते । (१) दिवः । सᳫस्पृशः । पाहि । मधु । गर्भः । देवानाम् । (२) ॥

## अपराङ्गं ॥ १७० ॥

अपरस्य अन्यस्याङ्गभूते पुनरुक्ते सङ्क्रमो भवति । यथा (३) स्वाहा । यज्ञम् । मनसः । उरोः । अन्तरिक्षात् । द्यावापृथिवीभ्याम् । वातात् । आ । रभे । अत्र स्वाहाकारः अपराङ्गम् । अपराङ्गत्वाल्लोपः । अपराङ्ग इति किम् । (४) स्वाहा । आकूत्यै । प्रयुजे । अयं च स्वाहाकारः अपराङ्गं न भवति केवलत्वात् ॥

## अस्वरविकारे ॥ १७१ ॥

न विद्यते स्वरविकारो यस्मिन्पुनरुक्ते तदस्वरवि-

---

(१) ३७ । ६ । ७ ॥

(२) इदमपि छन्दसि प्रायिकं लक्ष्यानुरोधेन लक्षणानुवर्त्तनं यथा वसोः । पवित्रम् । असि । द्यौः । असि । वसोः । पवित्रम् । असि । शतधारम् । इत्यादीनि पदानि पदपाठे कण्वशाखीया न सङ्क्रमयन्ति अतः कारणात्परम्परया पाठः । उक्तं च पुराणसमुच्चये । सृष्ट्यर्थं ब्रह्मणे प्रादाद्वेदान्मोहनिवृत्तये । आदिनारायणो यत्नान्निर्दयास्तत्त्वदर्शिनः ॥ १ ॥ पुराणेषु स्फुटं ह्येतदुक्तवान्बादरायणः । विवेकयन्पाणिनिश्च बहुलं सूत्रयत्यलम् ॥ २ ॥ इति ॥

(३) ४ । ६ ॥

(४) ४ । ७ ॥

कारं पुनरुक्तं तस्मिन्पुनरुक्ते सङ्क्रमो भवति । यथा (१) तेजः । असि । शुक्रम् । अमृतम् । धाम । नाम । अस्वरविकार इति किम् । (२) सुक्ष्मा । च । असि । शिवा । च । असि । स्योना । (३) देवाः । यज्ञम् । अतन्वत । भेषजम् । (४) यत् । पुरुषेण । हविषा । देवाः । यज्ञम् । अतन्वत ॥

## अलिङ्गविकारे ॥ १७२ ॥

लिङ्गविकारो न विद्यते यस्मिन्पुनरुक्ते तदतिक्रम्यते । यथा (५) अग्ने । भागः । असि । दीक्षायाः । आधिपत्यम् । ब्रह्म । स्पृतम् । त्रिवृत् । स्तोमः । इन्द्रस्य । विष्णोः । क्षत्रम् । पञ्चदशः । अत्र स्पृतशब्दो नपुंसकविषयो नोऽतिक्रम्यते । अलिङ्गविकार इति किम् । (६) आदित्यानाम् । मरुताम् । गर्भाः । स्पृताः । देवस्य । सवितुः । बृहस्पतेः । समीचोः । दिशः । स्पृताः । एकत्र शब्दः पुरुषविषयः । एक-

(१) १ । ३१ ॥
(२) १ । २७ ॥
(३) २० । १० ॥
(४) ३० । १३ ॥
(५) १४ । १९ ॥
(६) १४ । २० ॥

अश्विभ्यामिन्वस्व सरस्वत्यै । इन्द्राय । स्वाहा । इन्द्रवत् । यः । ते । (१) दिवः । सधस्थः । पाहि । मधु । गर्भः । देवानाम् । (२) ॥

## अपराङ्गं ॥ १७० ॥

अपरस्य अन्यस्याङ्गभूते पुनरुक्ते सङ्क्रमो भवति । यथा (३) स्वाहा । यज्ञम् । मनसः । उरोः । अन्तरिक्षात् । द्यावापृथिवीभ्याम् । वातात् । आ । रभे । अत्र स्वाहाकारः अपराङ्गम् । अपराङ्गत्वाल्लोपः । अपराङ्गइति किम् । (४) स्वाहा । आकूत्यै । प्रयुजे । अयं च स्वाहाकारः अपराङ्गं न भवति केवलत्वात् ॥

## अस्वरविकारे ॥ १७१ ॥

न विद्यते स्वरविकारो यस्मिन्पुनरुक्ते तदस्वरवि-

---

(१) ३७ । ६ । ७ ॥

(२) इदमपि छन्दसि प्रायिकं लक्ष्यानुरोधेन लक्षणानुवर्त्तनं यथा वसोः । पवित्रम् । असि । द्यौः । असि । वसोः । पवित्रम् । असि । शतधारम् । इत्यादीनि पदानि पदपाठे कण्वशाखीया न सङ्क्रमयन्ति अतः कारणात्परम्परया पाठः । उक्तं च पुराणसमुच्चये । सृष्ट्यर्थं ब्रह्मणे प्रादाद्वेदान्मोहनिवृत्तये । आदिनारायणो यत्नान्निर्दयास्तत्त्वदर्शिनः ॥ १ ॥ पुराणेषु स्फुटं ह्येतदुक्तवान्बादरायणः । विवेकयन्पाणिनिश्च बहुलं सूत्रयत्यलम ॥ २ ॥ इति ॥

(३) ४ । ६ ॥

(४) ४ । ७ ॥

कारं पुनरुक्तं तस्मिन्पुनरुक्ते सङ्क्रमो भवति । यथा (१) तेजः । असि । शुक्रम् । अमृतम् । धाम । नाम । अस्वरविकार इति किम् । (२) सुक्ष्मा । च । असि । शिवा । च । असि । स्योना । (३) देवाः । यज्ञम् । अतन्वत । भेषजम् । (४) यत् । पुरुषेण । हविषा । देवाः । यज्ञम् । अतन्वत ॥

## अलिङ्गविकारे ॥ १७२ ॥

लिङ्गविकारो न विद्यते यस्मिन्पुनरुक्ते तदतिक्रम्यते । यथा (५) अग्नेः । भागः । असि । दीक्षायाः । आधिपत्यम् । ब्रह्म । स्पृतम् । त्रिवृत् । स्तोमः । इन्द्रस्य । विष्णोः । क्षत्रम् । पञ्चदशः । अत्र स्पृतशब्दो नपुंसकविषयो नोऽतिक्रम्यते । अलिङ्गविकार इति किम् । (६) आदित्यानाम् । मरुताम् । गर्भाः । स्पृताः । देवस्य । सवितुः । बृहस्पतेः । समीचोः । दिशः । स्पृताः । एकत्र शब्दः पुरुषविषयः । एक-

(१) १ । ३१ ॥
(२) १ । २७ ॥
(३) २० । १० ॥
(४) ३० । १३ ॥
(५) १४ । १९ ॥
(६) १४ । २० ॥

न स्त्रीविषयो नो गृह्यतेऽपि न लुप्यते । (१) सम्। ते । पर्याꣳसि । सम् । ऊ । यन्तु । वाजाः । दृष्टस्याꣳनि । अत्र त्रयाणां सम्शब्दानां मध्ये प्रथमो नपुंसकविषयो द्वितीयः पुरुषविषयोऽतो गृह्यते । तृतीयो नपुंसकविषय एव अतो लिङ्गस्याभेदादतिक्रम्यते ॥

## असमाने ॥ १७३ ॥

असमानविषये आवर्त्तमाने पुनरुक्ते संक्रमो भवति । यथा (२) आयुः । यज्ञेन । कल्पताम् । प्राणः । चक्षुः । श्रोत्रम् । पृष्ठम् । अत्र आयुरादयो यज्ञक्लृप्तेरसमानाः । असमान इति किम् । (३) यज्ञो यज्ञेन कल्पताम् । अत्र यज्ञो यज्ञेनेति । यज्ञक्लृप्तेः समानोऽतो गृह्यते ॥

## त्रिरावृत्ते ॥ १७४ ॥

त्रिरावृत्ते पुनरुक्ते संक्रमो भवति । 'द्विपदैकपदान्यप्यनुवाके' इत्यस्यायं शेषः यथा (४) इषे । ऊर्ज्जे । रय्यै । पोषाय । आयुः । त्रिवृत् । त्रिरावृत्त इति कि-

(१) १२ । १०३ ॥

(२) ९ । २० ॥

(३) इयमपि तथा ॥

(४) १४ । १७ ॥

म् । (१) इषे । त्वा । ऊर्ज्जे । त्वा । वायवः ॥

## गूढे ॥ १७५ ॥

गूढेऽपि त्रिरावृत्ते सङ्क्रमो भवति । गूढं नाम यत्र तृतीयपदस्यावृत्तिरनुषङ्गापेक्षितत्वात्पदस्याधस्तनपदानुषङ्गेण भवति । यथा (२) इयम् । ते । राट् । यन्ता । असि । यमनः । ध्रुवः । धरुणः । अत्रासिशब्दो यन्ता ध्रुव इत्यनयोः पदयोः सँल्लग्नः पठ्यते । यमनधरुणपदयोस्तु अनुषज्यते । अनुषङ्गापेक्षिणौ हि तौ । अतः स एवं गूढस्त्रिरावर्त्तमानः सन्त्या द्विरावृत्तौ व्यतिक्रम्यते । गूढ इति किम् । (३) इषे । त्वा । ऊर्ज्जे । त्वा ॥

## पदसमूहे ॥ १७६ ॥

पदसमूहः पदसङ्घातः । यत्रैकादि पदं बहु कृत्वा आवर्त्तते स पदसमूहोऽत्राभिप्रेतः । 'त्रिपदाद्यावर्त्तमान' इत्यनेनैवेतरस्य गतार्थत्वात् । यथा (४) शतरुद्रियाध्याये । नमो हिरण्यबाहवे सेनान्ये ।

(१) १ । १ ॥ इमान्युदाहरणानि पदपाठाद्बोध्यानि ॥

(२) ९ । २२ ॥

(३) १ । १ ॥

(४) १६ । १७ ॥

(१) व्राजः । च । मे । प्रसवः । प्रयतिः । ननु स्वरिति स्वः । च । मे । यज्ञेन । कल्पताम् । इत्यत्र कस्मान्न लोपो भवति । शृणु । अविकारार्थं च पुनरुक्तस्य ग्रहणमित्युपरिष्टाद्वक्ष्यति । तेन स्वरेणेह पुनरुक्तं गृह्यते । एवमर्थविशेषात्पुनरुक्तस्य ग्रहणं भवति । अर्थसामान्यात्पुनरुक्तस्यातिक्रमः । तथा चोक्तम् । द्रव्यदेवतार्थलिङ्गवचनस्वरकर्तृभेदैः पुनरुक्तस्य ग्रहणं भवति । आह च । पुनरुक्तानि लुप्यन्ते पदानीत्याह शाकलः । अलोप इति गार्ग्यस्य काण्वस्यार्थवशादिति । (२) ॥

सरꣳहितायाम् ॥ १७८ ॥

आर्ष्यां च संहितायां पुनरुक्ते आवर्त्तमाने सङ्क्रमो भवति । यथा (३) लोकन्ता ऽइन्द्रम् । (४) हिरण्यगर्भ ऽइत्येषः (५) मा मा हिꣳसीदित्येषा (६) यु-

(१) १८ । १ ॥

(२) एकादिपदं समूह्यते समुदाह्रियते बहूनि पदानि वा कृत्वाऽऽवर्त्यते स पदसमूहइत्युच्यते तत्र सङ्क्रमो भवति । इदं सूत्रं 'द्विपदैकपदान्यप्यनुवाक' इत्यस्यापवादभूतम् । एवमर्थविशेषसामान्याभ्यां पुनरुक्तस्य संक्रमासंक्रमौ ज्ञेयाविति ॥

(३) १२ । ५४ । लोकं पृण । १२ । ५५ । ता ऽअस्य १२ । ५६ । इन्द्रꣳविश्वाः ॥

(४) ३२ । ३ । २४ । १० । ११ । १२ । १३ ॥

(५) १२ । १०२ ॥

(६) ८ । ३६ । ३७ ॥

स्मान्न जात ऽइत्येषः । एवं च कृत्वा ब्रह्मयज्ञसंहितायां गलिता ऋचोऽध्येतव्याः । ब्रह्मयज्ञसंहितायाः परिपूर्णतायै इति बोध्यम् । (१) ॥

## अवसानार्थं पुनर्ग्रहणम् ॥ १७८ ॥

एवमधस्तादर्थनिबन्धनं पुनरुक्तस्य ग्रहणं चोक्त्वेदानीं संहितार्थमाह । संहिताऽवसानार्थं च न पुनरुक्तस्य ग्रहणं भवति । यथा (२) आकूत्यै । प्रयुजे । अग्नये । स्वाहा । मेधायै । मनसे । दीक्षायै । तपसे । सरस्वत्यै । पूष्णे । अग्नये । स्वाहा । अग्नये स्वाहेत्येतदत्र पुनरुक्तमवसानार्थं गृह्यते । बृहस्पतये । हविषा । विधेम । स्वाहा । नात्रावसानादन्यप्रयोजनमस्तीति ॥

## अविकारार्थं च ॥ १७९ ॥

पदाविकारज्ञापनार्थं च पुनरुक्तं गृह्यते । यथा (३) इषाय । ऊर्ज्जाय । स्वरिति स्वः । स्वाहा । मूर्द्धर्न्ने व्यश्नुविने । अत्र स्वरित्येतस्य पदस्य परतो यत्स्वा-

(१) एवं 'तम्प्रत्क्नथायँव्वेन' इत्यादिषु सर्वानुक्रमोक्तसूत्रात "एताः प्रतीकचोदिता ब्रह्मयज्ञेऽध्येतव्याः सर्वत्रैव कात्यायनमहर्षिणा प्रतिपादितमिति ॥

(२) इमान्यप्युदाहरणानि पदपाठादवगन्तव्यानि ॥

(३) २२ । २७ ॥

हाकारस्य ग्रहणं तदविकारार्थम् । यदिह स्वाहाकारो लुप्यते । तदा क्रमसंहितायामप्यस्य पदस्य विकारः स्यात् । (१) स्वर्मूर्द्धन्वे । मूर्द्धन्वे व्व्यश्नुविने । तथा च सति इष्टरेफत्वादस्य पदस्य क्रमसंहितायां वेष्टको न स्यात् । अतः पदक्रमसंहिताया विकारार्थं स्वाहेत्यस्य पदस्य ग्रहणम् । (२) ॥

## उत्सर्गश्च ॥ १८० ॥

उत्सर्गः परित्यागः । परित्यागश्चाधस्तनसूत्रविहितस्य लक्षणस्य भवति । केषां चिदाचार्याणां मतेन । यथा (३) स्वर्मूर्द्धन्वे । मूर्द्धन्वे व्व्यश्नुविने । एवं च कृत्वा विकल्पेनैतल्लक्षणम् । (४) ॥

## क्रमः स्मृतिप्रयोजनः ॥ १८० ॥

क्रम इत्ययमधिकारश्चाऽध्यायपरिसमाप्तेः । संहिताध्ययने प्रयोजनं प्रसिद्धम् । यत्त्वे स्वाध्याये च संहि-

---

(१) इदमपि तथा ॥

(२) यथा माध्यन्दिनशाखिनामुदाहरणम् । अत्र स्वरित्येतस्य परतो यत्स्वाहाकारग्रहणं तत्पदाधिकारार्थं बोध्यम् । यदेह स्वाहाकारशब्दस्य लोपः स्यात्तदा क्रमसंहिताया वाचको न स्यात् । अतः कारणात् क्रमसंहिताधिकारसंरक्षणार्थं स्वाहेत्यस्य पदस्य ग्रहणे विकारः स्यात् । इत्यवगन्तव्यं बुधैः ॥

(३) पूर्वोक्तमुदाहरणम् ॥

(४) पूर्वोक्तलक्षणांशस्य परित्यागः काण्वादिशाखिनां मतेन अन्येषां शाखिनां मतेन यथाशास्त्रं पाठो बोध्यः ॥

तायाः सम्बन्धात्पदाध्ययने संहितार्थपरिज्ञानं प्रयोजनमिति गम्यते। उक्तं च भाष्यकारेण "पदानि स्वं स्वमर्थङ्गमयन्तीति"। पदानि स्वं स्वमर्थमभिधाय चित्तवृत्तिव्यापाराद्वाक्यार्थमवगमयन्ति। अथेदानीं पदार्था अवगताः वाक्यार्थमवगमयन्तीति पदपूर्वकं पदार्थपरिज्ञानं पदार्थपरिज्ञानपूर्वकवाक्यार्थपरिज्ञानं दर्शयति। एवं संहितापाठे पदपाठे च प्रसिद्धं प्रयोजनम्। न तथा क्रमपाठ इत्यत आह। स्मृतिः प्रयोजन इति। स्मृतिः प्रयोजनमस्येति स्मृतिप्रयोजनः। संहिताविषयं दृढस्मरणं करोति पदविषयं च। प्रयोजनदिगियं सूत्रकृता प्रदर्शिता। प्रयोजनानि तु अस्यान्यानि बहूनि यथा द्वयोर्द्वयोः पदयोर्वर्णसंहितोदात्तादिस्वरसंहिता च क्रमं मुक्त्वा नान्येन ज्ञायते। संहितावसानं च। उत्तमं चैतत्। पदकारणं क्रमः, क्रमणं क्रमः, सम्मानं च शिष्टानां मध्ये क्रमं करोति। व्याकरणस्मृतिश्च क्रमाध्यायिनि प्रत्ययं विदधाति। तदधीते तद्वेद इत्युपक्रम्य "क्रमादिभ्यो वुन्निति" अत्र क्रममधीते क्रमकः। पदमधीते पदकः। सिद्धक्रमस्याध्ययनं दर्शयति। अतो हि क्रमो बहुप्रयोजनवान् (१)॥

---

(१) एवं क्रमपाठस्य प्रयोजनं वर्णयित्वा त्रयाणामार्षीसंहितापदसंहिताक्रमसंहितानां पठने यत्फलं भवति तन्महर्षिणा कात्यायनगुरुणा योगियाज्ञवल्क्येन स्वशिक्षायां प्रतिपादितं यथा "संहिता नयते सूर्यं पदानि शशिनः पदम्। क्रमोऽपि नयते सू-

द्वे द्वे पदे सन्दधात्युत्तरेणोत्तरमाऽव-
सानादपृक्क्तवर्ज्जम् ॥१८२॥

द्वे द्वे पदे सन्दधाति कथं सन्दधाति उत्तरेणोत्तरं पदं सन्दधाति । ततस्तेनान्यदुत्तरमेवमवसानं यावत् अपृक्तं वर्ज्जयित्वा । अपृक्ते वक्ष्यति । यथा (१) उपत्त्वा । त्वाऽग्ने । अग्ने हविष्मतीः । हविष्मतीर्घृताचीः । घृताचीर्यन्तु । यन्तु हर्य्यत । हर्य्यतेति हर्य्यत । अपृक्तमिति किम् । (२) सोमाय हꣳसान् । हꣳसानालभते । आलभते । (३) कर्म्मणऽआप्यायध्वम् । आप्यायध्वम् । प्यायध्वमघ्न्याः । (४) उदुत्त्वा । ऊँऽइत्यूँ । त्वा । विश्वे । (५) उदुत्यम् । ऊँऽइत्यूँ । त्यम् । जातवेदसम् । (६) तमुत्त्वा । ऊँऽइत्यूँ । त्वा । दध्य-

---

दमँस्यत्तत्पदमनामय'' मिति । सन्धीयन्ते पदानि यस्यां सा संहिता तल्लक्षणं प्रथमाध्याये 'वर्णानामेकप्राणयोगः संहितेत्य'नेनसूत्रेणोक्तं सा पादसंहिता ऋक्षु भवति यजुष्ष्वपि भवति । एवं पदसंहिता लक्षणं 'पदाविच्छेदोऽसंꣳहित' इत्यनेन शास्त्रेण च प्रतिपादितमिदानीं वक्ष्यमाणसूत्रेण द्विपदक्रमसंहितोच्यते ॥

(१) ३ । ४ ॥
(२) २४ । २२ ॥
(३) १ । १ ॥
(४) १२ । २७ ॥
(५) ७ । ४१ ॥
(६) ११ । ३० ॥

ङ् । (१) ॥

## अपृक्तमध्यानि त्रीणि स त्रिक्रमः ॥ १८२ ॥

अपृक्ता आकार उकारश्च अपृक्ता एषां मध्ये इत्यपृक्तमध्यानि तद्गुणसंविज्ञानो बहुव्रीहिः । लम्बकर्णवत् । त्रीणिमध्यानि स त्रिक्रमो भवति । यथा (२) सोमाय हꣳसान् । हꣳ सानालभते । आलभते । (३) कर्मणऽआ प्यायध्वम् । आ प्यायध्वम् । (४) उदुत्त्वा । ऊँ ऽइत्यू । त्वा विश्वे । (५) तमु त्वा । ऊँ इत्यू । त्वा दध्यङ् ॥

## पुनराकारेणोत्तरम् ॥ १८३ ॥

आकार उकारश्चापृक्तौ तयोरुकारस्य प्रगृह्यत्वादुपरिष्टाद्विष्टकं वक्ष्यति । आकारस्य यद्वक्तव्यं तदाह त्रिक्रमं कृत्वा पुनराकारेणोत्तरं पदं सन्दधाति । य-

---

(१) एतदुत्तरं आ उ इत्यपृक्तवर्णमध्यकं पदत्रयात्मकं वक्ष्यमाणसूत्रोदाहरणं चोच्यते ॥

(२) २४ । २२ ॥

(३) १ । १ ॥

(४) ११ । २७ ॥

(५) ११ । २९ ॥

था (१) सोमाय हꣳसान् । हꣳसानालभते । आ लभते । (२) कर्माण ऽआ प्यायध्वम् । आ प्यायध्वम् । (३) ॥

## मोषूणाभीषुणौ च ॥१८४॥

एतौ विक्रमौ भवतः । यथा (४) मोषूणः । मो ऽइति मो । सु नः । नऽइन्द्र । (५) अभी षुणः । सु नः । नः सखीनाम् ॥

## चत्वार्य्यपृक्तपूर्व्वे नकारपरे सौ ॥ १८५ ॥

चत्वारि पदानि सन्दधाति स्वित्येतस्मिन्पदेऽपृक्तपूर्वे नकारपरे च । यथा (६) ऊर्ध्व ऽऊषुणः । ऊँ ऽ-

---

(१) पूर्वोक्तप्रथमाङ्कस्य पदोदाहरणं द्रष्टव्यम् ॥

(२) तथैव द्वितीयाङ्कोदाहरणम् ॥

(३) आकारेणेति पदं कथं सूत्रे उपात्तं नो चेत्तदा 'उदुत्वा' इत्यस्मिन्नुदाहरणे पुनः पदपाठीयवेष्टनात्मकस्यापृक्तसञ्ज्ञकस्य त्वेति पदेन सहोच्चारणं भविष्यत्यतः पदपाठस्यान्यथोच्चारणे दोषो मा भूदतो ग्रहणं सूत्रे कृतमिति ॥

(४) ३ । ४५ ॥

(५) २७ । ४० ॥

(६) ११ । ३९ ॥

इत्यूँ। सु नः। न ऽऊतये। (१) एतादृग्वासऽऊषुणः। ऊँ ऽइत्यूँ। सु नः। नः सदृग्वासः। (२) गोमदूषुणासत्या। गोमदिति गो। मत्। ऊँ ऽइत्यूँ। सुनासत्या। नासत्याश्विनावत्॥

## मकारपरे चैके ॥१८६॥

सु इत्येतस्मिन् पदे अष्टक्तपूर्व्वे मकारपरे च एके आचार्य्याश्चत्वारि पदानि सन्दधति। यथा (३) मह्यीमूषु मातरम्। ऊँ ऽइत्यूँ। सु मातरम्। मातरꣳ सुव्रतानाम्। मकारपर इति जघन्यश्चायमेकीयः पक्षः। यतश्चतुःक्रमेषु सर्वेषु पूर्वो भावी उत्तरं सुपदं ततो नकारादिपदम्। यथा (४) गोमत्। ऊ। सु। नासत्येति। तत्र उकारो भावी सुपदस्य षत्वे निमित्तम्। सुपदे षत्वं नकारादौ पदे णत्वे निमित्तम्। तत्र यदि चतुःक्रमो न स्यात्तर्हि णत्वं विहन्येत। ततस्तु आर्षी संहिता न स्यात्। चतुःक्रमे तु सा स्मृता भवति। न च कश्चिदिह सुशब्दं विना मकारादेः पदस्य विकारः

---

(१) १७। ७७॥

(२) २०। ७२॥

(३) २१। ४॥

(४) पूर्वोक्तद्वादशाङ्गपदपाठोदाहरणं ज्ञेयम्॥

सम्भवति । अतस्त्रिक्रम एवायम् । (१) मह्वीमूषु ऊँ ऽइत्यूँ । सु मातरम् । एवं त्रिक्रमेष्वपि प्रयोजनान्यन्वेष्टव्यानि । (२) ॥

## पुनः सुपदेनोत्तरम् ॥१८७॥

यत्र सुपदनिमित्तस्त्रिक्रमश्चतुःक्रमो वा कृतस्तत्र पुनः सुपदेनोत्तरं पदं सन्दधाति । यथा (३) मो षू णः । मो ऽइति मो । सुनः । (४) अभीषुणः । नः सखीनाम् । (५) गोमदूषुणासत्या । गोमदिति गो । मत् । ऊँऽइत्यूँ । सु नासत्या ॥

## पूर्व्वस्योत्तरसꣳहितस्य स्थितोपस्थितमवगृह्यस्य ॥ १८८॥

एवं द्वित्रिक्रमाद्यनन्तरं परिशिष्टं क्रमविधिमाह । पूर्व्वस्योत्तरपदस्य त्रिपदचतुष्क्रमसम्बद्धस्य सतः पश्चात्स्थितोपस्थितं कर्त्तव्यम् । स्थितोपस्थितशब्देन वेष्ट-

(१) पूर्वोक्तमुदाहरणम् ॥

(२) अस्मिन्सूत्रे एकेग्रहणात्कण्वशाखीयाश्चतुःक्रमं पठन्ति । न माध्यन्दिनशाखीयाः पठन्ति । यथाशाखीयानां पाठो बोध्यः । एवं चतुष्क्रमे विषयेऽपि प्रयोजनं बुधैर्मृग्यमिति ॥

(३) ३ । ४५ ॥

(४) २७ । ४० ॥

(५) २० । ७२ ॥

कोऽभिधीयते। यथा (१) श्रेष्ठतमाय कर्म्मणे। श्रेष्ठतमायेति श्रेष्ठ। तमाय। (२) उपप्रयन्तोऽअध्वरम्। उपप्रयन्त ऽइत्युप। प्रयन्तः। एतच्च पदप्रदर्शनार्थं क्रियते॥

## सुपदे शाकटायनः॥ १८९॥

सुपदे स्थितोपस्थितं शाकटायन आचार्यो मन्यते। पूर्व्वस्योत्तरसंहितस्येति वर्त्तते। यथा (३) मो षूणः। मो ऽइति मो। स्विति सु। (४) गोमदूषु-णासत्या। गोमदिति गो। मत्। ऊ ऽइत्यू। स्विति सु। एतच्च पदस्वरूपज्ञापनार्थं विनापि वेष्टकेन पदस्वरूपं ज्ञायते इति शाकटायनमतं न साधीयः॥

## अन्तःपददीर्घीभावे॥ १९०॥

पूर्व्वस्योत्तरसंहितस्य स्थितोपस्थितमिति वर्त्तते। पदमध्ये दीर्घीभावोऽन्तःपददीर्घीभावस्तस्मिन्नन्तःपददीर्घीभावे पूर्वस्योत्तरसंहितस्य स्थितोपस्थितं कर्त्तव्यम्। यथा (५) मामहन्तामदितिः। ममहन्तामिति

(१) १। १॥
(२) ३। ११॥
(३) ३। ४५॥
(४) २०। ७२॥
(५) ३३। ३८॥

ममहन्ताम् । (१) सादन्यं विदत्थ्यम् । सदन्यमिति सदन्यम् ॥

## विनामे ॥१९१॥

पूर्वस्योत्तरसंहितस्य स्थितोपस्थितमिति वर्त्तते। विनामशब्देन दन्त्यस्य मूर्द्धन्यभाव उच्यते । विनामस्यैष इत्थंभूतो गृह्यते । यत्र निमित्तनैमित्तिकावेकपदस्थौ भवतः पूर्वपदस्य विनामे उत्तरपदसंहितस्य स्थितोपस्थितं कर्त्तव्यम् । यथा (२) सिषासन्तो वनामहे । सिसासन्त ऽइति सिसासन्तः । (३) सुषाव सोमम् । सुसावेति सुसाव ॥

## प्रगृह्ये ॥ १९२ ॥

'प्रगृह्य' मित्यधिकृत्य यद्विहितं तस्यायं विधिः । पूर्वस्योत्तरसंहितस्य स्थितोपस्थितमिति वर्त्तते । पूर्वे प्रगृह्ये उत्तरपदसंहिते स्थितोपस्थितं कर्त्तव्यम् । यथा (४) इन्द्राग्नी ऽअपात् । इन्द्राग्नी ऽइतीन्द्राग्नी ।

(१) ३४ । २१ ॥
(२) २६ । १७ ॥
(३) १९ । २ ॥
(४) ३३ । ६३ ॥

(१) उदु॒त्वा । उ॒त् ऽइत्यू । त्वा विश्वे (२) अ॒मी रो॒च॒ने । अ॒मी ऽइत्य॒मी । रो॒च॒ने दि॒वः ॥

## रिफिते निरुक्ते ॥ १९३ ॥

'विसर्ज्जनीयो रिफित' इत्यस्मिन्नधिकारे यानि रिफितानि पदानि विहितानि तेषामत्र ग्रहणम् । 'पूर्व्वस्योत्तरसंहितस्य स्थितोपस्थित' मिति वर्त्तते । सप्तमीकृतविभक्तिव्यत्ययम् । पूर्व्वे रिफिते पदे निरुक्ते संहितायामनिर्ज्ञातरेफे उत्तरपदसंहिते स्थितोपस्थितं कर्त्तव्यम् । यथा (३) अ॒न्तस्ते॑ । अ॒न्तरित्य॒न्तः । ते॒ द्यावा॑पृथि॒वी । (४) नेष्टः पिब । नेष्ट॒रिति॒ नेष्टः । पिब ऽऋ॒तुना॑ । सर्वे एते वेष्टकाः पदप्रकृतिज्ञापनार्थाः ॥

## अवसाने च ॥ १९४ ॥

"विरामोऽवसान"मित्युच्यते । अवसाने विरामे स्थितोपस्थितं कर्त्तव्यम् । संहितावसानज्ञापनार्थम् । (५) अ॒ग्नये॑ जा॒तवे॑दसे । जा॒तवे॑दस॒ऽइति॑ जा॒त । वे॑दसे ॥

---

(१) १२ । २७ ॥

(२) १३ । ७ । इमान्यप्युदाहरणानि पदपाठाद्बोद्धव्यानीति ॥

(३) ७ । ५ ॥

(४) २६ । २० ॥

(५) ३ । २ ॥

## यथासमाम्नातं क्रमावसानं सङ्क्रमेषु ॥ १९५ ॥

अवसाने सन्धिः सङ्क्रम इत्युच्यते । गलत्पदमतिक्रम्यागलता सह सन्धानं सङ्क्रमः । क्रमसन्धिविषयभूतेषु येन प्रकारेण क्रमावसानं परिपठितं तेनैव भवति । यथा (१) व्विश्वधा॑÷ परमेण । ह्वार्षीच्छतधारम् । अधस्तनसूत्रापवादः । (२) ॥

---

(१) १ । २ । ३ ॥

(२) अनेनैव सूत्रेण यस्मिन्मन्त्रेऽवसानं न भवति पदानां क्रमपाठे तत्सन्देहापनोदार्थं प्रसङ्गाच्चत्वारिंशदध्यायोक्तानि क्रमसन्धानानि प्रदर्श्यन्ते । व्विश्वधाः परमेण । १ । ह्व्वार्षीच्छतधारम् । २ । सहस्रधारन्देवः । ३ । अधुक्षः सा । ४ व्विश्वधाया ऽइन्द्रस्य । ५ । राध्यतामिदम् । ६ । एमि कः । ७ । तस्म्मै कर्म्मणे । ८ । व्वाम्प्रत्युष्टम् । ९ । अरातय ऽउरु । १० । एमि धूः । ११ । धूर्व्वामो देवानाम् । १२ । देवहूतममहुतम् । १३ । हविर्द्धानँव्विष्णुः । १४ । हस्ताभ्यामग्नये । १५ । गृह्णामि भूताय । १६ । रश्मिभिर्देवीः । १७ । देवयुवँय्युष्मा: । १८ । स्थाग्नये । १९ । अग्नीषोमाभ्यां दैव्याय । २० । व्वेत्त्वद्भिः । २१ । व्वेत्त्वग्नेः । २२ । शमीष्व हविष्कृत् । २३ । इहि कुक्कुटः । २४ । व्वह द्ध्रुवम् । २५ । व्वधायाग्ने । २६ । अन्तरिक्षं धर्त्रम् । २७ । दिवँव्विश्वाभ्यः । २८ । व्वेत्तु धान्यम् । २९ । व्यानाय दीर्ग्घाम् । ३० । रसेन रेवतीः । ३१ । पृच्च्यन्तां जनयत्यै । ३२ व्वधः पृथिवि । ३३ । मौगप । ३४ । व्वध्यासमररो । ३५ । स्कन्गायत्रेण । ३६ । जागतेन सुक्ष्मा । ३७ । माज्जर्म्यनिशिता । ३८ । माज्जर्म्यदित्यै । ३९ । पश्श्याम्म्यग्नेः । ४० । यजुषेयजुषे सवितुः । ४१ । त्वा । तेज÷ । ४२ । इति द्विचत्वारिंशत्प्रथमाध्याये ॥

गन्धर्व्वः । ईडित ऽइन्द्रस्य । २ । दक्षिणो मित्रावरुणौ । ३ । अभिशस्त्यै स-

# वृद्धँव्वृद्धिः ॥ १९६ ॥

## द्वृत्युक्तार्थम् ॥

वितुः । ४ । ध्रुवा ध्रुवा । ५ । माज्जिर्म नमः । ६ । सचन्तामस्म्माकम् । ७ । अश्व्ना-म्म्येतम् । ८ । ब्रह्म्मणे तेन । ९ । ऊहाम्म्यग्नीषोमौ । १० । ऊहामीन्द्राग्ग्न्योः । ११ । इन्द्राग्ग्न्योरिन्द्राग्ग्नी । १२ । इन्द्राग्ग्नी व्वसुब्भ्यः । १३ । अवताँव्व्यन्तु । १४ । मरुद्भिरिन्द्रः । १५ । तस्म्मै पोषाय । १६ । व्वर्त्तेग्ग्ने । १७ । हिमा ऽअ-चारिषम् । १८ । व्वेदिषदो ये । १९ । इत्येकोनविंशतिर्द्द्वितीयाध्याये । उषसा सू-र्य्यः । १ । गृहपते पुरीष्यः । २ । पतिवेदनमितः । ३ । इति त्रीणि तृतीयाध्या-ये ॥ चतुर्थेऽध्याये क्रमसन्धानाभावः । पुरूरवामन्थामि । १ । रजः शया हरिशया- । २ । देववीतये सिरठ० हि । ३ । ध्रुवो व्वैष्ण्णवम् । ४ । ध्रुव ऽऐन्द्रम् । ५ । हव्व्यवाहनः श्वात्रः । ६ । अभूग्रथायथम् । ७ । इति सप्त पञ्चमाध्याये ॥ षष्ठे ऽ-ध्याये क्रमसन्धानाभावः । मादयस्वोदानाय । १ । भून्महेन्द्राय । २ । इति द्वे क्रमस-न्धाने सप्तमेऽध्याये ॥ अष्टमेऽध्याये क्रमसन्धानाभावः । इन्द्रस्य सत्यप्रसवसः । १ । इन्द्रँव्वाजाजितः । २ । इति द्वे नवमाध्याये ॥ इति दशमाध्याये क्रमसन्धाना-भावः । जागतेन हस्ते । १ हिरण्ययीमानुष्टुभेन । २ । इति द्वे एकादशाध्याये । प-रिचिल्लोकम् । १ । इत्येकं द्वादशे । दिशामि साहस्रम् । गवयुमूर्णायुम् । २ । उष्ट्रमजः । ३ । शरभन्त्वम् । ४ । इति चत्वारि त्रयोदशेऽध्याये ॥ अन्तरिक्षँव्वायुः । १ । व्वायूराज्ञी । बृहती नभः । इति त्रीणि चतुर्द्दशाध्याये ॥ अग्ग्रेरेवः । १ । रथे चि-त्रो मेनका । २ । असमरथः प्रम्म्लोचन्ती । ३ । अरिष्टनेमिर्व्विश्वाची । ४ । सु-षेण ऽउर्व्वशी । शैशिरौ परमेष्ठी । ६ । दिवः सूर्य्यः । ७ । दिवं ध्रुवे । इत्यष्टौ क्रम-सन्धानानि पञ्चदशाध्याये । षोडशसप्तदशाध्याये क्रमसन्धानाभावः ॥ स्वस्तोमः । १ । रथन्तरँव्वेट् । इति द्वे अऽष्टादशे ॥ ऊनविंशतिमेऽभावः । व्वायुर्ज्जाग्ग्रत् । १ । स्वप्ने सूर्य्यः । २ । शूद्रेऽर्य्ये । ३ । आपोऽस्मिक्षि । ४ । इति चत्वारि विंशतिमे-ऽध्याये ॥ एकविंशतिमेऽध्याये क्रमसन्धानाभावः ॥ स्वाहाकृतः स्वगा । १ । प्राणा-य यत्ते । २ । इति द्वे द्वाविंशेऽध्याये ॥ चतुष्प्पदश्चन्द्रमाः । १ । चन्द्रमारात्रौ । २ । व्वायुः सूर्य्यः । ३ । इति त्रीणि त्रयोविंशेऽध्याये ॥ चतुर्विंशतिपञ्चविंशतिष-ड्विंशतिशप्तविंशत्यध्यायेषु क्रमसन्धानाभावो बोध्यः ॥ शुचिर्मुष्ण्णहा । १ । देवौ त्रिष्टुभा । २ । इति द्वे अष्टाविंशाध्याये ॥ एकोनत्रिंशत्त्रिंशदेकत्रिंशद्द्वात्रिंशन्नूयस्त्रि-

इति कात्यायनकृते प्रातिशाख्यसूत्रे चतुर्थोऽध्यायः ॥४॥

इत्यानन्दपुरवास्तव्यवज्रटसूनुनोव्वटेन कृते मातृमोदाख्ये प्रातिशाख्यभाष्ये चतुर्थोऽध्यायः समाप्तः ॥

समासेऽवग्रहो ह्रस्वसमकालः ॥१॥

संहितापदलक्षणं वक्तव्यमिति शास्त्रमारब्धं कात्यायनेनाचार्य्येण तत्र संहितायामित्यधिकृत्य 'पदान्तपदाद्योः सन्धि'रित्यादिना ग्रन्थेन संहितालक्षणमशेषमुक्तं तथा 'क्रमः स्मृतिप्रयोजन' इत्यादिना ग्रन्थेन क्रमलक्षणमुक्तम् । तथाऽ'र्थः पद' मिति पदलक्षणमुक्तम् । स्वरश्च 'स्वरितवर्ज्जमेकोदात्तं पद'मित्यनेनाध्यायेन विहितः । अर्थविशेषाच्चतुःप्रकारं तत्पदं भवतीत्युपरिष्टाद्वक्ष्यति । 'क्रियावाचकमाख्यातमुपस-

शत्पंचत्रिंशत्स्वध्यायेषु न सन्तीति क्रमसन्धानानि बुधैर्बोध्यानि ॥ ऊतिभिः कया । १। ईक्षऽईक्षामहे । २ । इति द्वे षट्त्रिंशदध्याये । पाहि मधु । १ । स्वाहा रात्रिः । २ । इति द्वे सप्तत्रिंशेऽध्याये ॥ सरस्वत्यसौ । १ । इत्येकमष्टत्रिंशेऽध्याये ॥ एकोनचत्वारिंशेऽध्याये क्रमसन्धानाभावः ॥ अविद्यां विद्यायाम् । १ । ॐ ३ क्रतो । क्रतोस्मर क्रतोऽइतिक्रतो । स्मर क्लिबे । ३। क्लिबे कृतम् । इति चत्वारि क्रमसन्धानानि चत्वारिंशेऽध्याये ॥ इति सर्वमेकीकृत्य । ११५ । पञ्चदशाधिकैकशतसङ्ख्याकानि क्रमसन्धानानि ज्ञेयानि ॥ एभ्योऽन्यत्र आर्षीसंहितावसानानुसारेण निर्णयोऽवधार्य्यः ॥ इति क्रमसंहितायामयन्नियमः । क्रमपूर्वाएवाष्टौ विकृतयो व्याडिमहर्षिणा प्रतिपादितास्ता ग्रन्थान्ते सोदाहरणलक्षणा दास्यामो वयमिति ॥

र्गो विशेषकृत् ॥ सत्त्वाभिधायकं नाम निपातः पादपूरण इति तत्राख्यातं भवति यथा पाहि। रच्च यज्ञ। यच्छेति, । उपसर्गा भवन्ति यथा । 'परोपापावप्रतिपरी'त्यादयः । निपाता भवन्ति यथा । 'वा च कमुचितसमस्मादि'त्यादयः । नाम त्रिप्रकारं भवति । कृत्तद्धितसमाससञ्ज्ञाभेदेन भिन्नम् । कृतः । यज्ञः वेदः । याञ्चा । भूतिः । तद्धिताः । आग्नेयः । अग्नीषोमीयः । ऐन्द्राग्नः । वैश्वदेवः । समासा भवन्ति यथा विश्वकर्मा विमनाः । विहायाः । सहङ् । तत्र समासपदेऽवग्रहो भवति द्वयोः पदयोर्बहूनां वा परस्पराकाङ्क्षया सम्बद्धानां यत्र द्वित्र्यादिपदसमूहोच्चारणं स समासः । स च समासश्चतुःप्रकारो भवति यथा अव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहयः । तत्र पूर्वपदप्रधानोऽव्ययीभावः । यथा समभूमि । विपुरूपम् । अन्तःपदम् । अनुरूपम् । उत्तरप्रधानस्तत्पुरुषः । यथा अघशंसः । व्रतपते । आखरेष्ठः । उपप्रयन्तः । उभयपदप्रधानो द्वन्द्वः । यथा अग्नीषोमौ । इन्द्राग्नी । मित्रावरुणौ । दीक्षातपसोः । अन्यपदप्रधानो बहुव्रीहिः । यथा अनमीवाः । कृष्णग्रीवाः । शितिकक्षः । एवमेतस्मिंश्चतुःप्रकारेऽपि समासपदेऽवग्रहो भवति । द्वयोः पदयोः पृथग्ग्रहणमवग्रहः । नाना ग्रहइत्यर्थः । स च ह्रस्वसमकालो

ह्रस्वाक्षरतुल्यकालो भवति । यथा (१) ऋक्सामाभ्यामित्यृक् । सामाभ्याम् । सन्तरन्त ऽइति सम् । तरन्तः । अधिकारसूत्रमेतत् ॥

## तरतमयोश्चातिशयेऽदक्षिण-प्रत्यासङ्गे ॥ २ ॥

तरतमयोश्च प्रत्यययोः परभूतयोरतिशयवाचिनोरवग्रहो भवति । न चेद्दक्षिणशब्दस्तत्र प्रत्यासक्तो भवति । यथा (२) पूर्वतरमिति पूर्व । तरम् । (३) वह्नितममिति वह्नि । तमम् । (४) सस्नितममिति सस्नि । तमम् । अतिशय इति किम् । (५) कारोतरेण दधतः । (६) यदा पिपेष मातरम् । अदक्षिणप्रत्यासङ्ग इति किम् । (७) द्यावापृथिव्योर्दक्षिणं पार्श्वं विश्वेषान्देवानामुत्तरम् । असमासार्थश्चारम्भः ॥

---

(१) ४ । १ ॥
(२) १८ । १० ॥
(३) १ । ८ ॥
(४) इदं पदपाठस्योदाहरणं तथा ॥
(५) १९ । ८० ॥
(६) १९ । ८ ॥
(७) २५ । ५ ॥

व्वीतमहूतमसूतमगोपातमरक्तनधा-
तमव्वसुधातमाः पूर्व्वेण ॥ ३ ॥

एतानि पदानि तमपः पूर्व्वेण पदेनावगृह्यन्ते । व्वीतम यथा (१) देववीतमऽइति देव । व्वीतमः । (२) देवहूतममिति देव । हूतमम् । (३) इन्द्राय । सुषूतमम् । सुषूतममिति सु । सूतमम् । (४) सः । सुगोपातमऽइति सु । गोपातमः । (५) रक्तधातममिति रक्त । धातमम् । (६) व्वसुधातमऽइति व-सु । धातमः ॥

सर्पदेवजनेभ्यश्च ॥ ४ ॥

सर्प्पदेवजनेभ्यइत्येतच्च पदं पूर्व्वेण पदेनावगृह्य-ते । यथा (७) सर्प्पदेवजनेभ्यऽइति सर्प्प । देवज-नेभ्यः । उपरिष्टाद्वक्ष्यति 'बह्वप्रकृतावागन्तुना पर्व्व-णे'त्यस्यापवादः ॥

(१) ११ । ३४ ॥
(२) १ । ८ ॥
(३) ६ । २८ ॥
(४) ८ । २९ ॥
(५) २६ । २० ॥
(६) २७ । १४ ॥
(७) ३० । ६ ॥

## तूणवद्ध्ममुत्तरेण ॥ ५ ॥

तूणवध्ममित्येतत्पदं उत्तरेण पदेनावगृह्यते । यथा (१) क्रोशाय । तूणवद्ध्ममिति तूणव । ध्मम् ॥

## रायस्पोषदे विजावेति च ॥ ६ ॥

रायस्पोषदे विजावा इत्येते च पदे चशब्दादुत्तरेण पदेनावगृह्येते । यथा (२) रायस्पोषदऽइति रायस्पोष । दे । (३) स्यात् । नः । सूनुः । तनयः । विजावेति वि । जावा ॥

## बहुप्रकृतावागन्तुना पर्व्वणा ॥ ७ ॥

बहूनि पदानि यत्र तद्बहुप्रकृतिपदं तत्र आगन्तुना पर्वणा समासलक्षणेन यत्पश्चात्कालिकं पदं भवति तेनावग्रहो भवति । यथा (४) प्रजापतिरिति प्रजा । पतिः । (५) प्रजापतिगृहीतयेति प्रजापति । गृहीतया । समासलक्षणेन यदाऽऽगन्तुकं पदं तदि-

(१) ३० । १८ ॥
(२) ५ । १ ॥
(३) १२ । ४४ ॥
(४) ३१ । १९ ॥
(५) १३ । ३९ ॥

ह गृह्यते न तु पाठेन तेनैतद्भवति । यथा (१) सुप्रजाऽइति सु । प्रजाः । (२) सुप्रायनाऽइति सु । प्रायनाः ॥

## तद्वति तद्धिते न्यायसंहितं चेत् ॥ ८ ॥

तद्वतीत्यत्र एकस्य वतिशब्दस्य तन्त्रेणोच्चारणं द्रष्टव्यम् । तद्वति मत्वर्थीये तद्धिते वतौ च परभूतेऽवग्रहो भवति न्यायसंहितं व्याकरणशास्त्रोक्तसन्धिमत्पदं चेद्भवति । यथा (३) मधुमदिति मधु । मत् । (४) हिरण्यवदिति हिरण्य । वत् । वतौ खल्वपि यथा (५) ब्रह्मिष्ठाम् । अनु । सँव्वतमिति सम् । व्रतम् । तद्वतीति किम् । (६) एतावान् । अस्य । महिमा । न्यायसंहितमिति किम् । (७) ऊर्ज्जस्वन्तम् । (८) पयस्व-

(१) ३ । ३७ ॥
(२) २९ । ५ इदमुदाहरणं 'ख' पुस्तके नास्तीति बुधैर्ज्ञेयम् ॥
(३) १३ । २६ ॥
(४) ८ । ५७ ॥
(५) ११ । १० ॥
(६) ३१ । ३ ॥
(७) ६ । २८ ॥
(८) इदमपि तथा ॥

कालइति किम् । (१) सुविद्वा॑ꣳसऽइति॑ सु । वि॒द्वा॑ꣳसः॑ । स्वरेण ह्रस्वादिति किम् । (२) जिगी॒वा॑ꣳसः॑ । स्वरादिति किम् । (३) चिकि॒त्वान्त्सा॒दय॑ । अनुषीति किम् । (४) सू॒र्य्यः॑ । आ॒क्रमा । जग॑तः । त॒स्त्युषः॑ ॥

## प्रत्नपूर्व्वविश्वेमर्त्तुभ्यस्था ॥१२॥

एभ्यः परः स्थाप्रत्ययोऽवगृह्यते । प्रत्न यथा (५) प्र॒त्नथेति॑ प्र॒त्न॑ थां । (६) पू॒र्व्वथेति॑ पू॒र्व्व । थां । (७) वि॒श्वथेति॑ वि॒श्व । थां । (८) इ॒मथेतीम । थां । (६) ऋ॒तुथेत्यृ॒तु । था । इ॒न्द्रः॑ । व॒नस्पतिः॑ । प॒व॒मानः॑ । प॒रि॒स्रुतेति॑ प॒रि । स्रुता॑ ॥

## ह्रस्वव्यञ्जनाभ्यां भकारादौ

(१) १७ । ६३ ॥
(२) इदं शाखान्तरोदाहरणम् ॥
(३) ११ । ३२ ॥
(४) ७ । ४८ ॥
(५) ७ । ११ ॥
(६) इदं तथा ॥
(७) इदमपि तथा ॥
(८) इदमपि तथैव ॥
(९) २० । ५८ । इमान्यप्युदाहरणानि पदपाठाद्बोध्यानि ॥

## ह्विभक्तिप्रत्यये ॥ १३ ॥

ह्रस्वात्स्वराद्व्यञ्जनाच्च परभूते भकारादिविभक्तिप्रत्ययेऽवग्रहो भवति । ह्रस्वाद्भवति यथा (१) तन्व्यऽइति तन्व । भ्यः । (२) अग्निभिरित्यग्नि । भिः । व्यञ्जनाद्भवति यथा (३) तिष्ठद्भ्यऽइति तिष्ठत् । भ्यः । (४) धावद्भ्यऽइति धावत् । भ्यः । ह्रस्वव्यञ्जनाभ्यामिति किम् । (५) रथकारेभ्यऽइति रथ । कारेभ्यः । (६) कुलालेभ्यः । भकारादौ विभक्तिप्रत्ययइति किम् । (७) कर्णा गर्दभः । (८) कुम्भो वनिष्ठुः । भकारादाविति किम् । (९) अग्निषु ॥

## स्विति चानतौ ॥ १४ ॥

सु इत्येतस्मिंश्च विभक्तिप्रत्ययेऽनतावग्रहो भवति ।

---

(१) १६ । २७ ॥
(२) इदमपि तथा ॥
(३) १६ । २३ ॥
(४) इदमपि तथा ॥
(५) १६ । २७ ॥
(६) इदमपि तथा ॥
(७) २४ । ४० ॥
(८) १९ । ८५ ॥
(९) इदं प्रत्युदाहरणं (ख) पुस्तके नास्तीति ॥

यथा (१) अग्निस्त्वम् । सु । अग्ने । सधिः । (२) अभि । प्र । दूहि । निः । दृह । हृत्स्विति हृत् । सु । अनताविति किम् । (३) ऋष्चु । (४) अग्निषु । (५) स्नुषु । विभक्तीति किम् । (६) असुम् । ह्रस्वव्यञ्जनाभ्यामिति पूर्वसूत्रादनुवर्त्तते । ताभ्यामिति किम् । यासु । (७) ॥

## वर्णसङ्ख्येऽन्यतरतः ॥ १५ ॥

वर्णसमासः सङ्ख्यासमासश्चान्यतरतो विकल्पेनावगृह्यते । वर्णसमासो भवति यथा (८) धूम्ररोहितऽइति धूम्र । रोहितः । कर्कन्धुरोहितऽइति कर्कन्धु । रोहितः । सङ्ख्यासमासो भवति यथा (९) पञ्चदशेति पञ्च । दश । त्रयोदशेति त्रयः । दश । (१०) ॥

---

(१) १२ । ३१ ॥
(२) १७ । ४१ ॥
(३) ३२ । इदं शाखान्तरीयमुदाहरणम् ॥
(४) इदमपि तथा ॥
(५) १७ । १३ ॥
(६) ८ । १८ ॥
(७) इति प्रत्युदाहरणं 'ख' पुस्तके नास्तीति विज्ञा जानन्तु ॥
(८) २४ । २ । इदमुदाहरणद्वयमेकाध्यायस्थैकाङ्ककम् ॥
(९) १८ । २४ ॥
(१०) इदमपि तथा ॥

## अनुदात्तोपसर्गे चाख्याते ॥ १६ ॥

अनुदात्त उपसर्गोऽस्येत्यनुदात्तोपसर्गमाख्यातं तस्मिन्नवग्रहो भवति । यथा (१) यत् । अश्वाय । वासः । उपस्तृणन्तीत्युप । स्तृणन्ति । (२) अभि । मूलम् । निहतस्येति नि । हतस्य । अवधावतीत्यव । धावति ॥

## गिरि त्रशयोः ॥ १७ ॥

गिरिशब्दोऽवगृह्यते त्रशयोः प्रत्यययोः परयोः । यथा (३) शिवाम् । गिरित्रेति गिरि । त्र । (४) गिरिशेति गिरि । श । अच्छ । वदामसि ॥

## इवकाराम्रेडितायनेषु च ॥ १८ ॥

इव कार आम्रेडित अयन एतेषु सुप्रत्ययेषु परभूतेषु अवग्रहो भवति । इवे यथा (५) स्रुचीवेति स्रुचि । इव । घृतम् । चम्वीवेति चम्वी । इव । सो-

(१) २५ । ३७ ॥
(२) २५ । ३२ ॥
(३) १६ । ३ ॥
(४) १६ । ४ ॥
(५) २० । ७० ॥

मं÷ । कारे यथा । (१) हिङ्कारायेति हिम् । का: रायं । (२) वषट्कारेभिरिति वषट् । कारेभिं÷। आहुतीरित्या । हुंती: । आम्रेडिते यथा (३) यज्ञायज्ञेति यज्ञा । यंज्ञा । ञ: । (४) सठं० समिति सम् । सम् । इत् । (५) यतोयतऽइति यतं÷। यत: । अयने यथा (६) आयनायेत्या । अयनाय । (७) प्रायनायेति प्र । अयनाय ॥

## एकात्समीची ॥ १९ ॥

एकशब्दात्परः समीचीशब्दोऽवगृह्यते । यथा (८) शिशुम् । एकम् । समीचीऽइति सम् । ईची । एकादिति किम् । (९) स्वर्विदेति स्व: । विदा । समीचीऽइति समीची । उरसा । त्मना ॥

---

(१) २२ । ७ ॥
(२) १९ । १७ ॥
(३) २७ । ४१ ॥
(४) १५ । २६ ॥
(५) ३६ । १२ ॥
(६) २२ । ७ ॥
(७) इदमपि तथा ॥
(८) १२ । २ ॥
(९) ११ । २८ ॥

त्वायवः शंय्योर्बर्हिर्द्धाऽस्म्मयुं मृन्न्मयींᳫं सुम्म्नयाऽऽशुया साधुया धृष्णुया विश्शालमनुया ॥ २० ॥

एतानि पदानि सावग्रहाणि भवन्ति । त्वायवो यथा (१) सुताः । इमे । त्वायवऽइति त्वा । यवः । शंय्योर्यथा (२) शिवम् । शग्ग्मम् । शंय्योरिति शम् । योः । बर्हिर्द्धा यथा (३) इदम् । अहम् । तप्तम् । वाः । बर्हिर्द्धेति बर्हिः । धा । यज्ञात् । अस्म्मयुंर्यथा (४) अग्निम् । भरन्तम् । अस्म्मयुमित्यस्म्म । युम् । मृन्न्मयींर्यथा (५) महीम् । मृन्न्मयीमिति मृत् । मयीम् । योनिम् । अग्नये । सुम्म्नया यथा (६) धीराः । देवेषु । सुम्म्नयेति सुम्म्न । या । आशुया यथा (७) तव । भ्रमासः । आशुयेत्याशु । या । सा-

(१) २० । ७८ ॥
(२) ३ । ४२ । इमान्युदाहरणानि पदपाठाद्बोध्यानि ॥
(३) ५ । ११ ॥
(४) ११ । ११ ॥
(५) ११ । ५६ ॥
(६) १२ । ५४ ॥
(७) १३ । ९ ॥

धुया यथा (१) आ । सीद । साधुयेति साधु । या । धृष्णुया यथा (२) चित्र । वज्रहस्तेति वज्र । हस्त । धृष्णुयेति धृष्णु । या । मन्हः । विशालंय्यथा (३) वृष्टिः । विशालमिति वि । शालम् । पुरुषः । अनुया यथा (४) अहः । अनुयेत्यनु । या । रात्र्या । रात्रीम् । उभिजा । वसुभ्यऽइति वसु । भ्यः ॥

## मृगयुमुभयादतोऽपामार्ग्गकिम्पूरुषमिति च ॥ २१ ॥

एतानि पदानि सावग्रहाणि भवन्ति । मृगयुंय्यथा (५) मृत्यवे । मृगयुमिति मृग । युम् । उभयादतो यथा (६) ये । के । च । उभयदतऽइत्युभय । दतः । अपामार्ग्ग यथा (७) अपामार्ग्ग । अपमार्ग्गेत्यप । मार्ग्ग । त्वम् । अस्मत् । किम्पूरुषंय्यथा (८) प-

(१) १४ । १ ॥
(२) २७ । ३७ ॥
(३) १४ । ८ ॥
(४) १५ । ६ ॥
(५) ३० । ५ ॥
(६) ३१ । ८ ॥
(७) ३५ । १० । इमानि सर्वाण्युदाहरणानि पदपाठाज्ज्ञेयानि ॥
(८) ३० । १४ ॥

र्वतेभ्यः । किम्पूरुषम् । किम्पुरुषमिति किम् । पुरुषम् ॥

## पारावतानाग्निमारुताऽश्चेति जातूकर्ण्यस्य ॥ २२ ॥

पारावतान् आग्निमारुता इत्येते पदे सावग्रहे भवतो जातूकर्ण्यस्याचार्यस्य मतेन । यथा (१) अहन्ने । पारावतान् । (२) कल्माषाः । आग्निमारुताऽइत्याग्नि । मारुताः । जातूकर्ण्यस्येति किम् (३) पारावतान् । आग्निमारुताः । (४) ॥

## अधीवासमित्येके ॥ २३ ॥

अधीवासमित्येतत्पदमेके आचार्य्याः सावग्रहं कुर्व्वन्ति । (५) अधिवासमित्यधि । वासम् । या । हिरण्यानि । एकइति किम् । अधीवासम् । (६) ॥

(१) २४ । २५ ॥

(२) २४ । ७ ॥

(३) पूर्वोक्तमुदाहरणं पदपाठस्य बोध्यम् ॥

(४) अनयोः पूर्वोक्तोदाहरणयोर्यथाशास्त्रं व्यवस्था, माध्यन्दिना द्वितीयोदाहरणस्यावग्रहं कुर्वन्ति न प्रथमस्येति बोध्यम् ॥

(५) २५ । ३७ ॥

(६) पूर्वोक्तमेव ॥

## प्रतिषेधे नावग्रहः ॥ २४ ॥

'समासेऽवग्रह' इति योऽवग्रहाधिकारः कृतस्तस्यायमपवादः । प्रतिषेधवाचिना नञा निपातेन सह समासे सति अवग्रहो न भवति । यथा (१) न रक्षसा । अरक्षसा । मनसा । (२) न इ राः । अनिराः । अमीवाः । निषीदन् । अत्र "न लोपो नञः" इति नकारलोपः । "तस्मान्नुडची"ति नुडागमः । प्रतिषेधेनेति किम् । (३) अनिशितऽइत्यनि । शितः । असि ॥

## उत्तरेण चाकारेण ॥ २५ ॥

प्रतिषेधवाचिनो नञ्निपातादुत्तरेण चाकारेण सह समासेऽवग्रहो न भवति । यथा (४) अनाततायं । धृष्णवे । (५) अनाधृष्यः । जातवेदाऽइति जात । वेदाः ॥

## द्वापूर्व्वम् ॥ २६ ॥

---

(१) ११ । २१ ॥
(२) ११ । ४४ ॥
(३) १ । २९ ॥
(४) १६ । १४ ॥
(५) २७ । ७ ॥

द्वापदपूर्वं समासपदं नावगृह्यते । यथा (१) द्वाद॑श । (२) द्वावि॒ंश॒ऽत्यः॑ । (३) द्वात्रिंश॒ऽतम् ॥

## सङ्ख्यापूर्वश्च धा ॥ २७ ॥

सङ्ख्यापूर्वपदो धापदोत्तरपदः समासो नावगृह्यते । यथा (४) अ॒ष्ट॒धा । दि॒व॑म् । (५) कति॑ । ऋो॒मा॑सः॑ । क॒ति॒धा । स॒मिं॒द्धऽइ॒ति॒ सम् । इ॒द्धः॑ । सङ्ख्यापूर्व इति किम् । (६) इ॒दम् । अ॒हम् । त॒न्मम् । त्वाः॑ । ब॒हि॒र्धेति॒ ब॒हिः॑ । धा ॥

## द्वन्द्वानि द्विवचनान्तानि स्वरान्तपूर्वपदानि ॥ २८ ॥

द्वन्द्वसमासपदानि द्विवचनान्तानि स्वरान्तपूर्वपदानि नावगृह्यन्ते । यथा (७) अ॒यम् । वा॒म् । मि॒त्रा-

---

(१) १७ । २५ ॥
(२) १४ । १८ ॥
(३) १७ । २५ ॥
(४) ८ । ५५ ॥
(५) २३ । ५० ॥
(६) ५ । २२ ॥
(७) ७ । ८ ॥

वरुणा। (१) इन्द्राग्नीऽआगतम्। (२) अग्नीषोमयोः। उज्जितिम्। इन्द्राग्नीति किम्। (३) अद्रुतमसि। हविर्धानमिति हविः। धानम्। स्वरान्तपूर्वपदानीति किम्। (४) ऋक्सामयोरित्यृक्। सामयोः। शिल्पे॥

## तद्धिते चैकाक्षरवृद्धावनिहिते ॥ २९॥

समासादुत्तरकालं तद्धिते उत्पन्नेऽवग्रहो न भवति यत्र तद्धितजनितैकाक्षरे पूर्वपदे वृद्धिर्भवति। यदि च तत्पूर्वपदेन सह अनिहितं भवति अव्यवहितं भवति यदि पूर्वपदवृद्ध्या उत्तरपदमव्यवहितं भवतीत्यर्थः। यथा (५) त्रैष्टुभेन छन्दसा। (६) मे। भागः। सौभाग्यं पसः। तद्धितइति किम्। (७) गायत्री। त्रिष्टुप्। त्रिस्तुबिति त्रि। स्तुप्। (८) सुभगेति

(१) ७। ३०॥
(२) २। १५॥
(३) १। ९॥
(४) ४। ९॥
(५) ११। ७॥
(६) २०। ८॥
(७) २३। ३१॥
(८) २५। १४॥

सु । भगा । एकाच्चरष्टद्वाविति किम् । (१) मयुः॑ । प्राजापत्यऽइति प्राजा । पत्यः॑ । अनिङ्गितइति किम् । साम्राज्यमिति साम् । राज्यम् । अत्र पूर्वपदोत्तरपदयोर्व्यञ्जनेन व्यवधानं कृतम् ॥

## अञ्चतिसहत्योः क्लोपे ॥ ३० ॥

अञ्चतेर्धातोः सहतेश्च कृत्प्रत्ययलोपे सति अवग्रहो न भवति । अञ्चतेर्न भवति यथा (२) प्राङ् (३) प्रत्यङ् । सहतेः खल्वपि यथा (४) ऋतापाट् । ऋतधामा । (५) दुश्च्यवनः॑ पृतनाषाट् । अञ्चतिसहत्योरिति किम् । (६) सुकृदिति सु । कृत् । देवः॑ । सविता । क्लोप इति किम् । (७) आच्चेत्या । अच्य । जानु (८) पृतनासह्यायेति पृतना । सह्याय । (९) ॥

(१) २४ । ३१ । इमान्यप्युदाहरणानि पदपाठस्थानि ज्ञेयानीति ॥
(२) १९ । २ ॥
(३) १० । २९ ॥
(४) १८ । ३६ ॥
(५) १७ । ३६ ॥
(६) २७ । १२ ॥
(७) १९ । ५० ॥
(८) १८ । ६२ ॥
(९) अत्र इक्श्तिपौ धातुनिर्देशः । अञ्चु गतिपूजनयोः । सह मर्षणे इत्येतयोर्ग्रहणम् । अनयोः कृदन्तक्विप्प्रत्ययलोपे नावग्रहः ॥

## अनुरुसुभ्याम् ॥ ३१ ॥

उरु सु इत्येताभ्यां परयोरञ्चतिसङ्ख्योः कल्लोपे सत्यवग्रहो भवति । यथा (१) उरुव्यञ्चमित्युरु । व्यञ्चम् । अश्वेत् । (२) सुरुच इति सु । रुचः । श्वेनः । श्वावः । (३) सुप्राङिति सु । प्राङ् । अजः । अधस्तनयोगस्यापवादः ॥

## समिदाभ्यांवत्सरः ॥ ३२ ॥

सम् इदा एताभ्यां परो वत्सरशब्दो नावगृह्यते । यथा (४) संवत्सरः । असि । इदावत्सरः । समिदाभ्यामिति किम् । (५) परिवत्सरइति प-रि । वत्सरः । इद्वत्सरइतीत् । वत्सरः ॥

## प्राग्निभ्यामनिन्धौ प्रश्लेषे ॥ ३३ ॥

प्र अग्नि इत्येताभ्यां प्रश्लिष्टसन्धावबग्रहो न भवति । इन्धिदीप्तावित्यस्माद्धातुं वर्जयित्वा । प्रशब्दा-

---

(१) १५ । २२ ॥
(२) १३ । २ ॥
(३) २५ । २३ ॥
(४) २७ । ४४ ॥
(५) पूर्वोक्तोदाहरणाङ्को बोध्यः ॥

ह्नवति यथा (१) प्राणः । अग्निशब्दाह्नवति यथा (२) आग्नीध्रम् । यत् । सरस्वति । प्राग्निव्यामिति किम् । (३) वीध्यायेति त्रि । ईध्याय । अनिन्धाविति किम् । (४) प्रेद्धऽइति प्र । इद्धः । प्रस्नेषइति किम् । (५) प्रायणाय । प्रायनायेति प्र । अयनाय ॥

# पाङ्क्तानुदद्रोऽभ्राय सᳬंशयात् ॥ ३४ ॥

पाङ्क्तान् उद्रः अभ्राय एतानि पदानि संशयान्नावगृह्यन्ते । पङ्क्तिः पूर्वपदं त्रायतेरुत्तरपदं । पातेर्वा पूर्वपदं तनोतेरुत्तरपदम् । तथा उद्रः उत् ऊर्ध्वं द्रवतीति उद्रः उत्शब्दः पूर्वपदं द्रवतेरुत्तरपदम् । यद्वा उत् रातीति उद्रः । उत् पूर्वपदं रातेरुत्तरपदम् । तथा अभ्रशब्दः अपो बिभर्त्ति धारयतीत्यभ्रः । अप्शब्दः पूर्वपदं बिभर्त्तेरुत्तरपदम् । यद्वा । अभ्रवभ्रमभ्रचरगत्यर्थाः । इत्यभ्रतेरेवाभ्रम् । एवमेतानि पदानि पूर्वोत्तरपदसंशयान्नावगृह्यन्ते । हेतुवचनाद-

(१) १९ । २ ॥
(२) १९ । १६ ॥
(३) १६ । ३८ ॥
(४) ७० ॥
(५) २२ । ७ ॥

न्यत्रापि यत्र संग्रयस्तत्रावग्रहो न भवति । यथा (१) अन्तरिक्षाय प्राङ्वान् । (२) अपामुद्रो मासाम् । (३) अभ्राय स्वाहा । एतान्युदाहरणानि पदसंहितायां अन्यान्यपि यथा सम्भवमूह्यानि चेति ॥

जनयत्याऽओषधयो वृषायिषत च नास्ममभ्यमजावयो वल्गम् ॥ ३५ ॥

एतानि पदानि नावगृह्यन्ते । यथा (४) जनयत्यै । त्वा । (५) ओषधयः । प्रति । मोदध्वम् । (६) आ । वृषायिषत । (७) नहि । तेषाम् । अमा । चन । (८) कदा । चन । स्तरीः । असि । (९) पावकः । अस्मभ्यम् । शिवः । भव । 'ह्रस्वव्यञ्जनाभ्यां भकारादौ विभक्तिप्रत्यय' इत्यस्यापवादः । अजाव-

(१) २४ । २६ ॥
(२) २४ । ३७ ॥
(३) २२ । २४ ॥
(४) १ । २२ ॥
(५) १२ । ४४ । ओषतेर्धयतेर्निष्पन्नत्वादवग्रहप्राप्तेरपवादः ॥
(६) २ । ३० । 'अनितावन्तर्विकारागमं आगुर्कौरयस्यापवाद' इति ॥
(७) ३ । ३२ ॥
(८) ३ । ३२ ॥
(९) ४ । १७ ॥

यो यथा (१) उपहूताऽइत्युप । हूताः । अजावयः ।
'समासेऽवग्रहः' इत्यस्यापवादः । वलगं यथा (२)
इदमहन्तँव्वलगमुत्किरामि । (३) ॥

## समानोऽनश्वमेधे ॥ ३६ ॥

समानशब्दोऽश्वमेधमन्त्रमुक्त्वाऽन्यत्र नावगृह्यते । यथा (४) यम्मे समानः । यमसमानः । अनश्वमेध इति किम् । (५) समानो यज्ञेन कल्पताꣳ स्वाहा । समानऽइति सम् । आनः । एकस्मै । द्वाभ्याम् ॥

व्वायुरसजातः समुद्रमहोरात्रे व्वि-
श्वानरो व्विश्वाहाऽऽग्रणोऽसप-
त्ना गोधा गोधूमाऽआशुशुक्षणि-
न्न्यग्रोधः पुरोडाशः प्रावणेभिरशी-
तम तस्करा मस्ममसाऽश्वत्थऽ-

(१) ३ । ४२ ॥

(२) ५ । २३ ॥

(३) वलगमुद्वपामीति शाखान्तरीणपाठः । वलन्तं वृणोति वृण्वन् गच्छतीति वलगः ॥

(४) ५ । २३ ॥

(५) २२ । ३३ ॥

उपस्त्तिम्र्मांकिर्व्विश्वामित्त्रो गोपा-
म्प्रऽउगमङ्गानि कक्षीवन्तमधात्य-
वीरवन्नीहारेण प्रावृता घनाघनऽ-
ईदृङ्चान्न्यादृङ्शुघनासः कुयवं कु-
चरः प्रियङ्गवो नीवारा ऽएकादश
षोडश चन्द्रमा ऽआयुवो ऽऽयाग्नो
ऽनड्वान्न्गविष्ठिरः कपर्द्दिने पुलस्त्त-
ये निषङ्गिणे कुलालेभ्यः कर्म्मारे-
भ्यः पुञ्जिष्टेभ्यो ह्रीप्याय नी-
प्याय किठं०शिलायैलवृदाः शूकारा-
य शूकृताय चराचरेभ्यः पारावता-
न्गोलत्तिकाऽऽखुरजगरो ऽत्रपन्न्य-
वो दाक्षायणा ऽआयुधठं० सुरामं बृ-
हस्पतिर्व्वनस्पतिर्न्नराशठं०सः सुरा-

# भिन्नरिष्ठायै ॥ ३७ ॥

वायुरित्यादीनि पदानि नावगृह्यन्ते। वायुर्यथा (१) वायुः पूषा स्वस्तये। असजातो यथा (२) यमसजातो निचखान। समुद्रं यथा (३) समुद्रं गच्छ स्वाहा। अहोरात्रे यथा (४) अहोरात्रे पार्श्वे। विश्वानरो यथा (५) अग्नौ विश्वानराय। विश्वाहा यथा (६) विश्वाहा शर्म यच्छतु। आग्रयणो यथा (७) आग्रयणोऽसि। असपत्ना यथा (८) असपत्नाः समनसस्करत्। गोधा यथा (९) गोधा कालका। गोधूमा यथा (१०) गोधूमाश्च मे। आशुशुक्षणिर्यथा (११) त्वमाशुशुक्षणिः। न्यग्रोधो

---

(१) ३३ । ४४ ॥
(२) ५ । २३ ॥
(३) ६ । २१ ॥
(४) ३१ । २२ ॥
(५) ३३ । २३ ॥
(६) १७ । ४८ ॥
(७) ७ । २० ॥
(८) ७ । २५ ॥
(९) २४ । ३५ ॥
(१०) १८ । १२ ॥
(११) ११ । २७ ॥

यथा (१) न्यग्रोधश्चमसैः॑ऽ। पुरोडाशो यथा (२) पचन्पुरोडाशान् । ग्रावणेभिर्यथा (३) ग्रावणेभिः । सजोषसः । अशीतम यथा (४) अग्नेऽदब्धायोऽशीतम । तस्करा यथा (५) तस्कराँ२॥ऽ उत । मस्मसा यथा (६) सर्वन्तम्मस्मसा कुरु । अश्वत्थे यथा (७) अश्वत्थे वो निषदनम् । उपस्तिर्यथा (८) उपस्तिरस्तु सोऽस्माकम् । माकिर्यथा (९) अग्ने माकिष्टे व्यथिः । विश्वामित्रो यथा । (१०) विश्वामित्रऽऋषिः । गोपाय्यथा(११) गोपास्तस्य दीदिवम् । प्रउगँय्यथा (१२) प्रउगमुक्थमव्यथायै । अङ्गानि य-

---

(१) २२ । १४ ॥
(२) २१ । ५९ ॥
(३) १२ । ५० ॥
(४) २ । २० ॥
(५) ११ । ७७ ॥
(६) ११ । ७९ ॥
(७) ११ । ७९ ॥
(८) ११ । १०१ ॥
(९) १३ । ११ ॥
(१०) १३ । ५७ ॥
(११) ३ । २३ ॥
(१२) १५ । ११ ॥

था (१) अङ्गानि च मे । कक्षीवन्तँय्यथा (२) कक्षीवन्तँय्यऽऔशिजः । अदधाद्यथा (३) अश्वं ब्रामनृतेऽदधात् । पवीरवद्यथा (४) लाङ्गलं पवीरवत् । नीहारेण यथा (५) नीहारेण प्रावृता । द्वे पदे अनन्तर्हिते यथा (६) घनाघनःऽ क्षोभणः (७) इन्द्रान्न्याहङ् । द्वे पदे यथा (८) सिन्धोरिव प्राध्वने शूघनासः । कुयवँय्यथा (९) कुयवञ्च मे । कुचरो यथा (१०) मृगो न भीमः कुचरो गिरिष्ठाःऽ। प्रियङ्गवो यथा (११) प्रियङ्गवश्च मे । नीवारा यथा (१२) नीवाराश्च मे । एकादश यथा (१३) एकादश च मे ।

---

(१) १८ । ३ ॥
(२) ३ । २९ ॥
(३) १९ । ७७ ॥
(४) १२ । ७१ ॥
(५) १७ । ३१ ॥
(६) १७ ३३ । अनन्तर्हिते द्वे पदे नावगृह्येते ॥
(७) १६ । ८१ । अत्रापि तथैव बोध्यम् ॥
(८) १७ १४ । अस्मिन्नपि तथा ॥
(९) १८ । १० ॥
(१०) ५ । २० ॥
(११) १८ । १२ ॥
(१२) इदमपि तथैव ॥
(१३) १८ । २४ ॥

षोडश यथा (१) षोडश च मे । चन्द्रमा यथा (२) चन्द्रमा ऽअप्स्व । आयुवो यथा (३) आयुवो नाम । व्याघ्रा यथा (४) व्याघ्रा हेतिः । अनड्वान्यथा (५) अनड्वानधोरामौ । गविष्ठिरो यथा (६) गविष्ठिरो नमसा । कपर्द्दिने यथा (७) नमः कपर्द्दिने च पुलस्तये । द्वे पदे यथा (८) निषङ्गिणे । (९) कुलालेभ्यः । (१०) कर्म्मारेभ्यः । द्वे पदे अनन्तर्हिते यथा (११) नमः कुलालेभ्यः । कर्म्मारेभ्यः । पुञ्जिष्ठे यथा (१२) पुञ्जिष्ठेभ्यश्च । द्रीप्याय । यथा (१३)

(१) १८ । २५ । 'वर्णसङ्ख्येऽन्यतरत' इति विकल्पविधायकशास्त्रेणावग्रहः प्राप्तः षट्त्रिंशत्सप्तत्रिंशदङ्कयोरुदाहरणयोः परन्तु तस्यापवादभूतमिदं सूत्रमिति ग्रन्थकाराणामाशयः ॥

(२) ३३ । ९० ॥

(३) १८ । ३९ ॥

(४) १५ । १७ ॥

(५) २९ । ५९ ॥

(६) १५ । २५ ॥

(७) १६ । ४३ ॥

(८) १६ । २० ॥

(९) १६ । २७ ॥

(१०) इदमपि तथा ॥

(११) तथा ॥

(१२) इदमपि तथा ॥

(१३) १६ । ३१ ॥

ह्रीप्यांय च । नीप्याय यथा (१) नीप्यांय च । किंठ॰शिलाय यथा (२) किंठ॰शिलांय च । ऐलब्दा यथा (३) ऐलब्दा ऽआंयुर्युध॑ । शूकाराय यथा (४) शूकाराय स्वाहा शूकृताय । चराचरेभ्यो यथा (५) चराचरेभ्यः स्वाहा । पारावतान्यथा (६) अह्ने पारावतान् । गोलत्तिका यथा (७) गोलत्तिकां ते॑ऽप्सरसाम् । आखुर्य्यथा (८) आखुस्ते॑ पशुः । अजगरो यथा (९) अजगरो व्वसूनाम् । विपन्व्यवो यथा (१०) तद्द्विप्रांसो व्विपन्व्यवं॑ । दाचायणा यथा (११) यद्दाबध्नन्दाचायणाः । आयुधंय्यथा (१२) परमे व्वृत्त ऽआयुधन्निधाय । सुरामंय्यथा (१३) यत्सुरामं॑-

(१) १६ । ३७ ॥
(२) १६ । ४३ ॥
(३) १६ । ६० ॥
(४) २१ । ८ ॥
(५) २२ । २९ ॥
(६) २४ । २५ ॥
(७) २४ । ३७ ॥
(८) ३ । ५७ ॥
(९) २४ । ३८ ॥
(१०) ३४ । ४४ ॥
(११) ३४ । ५२ ॥
(१२) १६ । ५१ ॥
(१३) १० । ३४ ॥

व्यपिबः । बृहस्पतिर्यथा (१) बृहस्पते ऽअति य-त् । वनस्पतिर्यथा (२) वनस्पतिः शमिताद्देवः । नराशंसो यथा (३) नराशंसस्य महिमानम् । सुरभिर्यथा (४) यऽईमाहुः सुरभिः । नरिष्टायै यथा (५) नरिष्टायै भीमलम् । यैश्च हेतुभिरेतानि पदानि नावगृह्यन्ते तान्हेतूनन्यपदव्याजेन विचिख्यासुराचार्यो वक्ष्यमाणसूत्रैर्वक्ष्यति । येषु च पदेषु वक्ष्यमाणहेतवो न सन्ति ते जातिवचनाः प्रत्येतव्याः । यथा (६) गोधूमपारावतादयः ॥

## उत्तम्भनादीन्न्यादिसंशयात् ॥ ३८ ॥

उत्तम्भनादीनि पदानि आदिसंशयान्नावगृह्यन्ते । यथा (७) वरुणस्योत्तम्भनमसि । (८) उत्त्याय

(१) २६ । ३ ॥
(२) २९ । ३५ ॥
(३) २९ । २७ ॥
(४) २५ । ३५ ॥
(५) ३० । ६ ॥
(६) २७ । १२ ॥
(७) ४ । ३६ ॥
(८) ११ । ६४ ॥

बृहती भव । (१) उत्त्विताय स्वाहा । एतानि त्रीणि पदान्युदाहरणानि । उत्पूर्वपदानि स्तम्भेत्युत्तरपदं प्रथममुदाहरणम् । तिष्ठत्युत्तरपदे उत्तरे तत्रो "दः स्थास्तम्भोः पूर्वस्ये"ति सकारस्य पाणिनिः पूर्वरूपतां विदधाति । अन्ये तु सकारलोपं विदधति । अतउत्तरपदस्यादिसंशयादेतानि पदानि नावगृह्यन्ते । यथैतान्येवमन्यान्यपि द्रष्टव्यानि ॥

## विश्वौजाइत्यन्न्यायसमासात् ॥३९॥

विश्वौजाइत्येतत्पदमन्यायसमासान्नावगृह्यते । विश्वौजा इति प्राप्ते यथा (२) विश्वौजाः । इन्द्रोऽसि विश्वौजाः ॥

## दित्यौही तुर्यौही पष्ठौही हृदयौपशेनेति च ॥ ४० ॥

एतानि च पदान्यन्यायसमासान्नावगृह्यन्ते । अत्र च 'उवर्णओकार'मिति ओकारे प्राप्ते औकारोऽन्यायसमासजः । (३) ॥

---

(१) २२ । ८ ॥

(२) १० । २८ ॥

(३) अस्मिन्सूत्रोक्तोदाहरणाङ्का द्रष्टव्याः । १८ । २६ ॥ द्वितीयोदाहरणं तथैव ॥ १८ । २७ ॥ २५ । ८ ॥

दुष्टरो विष्टरो विष्टपो विष्ट-
म्भो विष्टम्भनीम् ॥ ४१ ॥

दुष्टरइत्यादीनि पदानि नावगृह्यन्ते । अत्राचार्य्येण कारणन्नोपन्यस्तम् । तत्र तावद्दुष्टरपदं धातुसंशयान्नावगृह्यते । दुरुपसर्गः पूर्वंपदन्तरतेः स्तृणातेर्वोत्तरपदमतो धातुसंशयान्नावगृह्यते । विष्टरादीनि तु अन्यायषत्वसंहितानि । अतः षत्वागमोऽपि पदकारैर्न्न कृतः । (१) ॥

ऊवध्यमुगणाऽउखऽइष्कृतिरिष्क-
र्त्तारमुदरमित्युपसर्गैकदेशलो-
पात् ॥ ४२ ॥

एतानि पदान्युपसर्गैकदेशलोपान्नावगृह्यन्ते । तत्र इष्कृतिः । इष्कर्त्तारमित्यनयोः पदयोर्निरुपसर्गस्य नकारलोपान्नावग्रहः शेषाणामुद उपसर्गस्यान्त्यवर्णलोपान्नावग्रहः । ऊवध्यँयथा (२) ऊवध्याँवातँ सब्वन्तदारात् । उगणा यथा (३) नमऽउगणाभ्यः ।

---

(१) ९ । ३७ ॥ काण्वमाध्यन्दिनास्तु षत्वागमार्थमवगृह्णन्ति । विष्टरादीनि तु न । १४ । २३ ॥ १४ । ९ ॥ १४ । ५ ॥ इमे सूत्रोक्तोदाहरणाङ्का ज्ञेया इति ॥

(२) १९ । ८४ ॥

(३) १६ । २४ ॥

उखे यथा (१) अभीन्धतामुखे । दुष्कृतिर्यथा (२) दुष्कृतिर्न्नाम वः । दुष्कर्त्तारँय्यथा (३) दुष्कर्त्तारमध्वरस्यं । उदरँय्यथा (४) पृष्टीर्म्मे राष्ट्रमुदरम् ॥

## सँस्कृतठँ० सँस्कृतिर्म्माँस्पचन्न्याः पूँश्चलूमित्त्यनुनासिकोपधत्वात् ॥ ४२ ॥

एतानि पदानि अनुनासिकोपधत्वान्नावगृह्यन्ते । अत्र च 'अञ्चे पकारादुकारोदया'दित्यादिभिः सूत्रैरुपधानुनासिकत्त्वमुक्तम् । पक्षे चानुस्वारः, अतो वाजसनेयिनामुपधानुनासिकत्वान्नावग्रहः । काण्वानां तु वक्ष्यमाणसूत्रेण । संस्कृतँय्यथा (५) तन्नौ सँस्कृतम् । संस्कृतिर्य्यथा (६) सा प्प्रथमा सँस्कृतिः । मांस्पचन्या यथा (७) माँस्प्पचन्न्याऽऽउखायाःऽ । पूँश्चलूँय्यथा (८)

(१) ११ । ६१ ॥
(२) १२ । ७४ । इदमुदाहरणं पदपाठस्थं बोध्यम् ॥
(३) १२ । १०१ । इदमपि तथैव ॥
(४) २० । ८ ॥
(५) ४ । ३४ ॥
(६) ७ । १४ ॥
(७) २५ । ३६ ॥
(८) ३० । २० ॥

ब्रध्नाय पूꣳश्चलूꣳ हसाय ॥

अनुस्वारागमत्वादित्येके ॥ ४४ ॥

अनुस्वारागमत्वाद्धेतोरेवैक आचार्या एतान्येव पदानि नावगृह्णन्ति । सꣳस्कृतम् । संꣳस्कृतिः । माꣳस्पचन्न्याः । पूꣳश्चलूम् । काण्वादीनामयं पाठो बोध्यः ॥

परीत्तोऽवत्तानाꣳ सुविताय सग्ध्धिरिति च ॥ ४५ ॥

एतानि पदानि यथायोगं कारणैर्नावगृह्यन्ते । तत्र तावत्परीत्तः । अवत्तानाम् । सग्धिः । एतानि धात्वेकदेशलोपान्नावगृह्यन्ते । सुवितायेत्येतत्पदं सुइताय सुगताय वा गृह्यते । सुताय प्रजायै वा इति धातुसंशयान्नावगृह्यते । यथा (१) श्येने परीत्तोऽअचरत् । (२) अङ्गादङ्गादवत्तानाम् । (३) अग्निः सुदर्चः सुविताय । (४) सग्धिश्च मे सपीतिश्च मे । इति शब्दोऽन्यपदप्रदर्शनार्थः । यथैतानि पदानि एतैर्हेतु-

(१) ६ । ६ ॥
(२) २१ । ४३ ॥
(३) १५ । २७ ॥
(४) १८ । ९ ॥

भिन्नावगृह्यन्ते । एवमन्यान्यपि द्रष्टव्यानि । तथा चोक्तम् । आदिमध्यान्तलुप्तानि समासान्यायभाञ्जि च । नावगृह्णन्ति कवयः पदान्यागमवन्ति च ॥१॥ (१) ॥

## वृद्धं वृद्धिः ॥ ४६ ॥

वृत्त्युक्तार्थम् ॥

## इति कात्यायनकृतौ प्रातिशाख्यसूत्रे पञ्चमोऽध्यायः ॥

इत्यानन्दपुरवास्तव्यवज्रटसूनुनोव्वटेन कृते मातृमोदाख्ये प्रातिशाख्यभाष्ये पञ्चमोऽध्यायः समाप्तः ॥

## अनुदात्तमाख्यातमामन्त्रितवत् ॥ १ ॥

'स्वरितवर्ज्जमेकोदात्तम्पद' मित्यत्र नामाख्यातोपसर्गनिपातानां सामान्येन स्वरोऽभिहितः । यथा 'नो नौ मे मर्त्य' इत्यादिभिर्नाम्नां विशेषस्वरोऽभिहितः ।

(१) परीत्त इत्यत्र परि उपसर्गको दाण् धातुः । परिदत्तइत्यर्थः । अवत्तानामित्यत्र च अवउपसर्गपूर्वको दाण् दाने धातुः । अवदत्तानामित्यर्थः । सुवितप्येत्यत्र षूङ् प्राणिगर्भविमोचने । षु प्रसवैश्वर्ययोर्वा । प्रसवित्रे । ऐश्वर्याय वेत्यर्थः । सुहुतभ्य वा यदाऽर्थस्तदा हु दानादानयोः । ओहाक् त्यागे धातुः । सग्धिरित्यत्र च सजग्धिरिति प्राप्ते जयिक्षये ज्ञाधातुर्वा जनिप्रादुर्भावे वा । एषूदाहरणेषु धातुसंशयान्नावगृह्यन्ते महर्षयः । एतानि सर्वाण्युदाहरणानि पदाधिकारत्वात्पदपाठस्थानि बोध्यानीति ॥

यथा 'वा च कमुचिदि'त्यादिसूत्रेण निपातानां च विशेषस्वरोऽभिहितः । तथा नामाख्यातोपसर्गाणां विशेषस्वरोऽभिहितः । अतस्तत्प्रतिपादनार्थमाह । 'अनुदात्तमाख्यातमामन्त्रितव'दिति । आमन्त्रितपदवदनुदात्तमाख्यातं पदं भवति । यैरेव कारणैरनुदात्तमामन्त्रितं भवति तैरेव कारणैराख्यातमपीत्यर्थः । 'पदपूर्वमामन्त्रितमनानार्थे पादादा' वित्यामन्त्रितस्यानुदात्तत्वमुक्तमिहाऽपि तथैव भवति । एतदुक्तं भवति पूर्वंपदमाख्यातमनुदात्तम्भवति तच्च नानार्थे न भवति । अपादादौ च भवति पदपूर्वम्भवति (१) । तद्यथा । मा वस्तेन ऽईशत । (२) गोपतौ स्यात । अनानार्थइति किम् । (३) पाहि यज्ञं पाहि यज्ञपतिम् । अपादादाविति किम् । (४) ऋद्ध्यामा तऽओहैः । (५) सुषाव सोममद्रिभिः ॥

## उपसर्गउपसर्गे ॥ २ ॥

उपसर्गोऽनुदात्तो भवत्युपसर्गे प्रत्यये । एतच्च समा-

---

(१) १ । १ ॥
(२) इदमपि तथा ॥
(३) २ । ६ ॥
(४) १५ । ४४ ॥
(५) १९ । २ ॥

सपदे एव द्रष्टव्यम् । यथा (१) सम्प्रचच्यंवद्धम् । (२) सम्प्रयाताग्ने पथः । अत्र समुपसर्ग उपसर्गोऽनुदात्तः। उपसर्ग इति किम् । (३) प्रयतिः । प्रसितिः ॥

## आम्रेडिते चोत्तरः ॥ ३ ॥

आम्रेडिते च पदे उत्तर उपसर्गोऽनुदात्तो भवति । यथा (४) सᳲ समिति सम् । सम् । (५) उपोपेत्युप । उप । अधस्तनयोगापवादः ॥

## कृदाख्यातयोश्चोदात्तयोः ॥ ४ ॥

उदात्ते कृत्प्रत्यये चाख्याते परभूते उपसर्गोऽनुदात्तो भवति । कृति भवति यथा (६) स्वः । आ । भरन्तः । (७) विभ्राजमानः सरिरस्य मध्ये । आख्याते भवति यथा (८) ये चार्वते पचनᳲ सम्भर-

(१) १५ । ५३ ॥
(२) इदमपि तथा ॥
(३) १८ । १ । तथा ॥
(४) ६ । १८ ॥
(५) ३ । ३४ ॥
(६) १५ । ४४ ॥
(७) १५ । ४७ ॥
(८) २५ । २९ ॥

न्ति । (१) यद्‌ वध्यमुदरस्यापवाति । छदाख्यातयो-रिति किम् । (२) अनुगावोऽनु भग॑÷ कनीनम् । उदात्तयोरिति किम् । (३) प्रयति॑ः । प्रसिति॑ः । (४) धिवाꣳ घृग्मान्परि दधे । यत्र चानुदात्तत्वमुपसर्गस्य न भवति । तत्र पृथक् पदत्वमपि भवति । 'स्वरितवर्ज्जमेकोदात्तं पद' मिति परिभाषितत्वात् ॥

## नाभ्येकाक्षरश्च स्वरसन्धेयेऽक्कृति ॥ ५ ॥

अभ्युपसर्गएकाक्षरश्चोपसर्गः स्वरात्मके उपसर्गे स्वरसन्धेये चाक्कृति प्रत्यये नानुदात्तो भवति । अभेः स्वरात्मके भवति यथा (५) अभि । आ । वर्त्तस्व । अभेः स्वरसन्धेये अक्कृति भवति यथा (६) याभि॑÷ । मित्त्रावरुणौ । अभि । असिञ्चन् । (७) अभि । ऐ-क्षेताम् । मनसा । एकाक्षरस्य स्वरात्मके भवति

(१) २५ । ३३ ॥
(२) २९ । १९ ॥
(३) १८ । १ ॥
(४) ४ । २ ॥
(५) १२ । ९४ ॥
(६) १० । १ ॥
(७) ३२ । ७ ॥

यथा (१) वि । आ । अकरोत् । (२) नि । अ-सीदत् । एकाक्षरस्य स्वरसन्धेयेऽक्रति भवति यथा (३) सत्यधर्म्मा वि आनट् । (४) यत् । पुरुषम् । वि । अदधुः । अधस्तनयोगापवादः ॥

## आ पूतजातयोः ॥ ६ ॥

आ इत्ययमुपसर्गः पूतजातयोः प्रत्यययोर्न्नानुदात्तो भवति । यथा (५) आ पूतः एमि । (६) आ जातो विश्वा ॥

## अधिनिप्रप्रति श्रिताऽक्षिणभानवपचतेषु ॥ ७ ॥

अधि नि प्र प्रति एते उपसर्गाः श्रित अक्षिण भानव पचत एषु प्रत्ययेषु नानुदात्तो भवति । अधि यथा (७) अधि श्रिताः । नि यथा (८) विश्वान्यक्षि-

(१) १९ । ७५ ॥
(२) १७ । १६ ॥
(३) १२ । १०२ ॥
(४) ३१ । १० ॥
(५) ४ । २ ॥
(६) १२ । १३ ॥
(७) २० । ३२ ॥
(८) १७ । १६ ॥

र्थम् । प्र यथा (१) प्रभानवः । प्रति यथा (२) प्र पचता गृभीषत ॥

उज्जेषमावर्त्तऽआपनीफणत्सनिष्यदत्सँव्वतं प्रयाणꣳ सञ्चरन्तꣳ सꣳरभद्ध्वं प्रसितिँव्विक्रमस्वेत्येतेष्वनु ॥ ८ ॥

उज्जेषम्, आवर्त्ते, आपनीफणत्, सनिष्यदत्, सँव्वतम्, प्रयाणम्, सञ्चरन्तम्, सꣳरभद्धम्, प्रसितिम् । व्विक्रमस्व, एतेषु प्रत्ययेषु अन्वित्ययमुपसर्गो नानुदात्तो भवति । उज्जेषँय्यथा (३) अग्नीषोमयोरुज्जितिमनूज्जेषम् । आवर्त्ते यथा (४) सूर्य्यस्यावृतमन्वावर्त्ते । आपनीफणद्यथा (५) पथामङ्काꣳस्यन्वापनीफणत् । सनिष्यदद्यथा (६) अनु सꣳसनिष्यदत् । सँव्वतँय्यथा (७) वरिष्ठामनु सँव्वतम् । प्र-

(१) १५ । २४ ॥
(२) २१ । ६० ॥
(३) २ । १५ ॥
(४) २ । २७ ॥
(५) ९ । १४ ॥
(६) इदमपि तथैव ॥
(७) ११ । १२ ॥

याणँय्यथा (१) अनु प्रयाणमुषसो विराजति । सञ्च-रन्तँय्यथा (२) समानँय्योनिमनु सञ्चरन्तम् । सꣳ-रभङ्घँय्यथा (३) इन्द्रꣳ सखायोऽअनु सꣳरभध्वम् । प्रसितिँय्यथा (४) तृष्ट्वीमनु प्रसितिन्द्रूणानः । वि-क्रमस्व यथा (५) पृथिवीमनु विक्रमस्व ॥

## ओपप्रोदात्ते ॥ ९ ॥

आ उप एतौ प्रोपसर्ग्गे उदात्ते प्रत्यये नानुदात्तौ भवतः । आ यथा (६) आ प्रयातु परावतः । (७) आ प्रयच्छदध्विणात् । उप यथा (८) उप प्रयाहि । (९) उप प्रागाच्छसनम् ॥

## अभिप्रेह्युपसम्प्रयातप्रत्त्यातनु-ष्ट्वासुपाव ॥ १० ॥

(१) १२ । ३ ॥
(२) १३ । ५ ॥
(३) १७ । ३८ ॥
(४) १३ । ९ ॥
(५) १२ । ५ ॥
(६) १८ । ७२ ॥
(७) ५ । १९ ॥
(८) ३४ । १९ ॥
(९) २९ । २३ ॥

अभिप्रेहि उपसम्प्रयात प्रत्यातनुष्व आसुषाव ए-
ते चोपसर्गा यथागृहीता नानुदात्ता भवन्ति । य-
था (१) अभि प्रेहि निर्दह । (२) उप सम्प्रयाताग्ने
पथः । (३) उदग्ने तिष्ठ प्रत्यातनुष्व । (४) आ
सुषाव सोममद्रिभिः । (५) ॥

## प्रकृत्याऽऽख्यातमाख्याततपूर्व्वम् ॥ ११ ॥

यदुक्तम'नुदात्तमाख्यातमामन्त्रितव'दिति तस्याय-
मपवादः । आख्यातपूर्वमाख्यातं प्रकृतिस्वरं भवति ।
उदात्तपूर्वं भवति यथा (६) पिबन्तु । मदन्तु । व्यन्तु ॥

## उदात्ताच्चामन्त्रितादनन्तरम् ॥१२॥

उदात्तस्वरान्नामन्त्रितपदादनन्तरमाख्यातं पदं प्र-
कृतिस्वरं भवति । यथा (७) अग्ने पवस्व (८) होत-

(१) १७ । ४४ ॥
(२) १५ । ५३ ॥
(३) १३ । १२ ॥
(४) १९ । २ ॥
(५) इमान्युदाहरणानि 'सठं०हिताया' मित्यधिकारसूत्रबलात्संहितोदाहरणानि बोध्यानीति ॥
(६) २१ । ४२ । इमान्युदाहरणत्रयाण्येकाध्यायस्थानि ॥
(७) ८ । ३८ ॥
(८) २१ । २८ ॥

र्य्यंज ॥

## एकान्तरादपि ॥ १३ ॥

एकेन पदेन व्यवहितादप्यामन्त्रितपदात्परमाख्यातं प्रकृतिस्वरं भवति । यथा (१) ब्रह्मन्त्वश्वं भन्त्स्यामि । (२) देवाः । सधस्थाः । विद । रूपम् । अस्य । अपिशब्देन विकल्पो ज्ञेयः । क्वचिद्भवति क्वचिन्न भवति । यथा । (३) इडे । आ । इहि ॥

## यद्वृत्तोपपदाच्च ॥ १४ ॥

यदो वृत्तं यद्वृत्तं सर्वविभक्त्यन्तं सर्वप्रत्ययान्तं च गृह्यते । यत् । यम् । येन । यतः । यथा । यत्र । यदि । इत्यादि । यद्वृत्तोपपदात्परमाख्यातं पदं प्रकृत्या भवति । (४) यमाज्जर्ग्मानवस्तीर्णबर्हिषम् । (५) येनऽऋषयस्तपसा सत्रमायन् । (६) यतो जातोऽअरोच-

(१) २२ । ४ ॥
(२) १८ । ६० ॥
(३) ३ । २८ ॥
(४) १५ । ४९ ॥
(५) १५ । ४९ ॥
(६) ३ । १४ ॥

था(ः । (१) यथाऽयँव्वायुरेजति । (२) यत्रऽऋषयो ज-
जग्मुःऽ । (३) यदि दिवा यदि नक्तमेनाᳬंसि चकृ-
म । अत्र सर्वत्र यदि यद्वृत्तस्याख्यातपदेन सह स-
म्बन्धो भवति तदेवाख्यातपदं विक्रियते न तु सन्नि-
धिमात्रेण । यथा (४) यदेकस्याधिधर्म्मणि तस्यावय-
जनमसि । तथा चोक्तम् । यस्य येनार्थसम्बन्धो दूर-
स्थस्यापि तस्य तत् ॥ अर्थतो (५) ह्यसमर्थानामान-
न्तर्य्यमकारणमिति ॥ १ ॥

## हेऽश्च ॥ १५ ॥

हिशब्दाच्च परमाख्यातं पदं प्रकृत्या भवति । य-
था (६) आपो हिष्ठा मयोभुवः ॥

## उत्तरेऽपि ॥ १६ ॥

उत्तरेऽपि हिशब्दे आख्यातं पदं प्रकृत्या भवति ।
यथा (७) इन्दवो वा मुशन्ति हि ॥

---

(१) ८ । २८ ॥

(२) १८ । ५८ ॥

(३) २० । १५ ॥

(४) २० । १७ ॥

(५) असमानानामिति 'ग' 'घ' पुस्तकपाठः ॥

(६) ११ । ५० ॥

(७) ७ । ८ ॥

## नेत् ॥ १७ ॥

नेदित्यस्मान्निपातसमाहारात्परमाख्यातपदं प्रकृतिस्वरं भवति । यथा (१) एषनेत्त्वदपचेत यातै ॥

## समनसस्करत् ॥ १८ ॥

करदित्येतदाख्यातं पदं समनस इत्येतत्पूर्वं प्रकृत्या भवति । यथा (२) असपत्नाःऽ समनसस्करत् । समनसइत्येतत्पूर्वमिति किम् । (३) सुत्वो भेषजं करत् ॥

## द्वयोः पूर्व्वर्ठ० समुच्चये ॥ १९ ॥

द्वयोराख्यातयोः समुच्चयेऽर्थे वर्त्तमानयोः पूर्वमाख्यातं पदं प्रकृत्या भवति । समुच्चयो नाम द्वयोराख्यातयोरेकस्मिन्नर्थे समावेशः । यथा (४) धर्म्म च स्त्यःऽ । वर्म्म च स्त्यः । (५) भ्रम् । च व्वद्व परि च व्वद्व ॥

---

(१) २ । १७ ॥
(२) ७ । २५ ॥
(३) २१ । २२ ॥
(४) ११ । २७ ॥
(५) ८ । २२ । इमान्युदाहरणान्यपि पदपाठस्थानि बोध्यानि ॥

## वा विचारणे ॥ २० ॥

द्वयोराख्यातयोर्विचारणेऽर्थे वर्त्तमानयोः पूर्वमाख्यातम्प्रकृत्या भवति, वा शब्देन चेदाख्यातयोर्योगो भवति । संहितायां प्रायशउदाहरणानि न लभ्यन्ते । रूपोदाहरणानि तु दीयन्ते । देवदत्तो भुङ्क्तां वा यज्ञदत्तो वा भुङ्क्ताम् ॥

## अहविनियोगे ॥ २१ ॥

द्वयोराख्यातयोर्विनियोगेऽर्थे वर्त्तमानयोः पूर्वमाख्यातं प्रकृत्या भवति । अहशब्देन चेदाख्यातयोर्योगो भवति । विनियोगो नाम द्वयोः पुरुषयोरेकस्मिन्कर्मणि एकस्य पुरुषस्य सम्बन्धः । अन्यस्मिन्कर्मण्यपरस्य सम्बन्धः । रूपोदाहरणन्दीयते । यथा 'देवदत्तोऽह ग्रामं गच्छतु' यज्ञदत्तोऽह गाः पालयतु ॥

## एवावधारणे ॥ २२ ॥

द्वयोराख्यातयोरवधारणेऽर्थे वर्त्तमानयोः पूर्वमाख्यातं प्रकृत्या भवति । एवशब्देन चाख्यातयोर्य्योगो भवति । अवधारणं नाम द्वयोः कर्मणोर्द्वयोश्च कर्त्रोरेकस्मिन्कर्म्मण्येकः कर्त्ताऽवध्रियते परस्मिन्नन्यः । यथा देवदत्तएव ग्रामं गच्छतु, यज्ञदत्त एव भुङ्क्ताम् ॥

## उपपदाप्रयोगेऽपि च ॥ २३ ॥

च वा इ अह एव एतानि च प्रभृतीनि यान्युपपदानि उक्तान्याख्यातस्य विकारीणि तेषामर्थो यदि कथं चिदवगम्यते। तथा चोक्तम्। उपसर्गात्परो यस्तु पदादिरपि दृश्यते। उच्चस्थानास्थितो यत्र गुरुस्तत्रैव कारयेत्। इति तदा एतेषामुपपदानामुच्चारणेऽपि आख्यातं न विक्रियते। तथा रूपोदाहरणम्। सुखं भवथ। पवित्रकं भवथ। चशब्दोऽत्र लुप्तः। इत्थं भूतानि छन्दस्युदाहरणानि द्रष्टव्यानि॥

## परोपापावप्रतिपर्य्यन्न्वप्यध्या-ङ्प्रसन्निर्दुरुन्निविस्वभि॥ २४॥

परा उप अप अव प्रति परि अनु अपि अधि आ-ङ् प्र सम् निर् दुर् उद् नि वि सु अभि एते विंशतिरुपसर्गाः प्रकृतिस्वरा भवन्ति। अस्य चोत्सर्गस्य 'उपसर्ग उपसर्गे' इत्यादिकः पुरस्तादपवादो द्रष्टव्यः। प्रकृतिस्वरस्तु व्याकरणपरिपठितोऽत्र गृह्यते। तथा च तत्सूत्रम्। "निपाता आद्युदात्ता." "उपसर्गाश्चाभिवर्ज्ज"मिति। तथा चोक्तम्। एकारोऽथ चकारो वा रेफो दीर्घपरेषु च। समुपसर्गेत्येतद्गुरुरेव न संशयः॥ १॥ उक्तानामुपसर्गाणामनित्यमुपसर्गगुरु। यथा (१) अनु योजाग्न्विन्द्र ते हरी। विं-

(१) ३। ५३। अत्र कश्चिद्विशेष उक्तो लघुमाध्यन्दिनीयशिक्षायाम्। उपसर्गपरो

प्रतेरुपसर्गाणामुञ्चा एकाक्षरा नव । आद्युदात्ता
प्रतेषामन्तोदात्तस्त्वभीत्ययम् ॥ २ ॥

द्विस्स्पर्शम् ॥ २५ ॥

द्वौ स्पर्शौ यस्मिन्पदे तद्विस्पर्शं पदम् । अधिकारस्सू-
त्रमेतत् ॥

त्वेत्तु त्वित्त्वाऽस्मद्य्रूक्पात्तमभि
त्त्यम्मृत्तिकाद्ध्वन्दात्तंठ॰समावव-
र्त्यृद्धिर्वृद्धिरराद्ध्याऽर्द्धशुद्धबुद्धन-
क्त्कं निषण्णस्विन्नान्नसन्ना-
ड्ध ॥ २६ ॥

एतेषु पदेषु द्वौ स्पर्शौ भवतः । वेत्तु यथा (१) प्र-
ति त्वा पर्वती वेत्तु । द्वौ तकारौ संयोगः । त्वित्त्वा
यथा । (२) त्वित्त्वा गातुमित । द्वौ तकारौ वकारश्च

यस्तु पदादिरपि दृश्यते । ईषत्स्पृष्टा यथा विद्यात्पदच्छेदात्परा मवेदिति १ । यदेव लक्षणं यस्य वकारस्यापि तद्भवेत् । इति । सर्वेषूपसर्गेषु परेषु यकारस्य जकारसदृशोच्चारणम् । अन्तस्थवकारस्य च द्वित्ववद्गुरूच्चारणं भवति परन्तु उपसर्गद्वयं विहाय भवति तदुक्तममरेशेन स्वकृतवर्णरत्नप्रदीपिकायां शिक्षायां "अनु योजान्न्विन्द्र ते तु उप युञ्ज्ञां विना तथा" । इति ॥

(१) १ । १९ ॥
(२) २ । २१ ॥

संँय्योगः ॥ अस्मद्र्यक् यथा (१) अस्मद्र्यग्ग् वावृधे। पार्वँय्यथा (२) आसन्ना पार्वंञ्जनयन्त देवाः। द्वौ तकारौ रेफस्य सँय्योगः । अभित्त्यँय्यथा (३) अभि त्त्यन्देवम् । द्वौ तकारौ यकारस्य सँय्योगः, कृत्तिका यथा (४) अश्मा च मे कृत्तिका च मे । द्वौ तकारौ सँय्योगः । द्ध्वँय्यथा (५) व्विमुच्च्यद्ध्वमघ्न्या देवयानाः । दकारधकारौ वकारस्य सँय्योगः, दात्र्वँय्यथा (६) सोमस्य दात्त्रमसि स्वाहा । द्वौ तकारौ रेफस्य सँय्योगः । समावर्त्ति यथा (७) समावर्त्ति पृथिवी । रेफो द्वौ तकारौ सँय्योगः । वृद्धिर्य्यथा (८) सत्यस्य वृद्धिरसि । दकारधकारौ सँय्योगः । वृद्धिर्य्यथा (९) वृद्धञ्च मे वृद्धिश्च मे, दकारधकारौ संय्योगः । अराद्ध्यै यथा (१०) अराद्ध्याऽएदिधिषुः पतिम् । दकारधकारौ यकारस्य-

(१) ७ । ३९ ॥
(२) ७ । २४ ॥
(३) ४ । २५ ॥
(४) १८ । १३ ॥
(५) १२ । ७३ ॥
(६) १० । ६ ॥
(७) २० । १३ ॥
(८) ८ । ५२ ॥
(९) १८ । ४ ॥
(१०) ३० । ९ ॥

सँय्योगः । अर्द्धौ यथा (१) अन्तंश्च प॒राऽर्द्धश्चै॒ता मे॑ । रेफदकारधकाराः सँय्योगः, शुद्धो यथा (२) शु॒द्धवा॑लः स॒र्वशु॑द्धवाल॒ः । दकारधकारौ सँय्योगः । बुद्धो यथा (३) प्रबु॑द्धाय॒ स्वाहा॑ । दकारधकारौ सँय्योगः । नक्तँय्यथा (४) मधु॒ नक्त॑मु॒तोषसः॑ । द्वौ ककारौ तकारश्च सँय्योगः । निषण्णो यथा (५) निष॑ण्णाय॒ स्वाहा॑ । द्वौ णकारौ सँय्योगः । खिन्नो यथा (६) खि॒न्नः स्नातो मला॑दिव । द्वौ नकारौ सँय्योगः । अन्नँय्यथा (७) अन्न॑प॒तेऽन्न॑स्य । द्वौ नकारौ सँय्योगः । सन्नो यथा (८) स॒न्नः॒ऽ सिन्धु॑ः । द्वौ नकारौ सँय्योगः । 'स्वरात्सँय्योगादि'रित्यस्य प्रायशोऽपवादभूतमेतत्सूत्रम् ॥

## न क्षवृचिश्विसतयेऽम्यस्त्वेकम् ॥२७॥

क्ष वृ चि श्वि स त य एतेभ्यः परस्त्वशब्दो न द्वि-

---

(१) १७ । २ ॥
(२) २४ । ३ ॥
(३) २२ । ७ ॥
(४) १३ । २८ ॥
(५) २२ । ८ ॥
(६) २० । २० ॥
(७) ११ । ८३ ॥
(८) ८ । ५९ । इमान्युदाहरणानि सूत्रपठितानि महर्षिसंहितायां ज्ञातव्यानीति ॥

रुच्यते एकमेव व्यञ्जनं भवति । च्च यथा (१) चुत्रस्य योनिरसि । ह्र यथा (२) ह्रत्रँब्धेत् । चि यथा (३) चित्रं देवानाम् । श्वि यथा (४) श्वित्रऽआदित्यानाम् । स यथा (५) सत्रस्यऽऋद्धिः । त यथा (६) तत्र गच्छ । य यथा (७) यत्र पूर्वे परेताः । 'स्वरात्सँयोगादि'रित्यस्यायमपवादः । (८) ॥

## ईःध्याय वार्ध्रीनसोद्राश्च्श्चरा- इश्चेत् ॥ २८ ॥

ईध्याय वार्ध्रीनस उद्रः एते स्वर्गाः सँयोगादयो न द्विरुच्यन्ते । यद्द्व्यवचनाश्च भवन्ति । ईध्याय यथा (९) नमो वीध्याय च, धकाररेफौ यकारस्य सँयोगः । वार्ध्रीनसो यथा (१०) वार्ध्रीनसस्ते । रेफधकारौ रेफस्य

(१) १० । ८ ॥

(२) इदमपि तथा ॥

(३) ७ । ४२ ॥

(४) २४ । ३९ ॥

(५) ८ । ५२ ॥

(६) १३ । ३१ ॥

(७) इदमपि तथा ॥

(८) एतदप्यनुसारिणी अमरेशकृतवर्णरत्नप्रदीपिकाख्याशिक्षाकारिकापि । क्षत्रवृत्रस्तथा श्वित्रचित्रसत्रस्तथैव च । यत्र तत्र पदेष्वेषु व्यञ्जनं न द्विरुच्यते । इति ॥

(९) १६ । ३८ ॥

(१०) २४ । ३९ ॥

सँय्योगः । उद्रो यथा (१) अपामुद्रो मासाङ्कश्यपः। चरद्रथवचना इति किम् । (२) समुद्राय शिशुमारान् । अत्र समुद्रशब्देन पार्थिवः समुद्र उच्यते ॥

## उपोत्थित उत्तम्भनमुत्तभानोत्थायोत्थितायेति त्रीणि ॥२९॥

उपोत्थितः उत्तम्भनम् उत्तभान उत्थाय उत्थिताय एतेषु पदेषु त्रीणि स्पर्शाख्यानि व्यञ्जनानि भवन्ति। उपोत्थितो यथा (३) क्रयायोपोत्थितोऽसुरः । द्वौ तकारौ थकारश्च सँय्योगः । उत्तम्भनंय्यथा (४) वरुणस्योत्तम्भनम् । त्रयस्तकाराः सँय्योगः । उत्तभान यथा (५) दिवमुत्तभान तेजसा । त्रयस्तकाराः सँय्योगः । उत्थाय यथा (६) उत्थाय बृहती भव । द्वौ तकारौ थकारश्च सँय्योगः । उत्थिताय यथा (७) उत्थिताय स्वाहा । द्वौ तकारौ थकारश्च सँय्योगः ॥

---

(१) २४ । ३७ ॥
(२) २४ । २१ ॥
(३) ८ । ५५ ॥
(४) ४ । ३६ ॥
(५) १७ । ७२ ॥
(६) ११ । ६४ ॥
(७) २२ । ८ ॥

बर्हिरङ्ङ्क्ताम्भद्द्रेण पृङ्ङ्क्तं पङ्-ङ्क्तिः समङ्ङ्धि परिवृङ्ङ्धि पा-ङ्ङ्क्तामिति द्वावनुनासिकौ पूर्वा-वारपन्तीवर्ज्जमिति च ॥ ३० ॥

बर्हिरङ्क्ताम् भद्द्रेण पृङ्क्ताम् पङ्क्तिः समङ्धि परिवृङ्धि पाङ्क्तान् । एवं जातीयकेषु स्पर्शात्पूर्वौ द्वावनुनासिकौ ङकारौ भवतः । आरपन्तीशब्दं वर्जयित्वा । बर्हिरङ्क्ताँ यथा (१) समबर्हिरङ्क्ताम् । भद्द्रेण पृङ्क्ताँ यथा (२) सम्मा भद्द्रेण पृङ्ङ्क्ताम् । पङ्ङ्क्तिर्यथा (३) पङ्ङ्क्तिश्छन्दः । समङ्धि यथा (४) पर्यसा समङ्ङ्धि । परिवृङ्धि यथा (५) परिवृङ्ङ्धि हरसा । पाङ्क्तान्यथा (६) अन्तरिक्षाय पाङ्ङ्क्तान् । आरपन्तीवर्जमिति किम् (७) ऋतस्य सामन्त्सरमारपन्ती ॥

(१) २ । २२ ॥
(२) ९ । ४ ॥
(३) १४ । १७ ॥
(४) १३ । ४१ ॥
(५) इदमपि तथैवोदाहरणम् ॥
(६) २४ । २६ ॥
(७) २२ । २ । इमान्युदाहरणान्यार्षेय संहितायां बोध्यानीति ॥

## वृद्धँवृद्धिः ॥ ३१ ॥

इत्युक्तार्थम् ॥

## इति कात्यायनकृतौ प्रातिशाख्य सूत्रे षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

इत्यानन्दपुरवास्तव्यवज्जटसूनुनोव्वटेन कृते मातृमोदाख्ये प्रातिशाख्यभाष्ये षष्ठोऽध्यायः समाप्तः ॥६॥

---

## अथावसानानि ॥ १ ॥

अथ शब्दोऽधिकारार्थः । पदावसानान्यधिकृतानि वेदितव्यानि । पदान्तस्येतिकरणस्यादेश्च यः सन्धिः स उच्यतइति यावत् ॥

## कण्ठ्यस्वरमेकारेण परिगृह्णीयाप्लुतवर्जम् ॥ २ ॥

कण्ठ्यो ह्रस्वोऽकारो दीर्घश्चाकारः स्वरस्तमेकारेण परिगृह्णीयात्प्लुतमाकारं वर्ज्जयित्वा । यथा (१) यच्छन्तां पञ्च । पञ्चेति पञ्च । (२) द्रविणस्युर्व्विप-

---

(१) १ । ९ ॥
(२) ११ । ... ॥

न्त्ययां । व्विपन्न्ययेति विपन्न्ययां । प्लुतवर्ज्जमिति किम् । (१) व्विवेशा ३ इति विवेशा ॥

## ईवर्णमीकारेण ॥ ३ ॥

ईवर्णमीकारेण परिगृह्णीयात् । यथा (२) पश्च्न्पाहि । पाहीति पाहि । (३) अश्विना सूनृतावती । सूनृतावतीति सू । नृतावती ॥

## उवर्णँव्वकारेण ॥ ४ ॥

उवर्णं वकारेण परिगृह्णीयात् । यथा (४) तव द्युम्नान्न्युत्तमानि सन्तु । सन्त्विति सन्तु ॥

## औकारं च ॥ ५ ॥

औकारं च वकारेण परिगृह्णीयात् । यथा (५) अभि षिञ्चाम्यसौ । असाविव्यसौ ॥

## ह्रस्वकण्ठ्योपधं विसर्ज्जनीयान्तम-

---

(१) २३ । ४९ ॥
(२) १ । १ ॥
(३) ७ । १० ॥
(४) ३३ । १२ ॥
(५) ९ । ३० ॥

## रिफितं विवृत्त्या ॥ ६ ॥

विसर्जनीयान्तम्पदं ह्रस्वाकारोपधं रिफितं यत्र भवति तद्विवृत्त्या परिगृह्णीयात् । यथा (१) होता यजिष्ठोऽअप्सरेष्वीडयः । ईडयऽइतीडयः । (२) शुक्रन्दुदुह्रेऽअह्रयः । अह्रयऽइत्यह्रयः । अरिफितमिति किम् । (३) सतश्च योनिमसतश्च वि वः । व इति वः । (४) सुरुचो वेनऽआवः । आवरित्यावः ॥

## दीर्घकण्ठ्योपधं विसर्जनीयान्तमेकारान्तमैकारान्तं प्लुतं प्रगृह्यं च ॥ ७ ॥

दीर्घाकारोपधं विसर्जनीयान्तं च यत्पदं तद्विवृत्त्या परिगृह्णीयात् । एकारान्तमैकारान्तं प्लुतं प्रगृह्यं च । एतानि च पदानि विवृत्त्या परिगृह्णीयात् । दीर्घकारान्त्योपधं विसर्जनीयान्तमुदाहरणं यथा (५) यतो जातोऽअरोचथाः । अरोचथाऽइत्यरोचथाः । ए-

---

(१) ३ । १५ ॥
(२) ३ । १६ ॥
(३) १३ । ३ ॥
(४) इदमपि तथा ॥
(५) ३ । १४ ॥

कारान्तँय्यथा (१) मन्त्वँव्वोचेमाग्नये । अग्नय ऽइ- त्यग्नये । ऐकारान्तँय्यथा (२) उभा राधसः सह मा- दयद्ध्यै । मादयद्ध्या ऽइति मादयद्ध्यै । प्लुतँय्यथा (३) भुवनमा विवेशा३ । व्विवेशाऽइति विवेशा३ । प्रगृ- ह्यँय्यथा (४) अन्न्यान्न्याँव्वत्समुप धापयेते । धापयेते ऽइति धापयेते ॥

## औकारान्तश्चैके ॥ ८ ॥

औकारान्तं च पदमेके आचार्या विहृत्त्या परिगृ- ह्णन्ति । यथा (५) अभिषिञ्चाम्म्यसौ । असा ऽइत्त्य- सौ । एक इति किम् । असावित्त्यसौ ॥

## भाव्युपधं च रिह्विसर्ज्जनीयान्ता- नि रेफेण ॥ ९ ॥

अकारश्चो भावीत्युक्तम् । भाव्युपधं रिह्विसर्जनीया- न्तं रिफितविसर्जनीयान्तं च यत्पदं तद्रेफेण परिगृ-

---

(१) ३ । ११ ॥
(२) ३ । १३ ॥
(३) २३ । ४९ ॥
(४) ३३ । ५ ॥
(५) ९ । ३० ॥

ह्णीयात् । यथा (१) अग्निमीडे पूर्व्वेभिर्ऋषिभिरीड्यो नूतनैरुत ... नमोभिः । नमोभिरिति नमः । भिः । (२) सद्याक्कः । करिति कः, (३) सतश्च योनिमसतश्च व्विवः । व्वरिति वः ॥

## प्रथमान्तन्तृतीयेन ॥ १० ॥

प्रथमान्ताः कचटतपाः तृतीयान्ता गजडदबाः वर्ग-प्रथमान्तं पदं स्ववर्ग्गतृतीयेन वर्णेन परिगृह्णीयात् । यथा (४) व्विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत् । अस्मदित्यस्मत् । (५) समंक्तन्त्वमानट् । आनडित्यानट् ॥

## उत्तमान्तमुत्तमेन ॥ ११ ॥

उत्तमान्तं पदमुत्तमेनैव परिगृह्णीयात् । यथा (६) व्वर्त्तो रुद्रा नृपाय्यम् । नृपाय्यमिति नृपाय्यम् ॥ (७) ॥

---

(१) १३ । ४३ ॥

(२) ३३ । ५९ ॥

(३) १३ । ३ । इमान्युदाहरणान्यार्षीसंहिताया बोध्यानीति ॥

(४) २१ । २ ॥

(५) १७ । ८९ ॥

(६) २० । ८१ ॥

(७) एवं सर्वत्र पदक्रमादिविकृतिषु सन्धिकार्यं ज्ञेयमिति, परिग्रहोऽवग्रह इत्यनर्थान्तरम् । स कुत्र भवति कुत्र न भवति तल्लक्षणं चैतच्छास्त्रीयपञ्चमाध्यायादौ 'स-

## वृद्धँव्वृद्धिः ॥ १२ ॥

इत्युक्तार्थम् ॥

## इति कात्यायनकृतौ प्रातिशाख्य-सूत्रे सप्तमोऽध्यायः ॥

इत्यानन्दपुरवास्तव्यवज्रटसूनुनोव्वटेन कृते मातृमोदाख्ये प्रातिशाख्यभाष्ये सप्तमोऽध्यायः समाप्तः ॥

---

## अथातो वर्णसमाम्नायँव्व्याख्यास्यामः ॥

अथातः शब्दादुक्तार्थी वर्णा यस्मिन्समाम्नाये पठ्यन्ते स वर्णसमाम्नायस्तं व्याख्यास्याम इति प्रतिज्ञा समाधानार्थम् ॥

## तत्र स्वराः प्रथमम् ॥ १ ॥

व्याख्यायन्त इति शेषः । तद्यथा । अइति । आइति । आ३इति । इइति । ईइति । ई३इति । उइति । ऊइति । ऊ३इति । ऋइति । ॠइति । ऋ३इति । ऌइति । ॡइति । ॡ३इति ॥ (१) ॥

---

मासेऽवग्रहो ह्रस्वसमकाल'इत्युक्तम् ॥

(१) ऌकारवर्णस्य पाणिनिना दीर्घता न स्वीकृता परन्तु कात्यायनेनाभिमतेति ॥

## अथ सन्ध्यक्षराणि ॥ २ ॥

व्याख्यायन्त इति सूत्रशेषः । एइति । एरइति । ऐइति । ऐ३इति । ओइति । ओ३इति । औइति । औ३इति ॥ (१) ॥

## इति स्वराः ॥ ३ ॥

व्याख्याता इति सूत्रशेषः ॥ (२) ॥

## अथ व्यञ्जनानि ॥ ४ ॥

व्याख्यायन्त इति सूत्रशेषः । तद्यथा । किति खिति गिति घिति ङिति कवर्गः । चिति छिति जिति झिति ञिति चवर्गः । टिति ठिति डिति ढिति णिति टवर्गः । तिति थिति दिति धिति निति तवर्गः । पिति फिति बिति भिति मिति पवर्गः ॥ (३) ॥

## इति स्पर्शाः ॥ ५ ॥

व्याख्याताः इति सूत्रशेषः ॥

---

(१) एच्प्रत्याहारान्तर्गतानां एकारादिवर्णचतुष्टयानां नास्ति ह्रस्वत्वम् ॥

(२) स्पृशब्दोपतापयोः । स्पर्श्यते शब्द्यतेऽनेन व्यञ्जनमिति करणेऽच्प्रत्ययो भवति ॥

(३) 'व्यञ्जनं कादी'ति प्रथमाध्यायस्थसूत्रात्कादीनामेव व्यञ्जनत्वमिति सूचितम् ॥

अथान्तस्थाः ॥ ६ ॥

व्याख्यायन्त इतिशेषः। यिति रिति लिति विति ॥

अथोष्माणः ॥ ७ ॥

व्याख्यायन्त इति शेषः। शिति षिति सिति हिति ॥

अथायोगवाहाः ॥ ८ ॥

व्याख्यायन्त इति शेषः। अकारादिना वर्णसमाम्नायेन संहिताः सन्त एते वहन्त्यात्मलाभं प्राप्नुवन्त्ययोगवाहाः। तथाहि ॥

ᳵक इति जिह्वामूलीयः ॥ ९ ॥

इति ककारपूर्वं जिह्वामूलीयं दर्शयति तथा ॥

ᳶप इत्युपध्मानीयः ॥ १० ॥

इति पकारपूर्वमुपध्मानीयं दर्शयति एवमन्यत्रापि द्रष्टव्यम् ॥

अं इत्यनुस्वारः ॥ ११ ॥

इति स्वरपूर्वमनुस्वारं दर्शयति ॥

अः इतिविसर्ज्जनीयः ॥ १२ ॥

इतिस्वरपूर्वं विसर्ज्जनीयं दर्शयति ॥

हुँ इति नासिक्यः ॥ १३ ॥

अयम्स्तक्शाखायां प्रसिद्धः ॥

कुँखुँगुँघुँ इति यमाः ॥ १४ ॥

इति यमसञ्ज्ञका वर्णा विंशतिसञ्ज्ञका भवन्तीत्येतच्चतुर्थाध्याये व्याख्यातम् ॥

एते पञ्चषष्टिवर्णा ब्रह्मराशिरात्मवाचः ॥ १५ ॥

य एते पञ्चषष्टिवर्णास्ते समस्ता एव त्रयीलक्षणो ब्रह्मराशिः । एत एव कदाचिदानुपूर्व्या व्यवस्थिताः सन्त ऋग्यजुःसामाख्या भवन्तीत्यर्थः । लौकिक्या अपि वाचोऽयमेवात्मा । एतदेव स्पष्टीकर्त्तुमाह ॥

यत्किञ्चिद्वाङ्मयं लोके सर्वमत्र प्रतिष्ठितम् ॥ १६ ॥

यत्किञ्चिद्वाङ्मयं लोके इत्यादि, एते पञ्चषष्टिवर्णा लोके वेदे च प्रतिज्ञाता । यत्किञ्चिद्वाङ्मयं लोके इत्यादिना ते च लोके लोकैरनियतदेशकालाः प्रयुज्यमानाः सन्तो दृष्टाः । अतो वेदे तन्नियमार्थः स्या-

ध्यायविधिः क्रियते ॥

## शुचिना ॥ १७ ॥

स्नानाचमनादिभिः शौचयुक्तेन ब्रह्मचर्य्यवता त्रैवर्णिकेन स्वाध्यायोऽध्येतव्यः ॥

## शुचौ देशे ॥ १८ ॥

अनुपहतदेशे स्वाध्यायोऽध्येतव्यः । तथा चोक्तम् । द्वावेतौ वर्ज्जयेन्नित्यमनध्यायौ प्रयत्नतः । स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः ॥ १ ॥

## शूद्रपतितयोरसंश्रावं स्वाध्यायोऽध्येतव्यः ॥ १९ ॥

शूद्रपतितादयो न शृण्वन्ति तथा स्वाध्यायोऽध्येतव्यः ॥

## ज्ञाने ॥ २० ॥

एवं स्वाध्यायविधिमुक्त्वाऽधुना वेदस्य ग्रन्थतोऽर्थतश्च परिज्ञाने फलमाह ॥

## पौरुष्यम् ॥ २१ ॥

पुरुष आत्मा तस्य विवेकस्य साधकं पौरुष्यं मुक्तिप्रदमित्यर्थः (१) ॥

---

(१) तत्र प्रमाणं संहितायां ३१ अध्याये १८ ऋचि । तमेव विदित्वाति मृत्युमे-

## स्वर्ग्यम् ॥ २२ ॥

स्वर्गसाधकञ्च (१) ॥

## यशस्यम् ॥ २३ ॥

यशः कीर्तिस्तस्याः साधकम् । (२) ॥

## आयुष्यम् ॥ २४ ॥

आयुषो वर्द्धनम् । यद्वेदस्यार्थज्ञाने तन्मुक्तिसाधकं स्वर्गसाधकं च भवति ॥

## तथा विभक्तिपरिज्ञानम् ॥ २५ ॥

पदार्थज्ञानं तन्मुक्तिसाधकम् । यत्प्रकृतिप्रत्ययादिपरिज्ञानं तत्स्वर्गयश आयुषां साधकमित्ययं विभागो ज्ञानस्य द्रष्टव्यः । (३) ॥

## अथापि भवति ॥ २६ ॥

अयमेवार्थः प्रकृत्या । अन्योऽपि श्लोको भवति, वेद-

---

ति नान्यः पन्था विद्यतेऽयनायेति श्रुतेः ॥

(१) यं यं क्रतुमधीयीत तस्य तस्याप्नुयात्फलम् । इत्युक्तेः ॥

(२) यशः शब्देन कीर्तिरप्युपलक्ष्यते । यशःकीर्त्योर्जीविन्मृतप्रशंसयोरपि साधकं भवति ॥

(३) तथा च महर्षिभगवता पतञ्जलिना महाभाष्येऽप्युक्तम् । एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवतीति ॥

स्वाध्ययनाद्धर्म्मः सम्प्रदानात्तथा श्रुतेः ॥

वर्णशोऽक्षरशो ज्ञानाद्विभक्तिपदशो
ऽपि च ॥ २७ ॥

वेदस्य पाठमात्रात्तावद्धर्मो भवति तथा शिष्येभ्यः सम्प्रदानात् । तथा श्रवणात्तथा वर्णपरिज्ञानात्तथाऽक्षरपरिज्ञानात् विभक्तिपरिज्ञानाच्च पदपरिज्ञानाच्चोत्तरोत्तरं धर्मो भवति। इत्येतदेवानुवर्त्तते ॥

त्रयोविंशतिरुच्यन्ते स्वराः शब्दा-
र्थचिन्तकैः ।
द्विचत्वारिंशद्व्यञ्जनान्येतावान्व-
र्णसङ्ग्रहः ॥ २८ ॥

शब्दस्वरूपचिन्तकैस्त्रयोविंशतिः स्वरा अकारादय उक्ताः। द्विचत्वारिंशद्व्यञ्जनानि कादीनि एतावान्वर्णसङ्घातः ॥

तस्मिँल्लृह्लजिह्वामूलीयोपद्ध्मा-
नीयनासिक्या न सन्ति माध्यन्दिनानाम् ॥ २९ ॥

ऌकारो दीर्घः प्लुताश्चोक्तवर्ज्जम्

॥ ३० ॥

अधस्तनश्लोकरूपसूत्रेण वर्णानुक्त्वा अधुना ये माध्यन्दिनानान्नेष्यन्ते वर्णास्तान्निराकर्त्तुमाह। ढकारष्टवर्गीयो डकारश्च तत्प्रकृती ळ्हकारौ जिह्वामूलीयो य उपध्मानीयश्च नासिक्यश्च एते वर्णा न सन्ति माध्यन्दिनानाम् ॥ किमेतावन्त एव नेत्युच्यते । ऌकारो दीर्घः । लाजीञ्छाचीनित्येवमादयो ये पठितास्तान्प्लुतान्वर्ज्जयित्वा अन्ये प्लुता न सन्ति माध्यन्दिनानाम् ॥

वर्णदेवताः ॥ ३१ ॥

प्रकृतानां वर्णानां देवता वक्ष्याम इति सूत्रशेषः ॥

आग्नेयाः कण्ठ्याः ॥ ३२ ॥

कण्ठस्थाना वर्णा अग्निदेवत्या भवन्ति ॥

नैर्ऋत्या जिह्वामूलीयाः ॥ ३३ ॥

जिह्वामूलस्थाना वर्णा निर्ऋतिदेवत्या भवन्ति ॥

सौम्यास्तालव्याः ॥ ३४ ॥

तालुस्थाना वर्णाः सोमदेवत्या भवन्ति ॥

रौद्रा दन्त्याः ॥ ३५ ॥

दन्तस्थाना वर्णाः रुद्रदेवत्या भवन्ति ॥

ओष्ठ्या आश्विनाः ॥ ३६ ॥

ओष्ठस्थाना वर्णा अश्विदेवत्या भवन्ति ॥

वायव्या मूर्द्धन्याः ॥ ३७ ॥

मूर्द्धस्थाना वर्णा वायुदेवत्या भवन्ति ॥

शेषा वैश्वदेवाः ॥ ३८ ॥

एतानि स्थानानि विहाय येऽन्यस्थानजन्या वर्णास्ते वैश्वदेवा भवन्ति । स्पष्टार्थान्येतानि सूत्राणि ॥

तत्समुदायोऽक्षरम् ॥ ३९ ॥

तेषां वर्णानां एकीभावलक्षणः समुदायोऽक्षरं भवति । तद्यथा कखगघङेत्यादि ॥

वर्णो वा ॥ ४० ॥

वर्णसमुदायो वा वर्णो वाऽक्षरम्भवति । तद्यथा । अआइईउऊ इत्येवमादि । वर्णसमुदायोऽक्षरं भवति । कखगघङ दभा । एवमादि । व्यवस्थितविभाषा चेयम् । स्वरः केवलोऽप्यक्षरं भवति । व्यञ्जनसमुदायस्तु स्वरसंहित एवाक्षरं भवति । तथा च प्रतिपादि-

तम् । 'स्वरोऽक्षरम्' । 'सहाद्यैर्व्यञ्जनैः' । 'उत्तरैश्चावसितै'रिति । प्रथमाध्याये एवेति ॥

## अक्षरसमुदायः पदम् ॥ ४१ ॥

अक्षराणां समुदायः पदं भवति । तद्यथा । (१) इषे त्वा । ऊर्ज्जे । त्वा । (२) वाजः । च । मे ॥

## अक्षरँव्वा ॥ ४२ ॥

अक्षरं वा पदं भवत्यक्षरसमुदायो वा पदं भवति। (३) इन्द्र । आ याहि । (४) यः । उ । विद्यायाम् । रताः । अक्षरसमुदायः पदं भवति । (५) इषे । त्वा ऊर्ज्जे । त्वा ॥

## तच्चतुर्द्धा ॥ ४३ ॥

तदेतत्पदं चतुर्द्धा भिद्यत इति सूत्रशेषः ॥

## नामाख्यातोपसर्ग्गनिपाताः ॥ ४४ ॥

नामपदँय्यथा गौरश्वः पुरुषः हस्तीत्येवमादि ।

---

(१) १ । १ ॥

(२) १८ । १ ॥

(३) २५ । ५ ॥

(४) ४० । १० ॥

(५) पूर्वोक्तमुदाहरणं ज्ञेयम् ॥

आख्यातपदँय्यथा पचति पठति गच्छति धावति लगतीत्येवमादि। उपसर्गपदँय्यथा प्र परा आ अ-नीत्येवमादि। निपातपदँय्यथा वा च कम् उचित् इ-त्यादि। नामाख्यातोपसर्गनिपाता इति बहुवचनं प-दचतुष्टयापेक्षम्॥

## तत्र प्रति विशेषः॥ ४५॥

तत्र च वाक्यपदचतुष्टयं प्रति यो विशेषः स प्रति-पाद्यते वक्ष्यमाणेन सूत्रेणेति वाक्यशेषः॥

## क्रियावाचकमाख्यातमुपसर्गो विशेषकृत्।
## सत्त्वाभिधायकं नाम निपातः पाद-पूरणः॥ ४६॥

अथ व्यवस्थया पदचतुष्टयस्य लक्षणं कर्तुमाह। क्रिया। कालः। कर्त्ता। सङ्ख्या। उपसर्गो विशेष इत्याख्यातार्थः। तत्र क्रियैव प्रधानमुपसर्गस्तु क्रियाया एव विशेषंकरोति। यथा पचतीत्यत्र पाचकः प्रतीय-ते। पुनः प्रपचतीत्युक्ते आदिकर्त्ता प्रतीयते। एवं ग-च्छत्यागच्छतीत्यादिषु द्रष्टव्यम्। सत्वं धातुः। कारकं विभक्तिरिति नाम्नोऽर्थः। तत्र सत्त्वमेव विशेषतोऽभि-

धीयते। निपातस्त्वर्थासम्भवे पादपूरणो भवति॥

चतुर्द्दश निपाता येऽनुदात्तास्ते-
ऽपि सञ्चिताः।

निहन्यते खल्वाख्यातमुपसर्गच-
तुष्टये॥ ४७॥

एवं नामाख्यातोपसर्गनिपातानामर्थभेदं व्याख्या-याधुना स्वरसंस्कारावपि तत्रोक्तावेवैतौ प्रतिपादयति चतुर्द्दशेति। चतुर्द्दश निपाता येऽनुदात्तास्तेऽपि अधस्तात्सञ्चिता एव वा च कमुचिदित्यादिसूत्रेण। निपातग्रहणमुपलक्षणम्। नाम्नामपि स्वरः सूत्रविहितएव यथा 'नो नौ मे मदर्थे लिङ्गोके' ष्वित्यादिना। यत्र पदचतुष्टये आख्यातमुक्तं तन्निहन्यते अनुदात्तं भवति उपसर्गादीनां पदानां परभूतम्। उपसर्गे विशेषकृत्। सत्त्वाभिधायकन्नाम निपातः पादपूरणः इत्येतन्नामानुपूर्वीमङ्गीकृत्यैतदुक्तम्। निहन्यते खल्वाख्यातमुपसर्गाणां चतुष्टय इति। खलुशब्द उपलक्षणार्थः। उपसर्गाणामपि तत्र स्वरो विहित इति 'उपसर्ग उपसर्गे' इत्यादिना। एतदुक्तम्भवति। यदधस्तान्मया प्रतिज्ञातं 'स्वरसंस्कारयोश्छन्दसि नियम' इति कृत्स्नं प्रतिपादितमित्यर्थः। अतः कृत्स्नमिदं शा-

त्वमिति कृत्वा आदर्त्तव्यं शिष्यैः ॥

अथ पदगोत्राणि ॥ ४९ ॥

एवं पदचतुष्टयगोत्राणि वक्ष्यन्त इति सूत्रशेषः ॥

भारद्वाजकमाख्यातं भार्ग्गवं नाम भाष्यते । वासिष्ठ उपसर्ग्गस्तु निपातः काश्यपः स्मृतः ॥ ५० ॥

भरद्वाजेन दृष्टमाख्यातं भारद्वाजगोत्रं वा भारद्वाजसगोत्रं वा तथा भृगुणा दृष्टं नाम भार्गवगोत्रं भार्गवसगोत्रं वा तथा वसिष्ठेन दृष्टा उपसर्गा वासिष्ठगोत्रं वासिष्ठसगोत्रं वा तथा काश्यपेन दृष्टा निपाताः काश्यपगोत्राः काश्यपसगोत्रा वा ॥

अथ पददेवताः ॥ ५१ ॥

अथ पदानां देवता वक्ष्यन्त इति सूत्रशेषः ॥

सर्वन्तु सौम्यमाख्यातं नाम वायव्यमिष्यते ॥ आग्नेयस्तूपसर्ग्गः स्यान्निपातो वारुणः स्मृतः ॥ ५२ ॥

सर्वमाख्यातं सोमदैवत्यम् । सर्वन्नाम वायुदैवत्यम् ।

अग्निदैवत्या उपसर्गाः । निपाता वरुणदैवत्याः ॥

## अथ वर्ण्णदेवताः ॥ ५३ ॥

इत्याद्युपासनार्थमुक्तम् । एवं ह्युपासिताः सन्तोऽर्थानभिज्ञस्यापि पुरुषस्य फलप्रदा भवन्ति । (१) यो वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्त्तं वाऽऽपद्यते प्रमीयते पापीयान्भवतीत्येवमादिदोषेण सम्बध्यते । घृतकुल्या मधुकुल्या इत्येवमादिभिस्तु गुणैः सम्बद्धत एव ॥

## इत्याह स्वरसꣳस्कारप्रतिष्ठापयिता भगवान्कात्यायनः॥५४॥

एवं स्वरसंस्कारयोः प्रतिष्ठापयिता भगवान्कात्यायनः । इदं शास्त्रमाह ॥

## वृद्धँ वृद्धिः ॥ ५५ ॥

इत्युक्तार्थः ॥ (२) ॥

---

(१) कात्यायनप्रणीतसर्वानुक्रमीयप्रथमकण्डिकायां सामवेदीयदैवतब्राह्मणं प्रमाणं चेति बुधैरभ्युपेयम् ॥

(२) इति सर्वानुक्रमे १ कण्डिकायां बोध्यम् । योमन्त्रदैवतज्ञः स स्वर्गलोकैरपीड्यते । न हि कश्चिदविज्ञाय याथातथ्येन देवताः । श्रौतानां कर्मणां विप्रः स्मार्तानां चाश्नुते फलमिति च । व्याकरणापेक्षया इदं शास्त्रं वृद्धमतः कारणादेतच्छास्त्रा·

## इति कात्यायनकृतौ प्रातिशाख्य-सूत्रेऽष्टमोऽध्यायः ॥

इत्यानन्दपुरवास्तव्यवज्रटसूनुनोव्वटेन कृते मातृमोदाख्ये प्रातिशाख्यभाष्येऽष्टमोऽध्यायः समाप्तः ॥

## अथ प्रतिज्ञासूत्रपरिशिष्टम् ॥

### अस्य प्रतिज्ञापरिशिष्टसूत्रस्य भाष्यम् ॥

अम्बायोनिं जगद्योनिमयोनिं योनिजं जनम् ।
योनित्रासात्त्रायते तं वन्देऽहं हंसरूपिणम् ॥ १ ॥
योनियोगवशं धत्ते योनिजायोनिजं जगत् ।
सोमसोममहं वन्दे जङ्गमाजङ्गमात्मकम् ॥ २ ॥

तत्र भगवानाचार्यः कात्यायनः प्रत्यूहसङ्घातविघाताय चिकीर्षितसमाप्त्यै च मङ्गलार्थस्यानन्तर्यार्थस्य चाथशब्दस्यैकदन्तगतफलद्वयन्यायेनैकशेषेण तन्त्रेणावृत्त्या वा वदञ्छिष्यबुद्धिसमाधानाय प्रतिजानीते ॥

## अथ प्रतिज्ञेति ॥ १ ॥

विधास्यत इति सूत्रशेषः । यतः प्रणवस्याथशब्दस्य

---

ध्येतॄणां वृद्धिरवश्यं भवति ॥ इति श्रीकाशीपुरवास्तव्यसारवाविप्रवरश्रीविश्वेश्वरपाठकनिष्ठसूनुना व्यासोपाह्वश्रीयुगलकिशोरपाठकेन प्रणीता प्रातिशाख्यकीर्त्तिप्रकाशाख्यटिप्पणी समाप्ता ॥

द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्वा विनिर्य्यातौ यतो माङ्गलिकावुभौ । १ । प्रणवो वेदेष्वथशब्दो भाष्येष्विति भाष्यन्ते वेदार्था यैस्तानि भाष्याणि तेष्वथशब्दो मङ्गलार्थः पुनस्तमेवाथशब्दमादाय श्रौतस्मार्त्तसूत्रकथनानन्तरं प्रातिशाख्यसूत्रकथनानन्तरञ्चैतस्यावसरो यतस्तन्निरूपितकर्मनियुक्तमन्त्रेषु स्वरसंस्कारनियमावश्यं भावतयाऽनुपदिष्टस्वरसंस्थानसंस्काराकाङ्क्षैतदर्थमयमारम्भः। मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथोऽथेति त्रिकाण्डीस्मरणादुभयवचनो अथशब्दः, अयं हि कल्पानष्टादशपरिशिष्टानि च प्रणीतवतो भगवतः कात्यायनस्याशयो, यत्र कुत्रापि समानजातीयः साधारणधर्मउक्तआकाङ्क्षितो न्यायविद्भिर्ज्ञात्वाऽनुष्ठास्यइति । स्वतन्त्रेच्छता चानियमेनोक्तो हेतुः । “आतश्चोपसर्ग” इति कर्मण्यङि, प्रतिज्ञानं प्रतिज्ञा समधिगम्येऽर्थे प्रतिज्ञाशब्दो भाक्तइत्याहुः। यज्ज्ञानेनोत्तरमध्ययनादिधर्मनिरूपितानां स्वरादीनां ज्ञानं जायतेऽतः प्रतिज्ञानामसूत्रं विधास्यत इति शिष्यबुद्धेरेकाग्रता क्रियते। केचित्तु पाठादेवानन्तर्य्यसिद्धौ मङ्गलार्थएवाथशब्द इत्याहुः । (१) “स्वरसंस्कारयोश्छन्दसि नियमात्स वेदे भवतीत्यतो वेदलक्षणमाचष्ट ॥

मन्त्रब्राह्मणयोर्वेदनामधेयम् ॥ २ ॥

---

(१) प्राति० १ अ० । सू० १ ॥

मन्त्रश्च ब्राह्मणं च तयोर्वेद इति नामधेयम् । तदुक्तंपरिशिष्टे । मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते । यजुर्वेदः स विज्ञेय अन्येशाखान्तराः स्मृताइति । तथा च वेदो द्विधा मन्त्रात्मको ब्राह्मणात्मकश्च तत्राद्यः कर्माङ्गभूतद्रव्यदेवतास्मारकः। मन्त्रेण स्मृतं कर्म कर्त्तव्यमिति नियमार्थं वचनम् । (१)मन्त्रान्तैः कर्म्मादिः सान्निपात्योऽभिधानादिति कल्पकृदुक्तेः। स च संहितादिरूप इषेत्वादिः । न च (२) "वसन्ताय कपिञ्जलानालभत" इत्यादिकस्यापि मन्त्रत्वापत्तिरिति वाच्यम् । न वयं सकलस्येषेत्वादिकस्य मन्त्रत्वं ब्रूमः । किन्तु ब्राह्मणभागव्यतिरिक्तस्य (३) "ब्रह्मणे ब्राह्मण" मिति ब्राह्मणाध्यायद्वयस्य ब्राह्मणत्वमाचार्योक्तं तथापि मन्त्रधर्माः सर्वे भवन्ति मन्त्रान्तर्गतत्वात् । एवमेव ब्राह्मणान्तर्गतमन्त्रभागानामपि ब्राह्मणधर्मा एव भवन्ति । द्वितीयश्चतुर्धा विधिनिषेधार्थवादनामधेयात्मा । आद्यो द्विविधो मुख्योऽमुख्यश्च । लिङ् । लोट् । लेट् । तव्यत्तवै प्रत्ययो मुख्यः । स च यजेतेत्यादिरूपः । विद्यते चात्रांशद्वयम् । यजिनिरूपितं प्रत्ययनिरूपितं च । प्रत्ययेऽप्यंशद्वयम् । आख्यातत्वलिङ्त्वाभ्याम् । प्रथमं दशलकारादिषु । द्वितीयँल्लिङ्त्वंच । आख्यातत्वलि-

(१) कात्यायनमहर्षिप्रणीतस्य षड्विंशदध्यायात्मकस्य श्रौतसूत्रस्य प्रथमाध्यायस्य तृतीयकाण्डिकायाम् ॥

(२) संहि० २३ अ । २० मन्त्रः ॥

(३) सं ३० अ० । ५ मंत्रः ॥

ङ्त्वाभ्यां भावेनैवोच्यते। अतो लिङादीनां भावनाविधायकत्वेन मुख्यं विधित्वम् । तद्युक्तानि "स्वर्गकामो यजेते"त्यादीनि वाक्यान्यपि विज्ञातभावनापेक्षितांशत्रयसापेक्षकत्वाद्विशिष्टभावनानुष्ठापकत्वाच्चामुख्यविधिरित्युच्यते। स पुनस्त्रिविधः । अपूर्वविधिर्नियमविधिः परिसङ्ख्याविधिश्चेति भेदात् । तल्लक्षणानि । विधिरत्यन्तमप्राप्तौ परिसङ्ख्येति गीयत इति । उदाहरणानि। "व्रीहीन्प्रोक्षति"। "व्रीहीनवहन्ति" । "पञ्च पञ्च नखा भक्ष्या" इति। "अश्वाभिधानीमादत्त" इति। पुनरा‌द्यस्त्रिधा । विनियोगप्रयोगाधिकारविधिभेदात् । सोऽयं विधिः प्रवर्त्तनात्मकः । निषेधस्तु "ब्राह्मणो न हन्तव्यो" "न हिंस्यात्सर्वाणि भूतानि" इत्यादिरूपः। अर्थवादस्तु विधिस्तावकः प्ररोचनाविशेषजनकः। "ब्रह्मवर्चसीहैव भवति" "य एवं विद्वानग्निहोत्रं जुहोतीत्यादिः" । नामधेयन्तु गुणफलोपधानार्थम् । यथा "अग्निहोत्रं जुहोतीत्यादिः । सर्वोऽप्ययं वेदे एव तस्मिन्किमित्याह ॥

तस्मिञ्छुक्ले याजुषाम्नाये माध्यन्दिनीयके मन्त्रे स्वरप्रक्रिया ॥ २ ॥

तस्मिन्मन्त्रब्राह्मणात्मके याजुषाम्नाये यजुषामनियतपादावसानानामयं याजुषस्तस्मिन्याजुषे आम्नाये-आम्नायशब्दो वेदवचनः "श्रुतिः स्त्री वेद आम्नाय-

इति त्रिकण्डिकास्मृतेः । अत्र तस्मिन्निति ग्रहणाद्या जुष इति वक्तव्ये यजुषामेवायन्नियमः प्राप्नोति । न तु तदन्तर्गतऋङ्मन्त्राणामपि वक्ष्यमाणवर्णविकारादि-संस्काराँल्लक्षयति । यद्वा तस्मिन्याजुषाम्नाये याजुषेषु आम्नायः यजुर्वेदेषु मुख्यः, अत्राम्नायशब्दो मुख्यवचनः। "आम्नायश्श्रुतिमुख्ययो"रित्यभिधानात् । एकोत्तरश-तसङ्ख्याकशाखासु मुख्ये । प्रपञ्चितं चास्य मुख्यत्व-म् । "मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते" इत्यस्य व्याख्यावसरेऽस्माभिरित्युपरम्यते । किं च माध्यन्दि-नशाखामेव मुख्यामभिदधात्याचार्यप्रवृत्तिः तथा हि । ये मन्त्रा माध्यन्दिनशाखायामुक्ताः "प्रत्युष्टमित्याद-यः, ते प्रतीकमात्रेणोदिताः । ये तु माध्यन्दिनशाखातः कण्वशाखायामधिकाः समधीताः "यस्ते प्राण"मित्या-दयस्ते सम्पूर्णा एव भगवता सूत्रे उपनिबद्धा ये तु क-ण्वशाखातो माध्यन्दिनशाखायामधिकाः समधीताः "शिवो नामेत्यादयस्ते तु द्वयोः शाखयोः समाम्नातम-न्त्रा इव प्रतीकमात्रेणोपनिबद्धा इति द्वयोः शाखयोः सममुख्यप्रवृत्तित्वे माध्यन्दिनशाखायामप्यनधीता इ-व माध्यन्दिनशाखामन्त्राः सूत्रे भगवता उपनिबद्धा भवेयुः । यस्तु सूत्रकृता काण्वमाध्यन्दिनशाखयोः समाम्नातो "अस्मात्त्वमधि जातोऽसीति मन्त्रः सूत्रे उपनिबद्धस्तस्य पत्न्यामप्यनूहप्रज्ञप्त्यर्थत्वेन प्रयोजनव-त्त्वान्न दोषः। अत एवोक्तं भर्तृयज्ञपितृभक्तिवासुदेवक-

कौंषाध्यायदेवयाज्ञिकादिभिर्भाष्यकारैः सकलमन्त्र पाठः पत्न्यामप्यनूह्यप्रश्नप्त्यर्थमिति । अत एवोक्तं वसिष्टेन "माध्यन्दिनी तु या शाखा सर्वसाधारणी हि से-ति सङ्क्षेपः । प्रकृतमनुसरामः । स्वरप्रक्रियेत्यनेना-न्वयः । स्वर इति संस्कारस्याप्युपलक्षणम् । उत्पत्ति-विशिष्टत्वात् । तथा च प्रातिशाख्यसूत्रम् । "स्वरसꣳ-स्कारयोश्छन्दसि नियम." । अस्यार्थः । स्वरा उदा-त्तादयः । संस्कारा वर्णागमादेशलोपविकारप्रकृति-भावप्रभृतयः । अनयोश्छन्दसि वेदे नियमः । तत्र यजुषामनेकत्वात्कस्मिन्स्वरप्रक्रियेत्यत आह । 'शुक्ले' इति । शुक्लसञ्ज्ञके इत्यर्थः । तथा(१) "चेमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते इति । पञ्चदशयजुषां शुक्लसञ्ज्ञा विधत्ते । अस्यार्थस्तु इमा-निकाण्वादीनि शुक्लानि शुद्धानि यजूंषि वाजसनेर-पत्येन याज्ञवल्क्येन ऋषिणाऽऽख्यायन्ते शिष्येभ्य उप-दिश्यन्ते इति विद्यारण्यश्रीपादैर्व्याख्यातः । वाजमन्नं सनिर्दानमस्यास्तीति वाजसनिरिति महीधराचार्य्या मन्त्रभाष्ये व्याख्यातवन्तः । परिशेषादितरत्कृष्णम् । तथा च यजुर्हि द्विविधम् । शुक्लं कृष्णं च । "शुक्लं कृ-ष्णमिति द्वेधा यजुश्च समुदाहृतम् । शुक्लं वाजसनं ज्ञेयं कृष्णं तु तैत्तिरीयकम् । तत्र हेतुः । बुद्धिमालिन्यहेतु-त्वात्तद्यजुः कृष्णमीर्यते । व्यवस्थित प्रकरणं तद्यजुः

(१) शतपथब्राह्मणस्य चतुर्दशकाण्डे बृहदारण्ये पञ्चमप्रपाठके ॥

शुक्लमितीर्यते । इत्यादिस्मृतेश्च । सञ्ज्ञान्तरमप्यस्य । "आयातयामानि तु भानुगुप्तान्यन्यानि जातान्यतिनीरसानि । यजूंषि तेषामथ याज्ञवल्क्यो ह्ययातयामानि रवेरवापेति" भविष्यद्वचनाद्विज्ञायते । परिशेषादितरत् यातयामंमिति । आख्यायिका चास्य द्वादशस्कन्धवाराहपुराणमहाभारतविष्णुपुराणादिषु प्रसिद्धेति विस्तरभयान्न लिख्यते । शुक्लानामपि पञ्चदशभेदात्मकत्वान्न ज्ञायते कस्मिन्नित्यतस्तं विशेषयति । माध्यन्दिनीयकेइति । शुक्लस्यैवावान्तरभेदे माध्यन्दिनीयसञ्ज्ञे यजुर्वेदाम्नाय इत्यर्थः । मध्यन्दिनसञ्ज्ञेन 'महर्षिणा लब्धो याज्ञवल्क्याच्छाखाविशेषो माध्यन्दिनो यजुर्वेदस्तमधीयन्ते विदन्ति वा शिष्यपरम्परया वर्त्तमानास्ते माध्यन्दिना उच्यन्ते । "स्वाध्यायोऽध्येतव्य" इत्यादिनाऽध्येतव्यत्वेन माध्यन्दिनानामयं माध्यन्दिनीयः । स एव माध्यन्दिनीयकस्तस्मिन्माध्यन्दिनीयके । स्वार्थे कप् । "तस्येद" मित्यण् । "तदधीत" इत्यण् । सम्भाव्यन्ते चात्रैते प्रत्ययाः । एवं विशिष्टे याजुषाम्नाये । मन्त्रे । ये मन्त्रा इषे त्वादिखम्ब्रह्मान्तास्तेषु । ब्राह्मणे प्रातिस्विकरूपेण स्वराणां वक्ष्यमाणत्वान्मन्त्र इत्युक्तं जात्यभिप्रायेणैकवचनम् । 'स्वरप्रक्रिया' । स्वराणामुदात्तादीनां प्रक्रिया प्रयोगः कथ्यत इति शेषः । ननु स्वराणामुक्तत्वात्पुनरुक्तिरिति चेन्न । "उच्चैरुदात्त" इति लक्षणोक्तिः । "हस्ते न ते" इति प्रदर्शनोक्तिः

अधुना हृदयाद्यङ्गविशेषे स्वरप्रदर्शनार्थमारम्भः । स्थानस्याभ्यर्हितत्वेन प्रथममनुदात्ताधिकरणमाह ॥

## हृद्यनुदात्तः ॥ ४ ॥

हृदि हृदये । "पद्दन्न" इत्यादिना हृदयस्य हृदादेशः । सामीप्ये सप्तमीयम् । हृदयसमीपे दक्षिणहस्तेनानुदात्तप्रदर्शनं भवतीति भावः । तथा चानुदात्तस्वरवर्णोच्चारणवेलायां हस्तस्थानं हृदयसमीपे भवति । "हस्तेन ते" इति सूत्राद्धस्तेन । "दिशामनुक्तौ प्राची स्यात्तथा हस्तस्तु दक्षिणः" इति परिभाषया दक्षिणेन । तल्लक्षणंयथा याज्ञवल्क्येनोक्तम् । चुलुन्नौका स्फुटो दण्डो स्वस्तिको मुष्टिकाकृतिः ॥ इत्येते हस्तदोषाः स्युः परशुश्चेति सप्तमः ॥ १ ॥ उत्तानं सोन्नतं किञ्चित्सुव्यक्ताङ्गुलिरञ्जितम् ॥ स्वरविच्च स्वरं कुर्यात्प्रादेशोद्देशगामिनम् ॥ २ ॥ मनुष्यतीर्थोच्चं कृत्वा पितृतीर्थोदकं व्रजेत् । नामितं करपृष्ठे तु सुव्यक्ताङ्गुलिमोक्षणम् ॥ ३ ॥ अङ्गुष्ठस्योत्तरं पर्व तर्जन्युपरि यद्भवेत् । प्रादेशस्य तु सो देशस्तन्मात्रं चालयेत्करम् ॥ ४ ॥ अनुदात्तो हृदि ज्ञेयो मूर्द्धन्युदात्त उदाहृतः ॥ स्वरितः कर्णमूले स्यात्सर्वास्ये प्रचयः स्मृतः ॥ ५ ॥ तत्रैव । उदात्तं तु भ्रुवोः प्रान्ते प्रचं नासाग्रमेव च ॥ स्वरितं त्र्यङ्गुलं विन्द्यान्निपाते तु षडङ्गुलम् ॥ ६ ॥ उत्थाने तु नवाङ्गुल्यमेतत्स्वारस्य लक्षणम् । षडङ्गुलं तु जात्य-

स्य ह्रस्वानुप्रथमस्य च ॥ ७ ॥ चतुर्थभागमात्रं तु भूय-स्तेनैव वर्त्तयेत् । इति ॥

## मूर्द्धन्युदात्तः ॥ ५ ॥

उदात्तादीनि स्वरनामधेयानि (१) "उदात्तश्चानुदात्त" इत्यादौ सँव्यवहारार्थं, स च मूर्द्धि मुखप्रदेश इत्यर्थः मुखस्यापि मस्तकावयवत्वेन प्रसिद्धेः । अत एवोक्तं मूर्द्धन्युदात्त उदाहृत" इति भगवता याज्ञवल्क्येन । यथा (२) व्वायवस्थ । द्वयोरप्युदाहरणयोरनुदात्तोदात्तौ वैदिकप्रक्रियायां प्रसिद्धौ हृदि मूर्द्धि च क्रमेण प्रदर्श्येते । स्वरितस्वरस्थलप्रदर्शनमाह ॥

## श्रुतिमूले स्वरितः ॥ ६ ॥

उदात्तानुदात्तधर्मविशिष्टः स्वरितः श्रुतिमूले दक्षिणकर्णमूलसमीपे दर्शनीय इति । यथा (३) व्वायवस्थेत्यत्रान्तिमो वकारः स्वरितः कर्णमूले प्रदर्श्यते । ननु प्रचयकथनान्न्यूनमिति चेन्न । तस्यैतद्भेदात् । अतएवाहुर्य्याज्ञवल्क्यपादाः । "अथातस्त्रैस्वर्य्यलक्षणं व्याख्यास्याम इति । उदात्तस्यानुदात्तस्य स्वरितस्य तथैव च । लक्षणं वर्णयिष्यामि दैवतं स्थानमेव चे"ति ॥ १ ॥ तेनैवापि च नारदीयशिक्षायाम् । "अतऊर्ध्वं प्रवक्ष्या-

(१) प्रा० ४ अ० सू० १३२ ॥
(२) १ । १ ॥
(३) तथैव ॥

मि आर्च्चिकस्य स्वरत्रयम् । उदात्तश्चानुदात्तश्च तृतीयः स्वरितः स्वरः ॥ १ ॥ सएवोदात्तइत्युक्तः सएवं स्वरितात्परः । स्वरितः प्रोच्यते तज्ज्ञैर्न चात्रान्यत्स्वरान्तरम् ॥ २ ॥ इति । तथा प्रचयस्यावान्तरभेदस्य प्रातिशाख्येऽभिधानं, तथा जात्यादीनां स्वरितभेदानामभिधानादिह नोच्यन्त इत्याह ॥

## एवं जात्यादयोऽभिहिताः ॥ ७ ॥

एवं प्रचयजात्यादयः स्वरितभेदा अभिहिता उक्ताः पूर्वं प्रातिशाख्ये इति शेषः । ते च । जात्यः क्षैप्रोऽभिनिहितस्तैरोव्यञ्जनएव च । तैरोविरामः प्रश्लिष्टः पादवृत्तश्च सप्तम इति नारदेनोक्तः । एतेषां लक्षणानि प्रातिशाख्येऽभिहितानि नाष्टमस्तु (१) तथाभाव्यः । कम्परूपस्य तथाभाव्यस्य वाजसनेयिनां संहितापाठे निराकृतत्वात् । उक्तं च माध्यन्दिनशिक्षायाम् । (२) औज्जिहायनकैर्माध्यन्दिनमतानुसारिभिः । अवग्रहो यदा नीच उच्चयोर्मध्यतः क्वचित् ॥ १ ॥ तथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम् । इति । पदपाठे तु भवति कम्प इति । एतेषां स्वरित भेदानां हस्तप्रदर्शनं तु "स्वरितस्य चोत्तरो देशः प्रणिहन्यते" इति सूत्रे प्रातिशाख्यविवरणे स्पष्टम् । तद्यथा । उदात्तादनुदा-

(१) ताथा भाव्यस्तथाभाव्यश्चेतिपाठद्वयं समीचीनं दृश्यते ॥

(२) औज्जिहायनकैरौजिहायनकैरित्युभयथा पाठः शतद्वयवर्षात्मकस्य प्राचीनतरशुद्धतरस्य पुस्तकस्य च पाठः ॥

त्ते तु वामाया भ्रुव आरभेत् । उदात्तात्स्वरितोदात्ते क्रमाद्दक्षिणतो न्यसेत् ॥ १ ॥ प्रणिघातः प्रकृष्टो निघातः । नीचतामतितरां मनुष्यदानवद्बलो न्युब्जापरपर्यायः । केषु चिद्देशेषु पित्दानवदित्यादि । एतेषां प्रातिशाख्येऽभिधानादेते नोक्ता इति । एतेषां लक्षणानि याज्ञवल्क्यीयशिक्षायां नारदीयशिक्षायां चोक्तानि । सयकाररं॰ सर्वं वाप्यक्षरं स्वरितं भवेत् । न चोदात्तं पुरस्तस्य जात्यः स्वारः स उच्यते ॥ १ ॥ उदाहरणानि यथा मनुष्यानिव । चम्वी इति, धान्यमसि । कन्याऽइव वहतु । इउवर्णौ यदोदात्तावापद्येते यवौ क्वचित् । अनुदात्ते प्रत्यये नित्यं विन्द्यात्क्षैप्रस्य लक्षणम् ॥ २ ॥ यथा त्र्यम्बकम् । द्रुवन्नः । ए ओ आभ्यामुदात्ताभ्यामकारो रिफितश्च यः । अकारो लुप्यते यत्र तं चाभिनिहितं विदुः ॥ ३ ॥ यथा (१) तेऽवन्तु । (२) कुक्कुटोऽसि ॥ उदात्तपूर्वं यत्किञ्चिच्छन्दसि स्वरितं भवेत् । एषः सर्वबहुस्वारस्तैरोव्यञ्जनउच्यते ॥ ४ ॥ यथा (३) इडे । रन्ते । हव्ये काम्ये । चन्द्रे । ज्योते । अवग्रहात्परो यत्र स्वरितः स्यादनन्तरम् । तैरोविरामं तं विन्द्यादुदात्तो यद्यवग्रहः ॥ ४ ॥

(१) १९ । ५७ ॥
(२) १ । १६ ॥
(३) ८ । ४३ ॥

यथा (१) गोमदिति गो । मत् । (२) गोपताविति गो । पतौ । इकारं यत्र दृश्येत इकारेणैव सँय्युतम् ॥ उदात्तमनुदात्तेन प्रश्लिष्टं तं निबोधत ॥ ६ ॥ यथा (३) अभि इन्धताम् अभीन्धताम् । स्वरिते चेत्स्वरे चैव विवृत्त्या यत्र दृश्यते ॥ पादवृत्तो भवेत्स्वारः श्विऽआदिर्त्वेति निदर्शनम् ॥ ७ ॥ यथा (४) पुत्र ऽइधे । अलमनया प्रसङ्गागतचिन्तया प्रकृतमनुसरामः । यथा मन्त्रे हृदि उदात्तादयो भवन्ति तथा ब्राह्मणेऽपि भवन्तीत्याह ॥

## ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वारौ ॥ ८ ॥

उदात्तानुदात्तौ (५) भाषिकलक्षणलक्षितौ स्वरावेव स्वारौ स्वार्थेऽण् । ब्राह्मणे शतपथे भवतः । पूर्वं "द्वा"विति सूत्रेणोक्तमेवार्थं स्पष्टतायै अनूच्यते । मूर्द्धिं हृदि च भवत इत्यनुवृत्त्या लभ्यते । चरकाणां ब्राह्मणे

(१) २० । ८१ ॥
(२) १ । १ ॥
(३) ११ । ६१ ॥
(४) ११ । ३२ ॥
(५) भाषिकं नाम ब्राह्मणस्वरलक्षणविधायकं एतत्प्रतिज्ञासूत्रपरिशिष्टस्य भाषिकसूत्रपरिशिष्टम् । "अथ ब्राह्मणस्वरसंस्कारनियम" इत्यादि त्रिकाण्डकात्मकं सभाष्यं वक्ष्यमाणमग्रे मुद्रापयिष्यमाणं ज्ञातव्यं बुधैरिति ॥

तु मन्त्रवत्त्रैस्वर्यमिति । खाण्डकीयौखीयानां चातुःस्वर्यमपि क्वचित् । वाष्कलादिब्राह्मणानां तानरूपैकस्वर्यमिति, साम्नां मन्त्रेऽपि सप्तस्वर्यं प्रातिशाख्येऽभिहितम् । एवं मन्त्रब्राह्मणात्मके वेदे स्वरप्रक्रियामुक्त्वा वेदाङ्गकल्पेऽप्येवमेव स्यादतआह ॥

## तानस्वराणि छन्दोवत्सूत्राणि ॥ ९ ॥

सूत्राणि सूचनात्सूत्रमुच्यतइति । सूत्राणि कल्पाख्यानि श्रौतस्मार्तप्रतिपादकानि छन्दोवच्छन्दसा तुल्यानि स्वरसंस्कारनियमेनेति शेषः । छन्दसि नियमस्तथा सूत्रेष्वपि तन्नियमो भवति वेदाङ्गत्वात् । सूत्रोपादानाच्छूङ्गग्राहिकन्यायेनेतरेषु वेदाङ्गेषु छन्दादिषु स्वरसंस्कारौ नियमेन भवतीति गम्यते । छन्दोवदित्यत्र 'येन तुल्य'मिति भवति नोदात्तादीनामप्यात्वेपो भविष्यतीत्युक्तं, तानस्वराणीति तानएकश्रुतिः स्वरो येषां तानि तानस्वराणि तथाच संस्काराः "अनुस्वारस्य ळं॰मित्यादेशादिरूपाः छन्दसि यथा तथाऽत्रापि भवन्ति परं तु उदात्तादिस्त्रैस्वर्यन्न भवति किन्तु एकस्वर्यं किं तत् तानस्वर्यं यथा चाङ्कराचार्य्यपादाः । (१) तानो वा नित्यत्वादेकश्रुतिदूरात्सम्बुद्धौ यज्ञकर्म्मणि सुब्रह्मण्या सामजपन्यूँखयाजमानवर्ज्जम् । स्पष्ट एवार्थः ॥

---

(१) कात्यायनश्रौतसूत्रस्य प्रथमाध्यायस्य द्वशमीकण्डिकान्तर्भूतमिदं सूत्रम् ।।

इतिकात्यायनकृते प्रतिज्ञापरिशिष्ट-
सूत्रे प्रथमा कण्डिका समाप्ता ॥

इत्यनन्तदेवयाज्ञिकविरचिते प्रतिज्ञापरिशिष्टसूत्र-
भाष्ये प्रथमा कण्डिका समाप्ता ॥

---

अथ कतिचिदवशिष्टसंस्कारानाह ॥

अथान्तस्थानामाद्यस्य पदादिस्थ-
स्यान्यहल्सँय्युक्तस्य सँय्युक्तस्यापि
रेफोष्मान्त्याभ्यामृकारेण चावि-
शेषेणादिमध्यावसानेषूच्चारणे ज-
कारोच्चारणम् ॥ १ ॥

अथ स्वरप्रक्रियाकथनानन्तरं स्वरपदोपलक्षितसं-
स्कारप्रक्रियोच्यत इति शेषः । यद्वा पञ्चदशयजुःशा-
खासाधारणसंस्कारकथनानन्तर्य्यार्थोऽयमथशब्दः । य-
द्येते संस्काराः प्रातिशाख्ये निबद्धा भवेयुस्तदा सर्वेषां
काण्वादीनामपि स्युरितरोऽपि तेषां पृथगेवोपदेशो
युक्तइति । ननु प्रातिशाख्यस्यान्वर्थसञ्ज्ञाकरणेन प्रति-
शाखं भिन्नत्वात्कथं तेषां धर्मप्राप्तिरिति चेन्नैतदेवम् ।

यतः प्रतिपञ्चदशशाखायां भिन्नानि प्रातिशाख्यानि नोपदिष्टानि किं तु श्रौतस्मार्त्तसूत्रवत्प्रातिशाख्यसूत्रमपि पञ्चदशशाखासाधारणं समाम्नातम् । विज्ञापयति चामुमर्थमाचार्यप्रवृत्तिः । तथाहि "देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वमित्येके" अस्मिन्नेकपदग्रहणमन्यशाखापरमिति भाष्यकृतः । एवं (१) व्वायवस्थेत्युपायवस्थेति चैके इत्यादि । एवं प्रातिशाख्यसूत्रेऽपि शाखान्तराभिप्रायेण "हरिशयेत्येके" इत्यादिषु एकपदमन्वोचत् । एकस्यामेव शाखायां मतान्तरेण पाठान्तरमिति विरोधीति सङ्क्षेपः । प्रतिशाखासु भवं प्रातिशाख्यमिति सम्भवाभिप्रायेण बहुवचनान्तयोगेनापि निर्वाह इत्यास्तान्तावत् ॥ अन्तस्थानामाद्यस्योच्चारणे जकारोच्चारणमित्यनेनान्वयः कर्त्तव्यमितिशेषः । न च न ज्ञायतेऽन्तस्था इति पदार्थबोधस्य वाच्यम् । ज्ञायतेऽन्तस्था इति वक्तव्यम् । कथं ज्ञायतेऽन्तस्था इति ज्ञापयन्त्येवाचार्याः । यदाहुः प्रथमाध्याये "उपदिष्टा वर्णा"इति, अष्टमाध्याये "अथातो वर्णसमाम्नायं व्याख्यास्याम" इति, "तत्र स्वराः"। अइति । आइति । आ३इति। इइति। ईइति। ई३इति। उइति । ऊइति । ऊ३ इति । ऋइति । ऋ२इति । ॠ३ इति । लृइति । लॄइति । लॄ३इति । एइति । ए३ इति । ऐइति । ऐ३ इति । ओइति । ओ३इति । औइति ।

(१) तैत्तिरीयकण्वशाखिनोः संहितायाः पाठः ॥

औ३इति ॥ "अथ स्पर्शाः" । किति खिति गिति घिति ङिति कवर्गः । चिति छिति जिति झिति ञिति चवर्गः । टिति ठिति डिति ढिति णिति टवर्गः । तिति थिति दिति धिति निति तवर्गः । पिति फिति बिति भिति मिति पवर्गः । "अथान्तस्थाः" । यिति रिति लिति विति । "अथोष्माणः" । शिति षिति सिति । हिति । इति व्यञ्जनानि । "अथायोगवाहाः" । अकारादिस्वरयोगे स्वरूपं वहन्ति ते केवलाः । ᳵकइति जिह्वामूलीयः । ᳶपइत्युपध्मानीयः । अं इत्यनुस्वारः । अः इतिविसर्जनीयः । ङ्ँ इति नासिक्यः । कुँखुँगुँघुँ एते यमाः । इत्यन्तस्थादीन् "निर्देश इतिना" "कारेण च" । आभ्यां सूत्राभ्यां वर्णनिर्देशः । तथा चान्तस्थामाद्यस्य यकारस्य स्थाने यकारोच्चारणं भवति । अत्र लाघवाद्यकारस्येतिवक्तव्ये लिपिभ्रमात्साहश्याद्वाऽन्यस्य यकारादिकस्य मा भूदित्यन्तस्थानामाद्यस्येति ग्रहणम् । एवमन्यत्राप्यूह्यम् । सर्वस्य प्राप्तमतस्तं विशेषयति पदादिस्थस्येति । सुबाद्यन्तस्य पदस्यादिः पदादिस्तस्मिन्निति, पदादिस्थस्य यथा (१) युञ्जानः प्रथमम् । अत्र पदादिस्थत्वाद्यकारस्य स्थाने जकारोच्चारः । पदादिस्थस्येति किम् । (२) तत्त्वायं । धियः । अत्र मा भूत् । (३)अस्मिन्यज्ञे

(१) ११ । १ ॥

(२) इदमपि तथा ॥

(३) १९ । ५७ ॥

इत्यत्रातिप्रसङ्गाद्भागासिद्धेर्वा पुनर्विशिनष्टि । अन्यह-लसँय्युक्तस्येति । अन्येन हला व्यञ्जनेनासँय्युक्तस्य योग-मप्राप्तस्य यथा । इदमुदाहरणं प्रत्युदाहरणं च । (१) अस्मिन्यज्ञे । स्वधया । (२) घृताचीर्य्यन्तु । हर्य्यतेत्यत्र पदादिस्थत्वाभावान्न स्यादतस्तं पुनर्विशिनष्टि । सँय्यु-क्तस्येति । रेफो रकारः ऊष्मणामन्त्यो हकार आभ्यां युक्तस्यापि अविशेषेण पदादिस्थत्वादिविशेषमन्तरेणा-दिमध्यावसानेषु पदस्थस्येत्यर्थः । जकारोच्चारणम् । यथा (३) सूर्य्ये वर्ज्ञा । (४) हर्य्यत । घृताचीर्य्यन्तु । व्युत्क्रमेणान्तमध्यादीनामुदाहरणानि । घृताचीर्य्यन्तु-त्वित्यत्रोभयत्र प्रयोजकम् (५) कणुह्यद्भुरन्तः । (६) गे-ह्याय च (७) तेन मह्यँव्वेदो भूयाः । इति क्रमेणा-दिमध्यावसानेषु हकारयुक्तोदाहरणम् । एताभ्यामेव युक्तस्येति किम् । (८) भर्गो देवस्य । (९) अह्यवोचत् ।

---

(१) इदमपि तथा ॥

(२) ३ । ४ ॥

(३) ३३ । ३९ ॥

(४) पूर्वोक्तमुदाहरणं ज्ञेयम् ॥

(५) २९ । २७ ॥

(६) १६ । ४४ ॥

(७) २ । २१ ॥

(८) ३ । ३६ ॥

(९) १६ । ५ ॥

अत्र मा भूत् । आभ्यां युक्तत्वेऽपि । (१) अग्निञ्ज्योतिरित्यत्र मा भूदिति काकाक्षिगोलकन्यायेन पुनरुपात्तेन अन्यहलसंयुक्तेति विशेषणेन सम्बध्यते । (२) अग्निञ्ज्योतिः । (३) व्यष्याय च । न केवलमाभ्यामत आह । ऋकारेण चेति । ऋकारेण संयुक्तस्य यकारस्य च । अत्रापि चकारादविशेषेणेत्यादिकमन्वेति । यथा (४) सामान्यृग्भिः । अत्र लाघवेन रेफोष्मान्त्यऋकारैः परे इति वक्तव्ये भिन्नपदोपादानेनान्यहलसंयुक्तस्येति न विशेषणीयमिति ध्वन्यते । तथा च सामान्यृग्भिरित्यत्रान्यहल्योगेऽपि चवर्गतृतीयोच्चारणं भवतीति । अत्र संयुक्तपदेन योगोऽभिधीयते । पारिभाषिकोऽपि क्वचित् । अन्यहलसंयुक्तस्येति विशेषणात् (५) भुर्य्यौ, (६) नृपार्य्यमित्यादिषु न स्यादत आह ॥

## द्विर्भावेऽप्येवम् ॥ २ ॥

एवं पदादिमध्यावसानेषु यकारं द्विर्भावे द्वित्वे स-

---

(१) ३ । ९ ॥

(२) पूर्वोक्तमुदाहरणं बोध्यम् ॥

(३) १६ । ३९ ॥

(४) २० । १२ ॥

(५) २ । १७ ॥

(६) २० । ८१ ॥

ति ज्ञेयम् । द्वित्वसिद्धमसिद्धं वोपादीयते । यथा (१) धाय्याः (२) नृपाय्यम् । (३) धुर्य्यौ । प्रातिशाख्ये ऽपि भगवता कात्यायनेन याज्ञवल्क्येन चेषत्स्पृष्टस्य यकारस्य पदादिस्थले पञ्चदशशाखासाधारण्येन स्पृष्टप्रयत्नता विहिता । अतः सम्प्रदायविद एवं विधे यकारे स्पृष्टप्रयत्नज्ञापनाय मध्ये बिन्दुं प्रक्षिपन्ति । स्पृष्टप्रयत्नं स्थानैक्याच्चवर्गतृतीयसदृशं यकारं पठन्ति च । अन्तस्थप्रकरणसङ्गत्याऽऽह ॥

## अथापरान्तस्थस्यायुक्तान्यहलः सँय्युक्तस्योष्मऋकारैरेकारसहितोच्चारणम् ॥ ३ ॥

(१) १२ । २४ ॥

(२) पूर्वोक्तम् ॥

(३) तथोदाहरणं ज्ञेयम् ॥

(४) १ । २२ । सँय्यौमीत्यत्र "अन्तस्थामन्तस्थास्विति प्रा० ४ अ० १० सूत्रेण सानुनासिको द्वितीयो यकारः । १० । ८ । जराय्ट्वसि । अत्र स्वरात्सँय्योगादिरित्यनेन प्रा० अ० ४ सू० १०० त्रेण द्वित्वम्भवति । अत्र कश्चन विशेषोऽमोघनन्दिन्यां शिक्षायामुक्तः । उपसर्गात्परस्य यकारस्य न जकारोच्चारणम् । १७ । ९ । उप यज्ञर्ठ० हविश्च नः । द्विर्भावेऽयन्निषेधो न भवति । १ । २२ । सँय्यौमि । पदान्तत्वेन सिद्धे पुनर्जकारोच्चारणविधानं तेनोपसर्गात्परत्वेऽपि ८ । ३५ । स्तुतीरूपं यज्ञं च मानुषाणाम् । ३ । ५ । अनु योजान्विन्द्रेत्यत्र चवर्गतृतीयोच्चारणं कर्त्तव्यमत एवामरेशकृतवर्णरत्नप्रदीपिकायां प्रातिशाख्यानुसारिण्यां शिक्षायां प्रतिपादितम् । अनु योजान्विन्द्र ते तु उप यज्ञं तथा विना । अवग्रहे च १ । १२ । देवयुवमि-

अथाद्यान्तस्थकथनानन्तरं अपरान्तस्थस्य द्वितीयान्तस्थस्य रेफस्येति यावत् । कीदृशस्य अयुक्तान्यहलः अयुक्तं योगमप्राप्तं अन्यद्धल् यस्मिन् अयुक्तान्यहल् तस्यायुक्तान्यहलः तस्य ऊष्मणकृकारैः सँयुक्तस्य ऊष्माणः पूर्वोक्ताः शषसहाः तैर्युक्तस्य एकारसहितोच्चारणं एकारसहितमुच्चारणं कर्त्तव्यमिति शेषः । अत्रापि मण्डूकप्लुतिन्यायेनाविशेषेणादिमध्यावसानेष्वित्यनुवर्त्तते । उदाहरणम् । यथा (१) सृज प्रशस्त दर्शतम् । इत्यत्र दरेशतमित्येवं पाठो न तु रेफसहितः । एवमन्यत्र । (२) व्रर्षो वर्षीयसि । सकारोदाहरणे षकारोदाहरणमेव भवति । तथा च इण् कवर्गाभ्यां परस्य षस्य मूर्द्धन्य इति स्मृतिः । इण् मध्ये रेफस्य पाठेन तदुत्तरस्य सकारस्य षकार एव स्यात् । पूर्वेणाण्ग्रहाः सर्वे परेणाण्ग्रहाः स्मृता इति च । (३) ब-

ति देव । युवम् । इत्यत्र यकारस्य जकारोच्चारणम् । अथो पूर्वकस्य यकारस्य नजकारोच्चारणम् । यथा १६ । ८ । अथो ये अस्य सत्वानः । अत्र याज्ञवल्क्येन शिक्षायां विकल्पेन जकारोच्चारणं कृतम्भवति, अथ मासनशब्देभ्यो विभाषाम्रेडिते यवौ । अथ मा स न शब्दपूर्वकस्य विकल्पेन । जकारोच्चारणं भवति यथा २० । ८२ । न यत्परं ÷ । १५ । ३२ । स योजते अत्रोदाहरणद्वये जकारोच्चारणं न भवति । ६ । २८ । स यन्ता । ७ । १७ । मनो न येषु । अत्रोदाहरणद्वये जकारोच्चारणं भवति । अत्र विकल्पे विषये सम्प्रदाय एव प्रामाणिकानां शरणमिति ॥

(१) ११ । ३६ ॥

(२) ६ । ११ ॥

(३) २ । १ ॥

हरिरसि। बर्हिषे त्वा। (१) अयं ते योनिर्ऋत्वियः। (२) निर्ऋते तुभ्यम्। अयुक्तान्यहल् इति किम्। (३) वर्ष्यीय च। (४) यज्ञपतिर्ह्वार्षीत्। (५) अनु मार्ष्टु। अत्र मा भूत्। एभिर्युक्तस्येति किम्। (६) ऊर्ज्जे त्वा। प्रार्प्पयतु। अत्र मा भूत्। उक्तं च माध्यन्दिनशिक्षायाम्। "शषसहा यत्र दृश्यन्ते रेफेणाङ्कितमस्तकाः। स्वरं भक्तं प्रयुञ्जीत सँय्योगे नैव कारयेत्"। तथैव सङ्गत्याह॥

## एवं तृतीयान्तस्थस्य क्वचित्॥ ४॥

एवं संयुक्तासंयुक्तस्थले तृतीयान्तस्थस्य लकारस्य क्वाचित् लव्ध्यानुरोधेन पूर्वोक्तं एकारसहितोच्चारणं कर्तव्यमिति यथा (७) शतवल्शो विरोह सहस्रवल्शाः। (८) उपं वल्हामसीत्यत्र वलेहामसीत्युच्चारः। एवमन्यमप्युदाहरणमूह्यम्। अत्र रलयोः सावर्ण्यान्नित्यताज्ञापनार्थं पुनर्ग्रहणम्। एकारोच्चारणादेशप्रसङ्गा-

(१) ३। १४॥
(२) १२। ६२॥
(३) १६। ३९॥
(४) १। २॥
(५) ८। १४॥
(६) १। १॥
(७) ५। ४५॥
(८) २३। ४९॥

दाह ॥

ऋकारस्य तु सँय्युक्तासँय्युक्तस्या-
विशेषेण सर्वत्रैवम् ॥ ५ ॥

तु पुनः ऋकारसंयुक्तस्य असंयुक्तस्य च अविशेषेण सर्वत्रादिमध्यावसानेषु एवं एकारसहितोच्चारणं कर्त्तव्यमित्यनुषङ्गः । यथा (१) ऋताषाट् । ऋतधाम । इदमसंयुक्तोदाहरणम् । संयुक्तोदाहरणँय्यथा (२) सृज प्रशस्त । (३) कृणुहि । (४) पितृन् । (५) सामान्यृभिरित्यादि । अत्र ऋताषाडित्यादिपाठः । "ऋऌवर्णयोः सावर्ण्यात्प्रायशो लब्ध्याभावाच्च ऌकारग्रहणम् (६) । पुनरेतस्य प्रसङ्गादाह ॥

अथान्त्यस्थान्तस्थानां पदादिमध्या-
न्त्यस्थस्य त्रिविधं गुरुमध्यमलघुवृ-

(१) १८ । ३७ ॥

(२) ११ । ३६ ॥

(३) १० । ३२ ॥

(४) १९ । ७० ॥

(५) २० । १२ ॥

(६) एवं तृतीयान्तस्थस्य लकारस्य क्वचिदुदाहरणानि लत्वपराणि तत्र ले इत्युच्चारणम् । ५ । ४५ । शतवल्शाः । २३ । ४९ । उप वल्हामसि । वार्त्तिकेन सावर्ण्यात् ऌकारस्यापि ले इत्युच्चारः । १८ । ११ । कॢप्तं च मे कॢप्तिश्च मे ॥

**त्तिभिरुच्चारणम् ॥ ६ ॥**

अथ तृतीयान्तस्थादेशकथनानन्तरं अन्तस्थानामन्त्यस्य वकारस्येति यावत्। त्रिविधं प्रकारं गुरुमध्यमलघुवृत्तिभिः प्रयत्नैरुच्चारणं कर्त्तव्यमित्युच्यते। एतच्च क्रमेण ज्ञेयम्। तदुक्तम्महर्षिणा याज्ञवल्क्येन। "वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः। आदौ गुरुर्लघुर्मध्ये पदान्ते च लघूतर इति। (१) व्वायवस्थ। देवो वं÷। अन्तस्थादेशोपदेशानन्तरमूष्मप्रसङ्गादाह ॥

**अथो मूर्द्धन्योष्मणोऽसँय्युक्तस्य टुमृते सँय्युक्तस्य च खकारोच्चारणम् ॥ १२ ॥**

अथो अन्तस्थादेशोपदेशानन्तरं मूर्द्धन्योष्मणो मूर्द्धन्यश्चासौ ऊष्मा च मूर्द्धन्योष्मा तस्य मूर्द्धन्योष्मणः षकार-

(१) १। १। अत्रापि कश्चन विशेषोऽमोघनन्दिन्यां शिक्षायाम्। उपसर्गपरो यस्तु स वकारो लघुर्मतः। ये ये पदादिस्थयकारविषये निषेधास्ते वकारेऽपि प्रत्येतव्याः। यथा ३३। ५५। प्र वायुमच्छा। ११। १३। अथा वयम्। विशेषस्तु संहितापाठे वः। वाम् वा। वै। वि। वौ। एषूदाहरणेषु वकारा लघवो भवन्ति। यथा १। १। देवो वं÷। ७। ११। या वाम्। ९। ७। व्वातो वा मनो वा। २३। १७। न वा ऽउ ऽएतत्। २७। ३३। ता विमुञ्च। अत्रापि तदेव शिक्षाप्रमाणम्। वोवा वा वै मन्त्रपाठे लघवो गुरवः पदे। पदपाठे तु व्वाम् इत्यादीन्युदाहरणानि स्वयमूह्यानि ॥

रस्येति यावत्। (१) "षटौ मूर्द्धनी"ति सूत्रात् ष-कारो मूर्द्धन्यः स्थानकरणपरित्यागेनार्द्धस्पृष्टषकार-स्थाने कवर्गीयप्रतिरूपकं खकारोच्चारणं कर्त्तव्यम्। सर्वत्र प्राप्तौ विशिनष्टि। असँय्युक्तस्येति। न संयुक्तो-ऽसंयुक्तस्तस्य। यथा (२) इषे त्वा। (३) सहस्रशीर्षा पुरुषः। (४) व्विभर्ष्यस्तत्र इत्यत्र न स्यादतआह। टुसते सँय्युक्तस्येति। टुं टवर्गं विना संयुक्तस्य हल्यु-क्तस्य च भवति। यथा (५) शष्पाय च। टवर्गग्रहणं किम्। (६) कृष्णोऽसि। (७) श्रेष्ठतमाय। (८) प्र-त्युष्टम्। उगितत्त्वाद्वर्णग्रहणम्। (९) "प्रथमग्रहणे वर्ग"मिति प्रातिशाख्येयसूत्रात्। उक्तं च माध्यन्दि-नीयशिक्षायाम्। "पदस्याद्यन्तमध्ये स्यात्खकारोच्चा-रणं षिति। तृतीयवर्गयोगे तु षएव स्यात्सदैव ही" ति। षकारस्थाने स्यादित्यर्थः। इति शब्दात्तेन वर्ण-निर्द्देशः कार्य इति प्रातिशाख्यात्। सर्वत्र संयुक्त इति

(१) प्रा० १ अ० सू० ६७॥
(२) १। १॥
(३) ३१। १॥
(४) १६। ३॥
(५) १६। ४२॥
(६) २। १॥
(७) १। १॥
(८) १। ७॥
(९) प्रा० १ अ० सू० ६४॥

प्रहे एकादि हल्परतया ज्ञेयम् । संयुक्तशब्देन वर्णसंयोगग्रहणं न तु पारिभाषिको "हलोऽनन्तराः संयोग" इति (१)॥ एवमादेशाः कदा भवन्ति इत्यपेक्षायामाह ॥

## अद्ध्ययनादिकर्म्मस्वर्थवेलायां प्रकृत्या ॥९२॥

एते संस्कारा अध्ययनादिकर्मसु यजनयाजनजपादिसङ्ग्रहार्थमादिपदोपादानं अर्थवेलायां मन्त्रार्थवेलायां प्रकृत्या प्रकृतिरूपेण । मधोः अरिः । पदकाले, मध्वरिः । संहिताकाले लोकोदाहरणम् । वेदेतु प्र अप्पर्यतु । प्रार्प्पयतु । तथा अर्थकाले अग्निमीडे । अग्निमीळे । इत्यादिवत्सर्वे पूर्वोक्ता वर्णाः पूर्वप्रकृत्याः स्युरिति भावः । अस्ति चास्यार्थचिन्तने महत्फलमावश्यकता च । तदुक्तं समावर्त्तनसूत्रे "वेदं० समाप्य स्नाया"दित्यत्र भाष्ये ॥ (२) ॥

---

(१) अत्रापि कश्चिद्विशेष उक्तो लघुमाध्यन्दिनीयशिक्षायाम् । षकारस्य खकारः स्याट्टुकयोगे तु नो भवेत् । टवर्गयुक्तस्योदाहरणं भाष्ये प्रोक्तं ककारयुक्तोदाहरणं तु क्षकाराक्षरे षकारयुक्तमुच्चारणीयम् । अवयवसम्भवनेऽपि मातृकादौ गणनादेकवर्णत्वादवयवविभागाभावे न खकारोच्चारणं भवति । ककारयोगे खकारोच्चारणाभाव इति नियमस्तु न १६ । ७५ । शुष्कँ्यर्याव च । इत्यादौ विपरीतसंयोगे ककारयोगेऽपि खकारोच्चारणसत्त्वात् ॥

(२) पारस्कराचार्यकृतगृह्यसूत्रस्य द्वितीयकाण्डीयसप्तम्याः कण्डिकाया हरिहरकृतभाष्ये स्पष्टमुक्तम् ॥

इति कात्यायनकृतौ प्रतिज्ञापरिशिष्टसूत्रे द्वितीया कण्डिका ॥ २ ॥

इति प्रतिज्ञापरिशिष्टसूत्रभाष्ये द्वितीया कण्डिका समाप्ता ॥ २ ॥

---

अयोगवाहस्यानुस्वारस्यादेशं वक्तुमारभते ॥

अथानुस्वारस्य ꣳमित्यादेशः शषसहरेफेषु ॥ १ ॥

अथोष्मादेशोपदेशानन्तरं अनुस्वारस्य ꣳमिति ꣳकार आदेशः स्याद्रोष्मसु परेषु इति सूत्रात् ꣳमित्युपदेशः सनिमित्तमादेशं विभजते ॥

तस्य त्रैविद्ध्यमाख्यातꣳ ह्रस्वदीर्घगुरुभेदैर्दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः ॥ २ ॥

तस्य ꣳकारस्य ह्रस्वदीर्घगुरुभेदैस्त्रैविध्यं त्रिः प्रकारत्वमाख्यातमुक्तम् । ह्रस्वादीनां लक्षणान्युक्तानि "एकमात्रो ह्रस्व" इत्यादिना । वस्तुतस्तु गुरुदीर्घयोर्भेदो नास्ति तथाऽप्युपाधिभेदाद्भेदो मन्तव्यः । अस्ति चात्रो

ण्धिः । सञ्ज्ञाभेदो निमित्तभेदो लिपिभेदश्च । तृतीयस्तु इदानीं प्रायशः परिभ्रष्टस्तथापि प्राचीनसम्प्रदायानुरोधाद्विज्ञायते । तत्र दीर्घादक्षरात्परो दीर्घो भवति गुरौ संयुक्ताक्षरे परे गुरुर्भवति न तु दीर्घे परे असम्भवात् । अत एव दीर्घादक्षरादित्यत्र गुरोरक्षरादिति न भवति । क्रमेणोदाहरणानि । यथा (१) त्रिंशद्धाम इत्यत्र त्रिꣳ शद्धाम । (२) पिꣳ षन्तेति । (३) भूयासꣳ सुगृहपतिः । (४) शतꣳ हिमाः । (५) सꣳ रायस्पोषेण । इत्यादिषु ह्रस्वात्प-

---

(१) ३ । ८ ॥

(२) हविर्यज्ञकाण्डस्य १ प्रपाठकस्य ६ ब्राह्मणस्य ४ खण्डस्य । अनुस्वाररूपस्य ꣳकारस्यार्द्धमात्रिकता भवति व्यञ्जनं चार्द्धमात्रिकमिति शास्त्रात्, तथापि प्रातिशाख्यस्य ४ अ० १४८ । १४० "अनुस्वारो ह्रस्वपूर्वोऽध्यर्द्धो मात्रा पूर्वा चार्द्धमात्रेति" । "दीर्घादर्द्धमात्रा पूर्वा चाध्यर्द्धेति" द्वाभ्यां सूत्राभ्यां सार्द्धैकमात्रा प्रतिपादिता, अत एव याज्ञवल्क्यमहर्षिणा शिक्षायां गुरौ ꣳकारे लघौ ꣳकारे दीर्घे ꣳकारे च क्रमेणाङ्गुष्ठाङ्गुलिप्रक्षेप उक्तः । अनुस्वारेऽङ्गुष्ठक्षेपश्चाङ्गुष्ठाकुञ्चनं लघौ । दीर्घे रङ्गे च तर्जन्याः प्रसारः परिकीर्त्तित इति । रङ्गलक्षणं पाणिनिनोक्तं यथा सौराष्ट्रिका नारी तक्राँ इत्यभिभाषते । एवं रङ्गाः प्रयोक्तव्याः खे अराँ ऽइव खेदया । १ । एवं कङटपतनपमेषु हल्वर्णेषु तर्जन्यङ्गुल्यधो नामनं मुष्ट्याकारं नखग्रहणं कुण्डलाकारं पञ्चाङ्गुलिमेलनमेतत्सर्वं क्रमशो हस्तप्रदर्शनमूर्द्धरेतसां योगिनां त्रिकालज्ञानां महर्षिणामनुभवसिद्धमिति । आसामङ्गुलिमुद्राणां शिक्षोक्तं लक्षणं मया । प्रातिशाख्येऽष्टमाध्याये लिखितं विदुषां मुदे । १ । इति ॥

(३) २ । २८ ॥

(४) २ । २७ ॥

(५) ३ । २० ॥

वी दीर्घः । (१) पृथिव्याᳬ शतेन पाशैः । (२) यूपाᳬ र्षि नाम । (३) सस्वाᳬसः । (४) बर्हिरङ्क्ताᳬ कृषि । (५) त्विषाᳬ रयीणाम् । इत्यादिषु दीर्घात्परो ह्रस्वः । (६) भेषजᳬ स्त्रिया । (७) कल्पताᳬ स्रोतस् । (८) दᳬष्ट्राभ्यास् । (९) पुरोडाशैर्हवीᳬष्या । (१०) सोमानᳬ स्वरणम् । (११) सप्तर्षीणाᳬ स्तुतेन । (१२) सिᳬह्यसि । एवं रेफे परे संयोगोदाहरणमथोच्य-

(१) १ । २५ ॥
(२) १२ । ४ ॥
(३) ८ । १८ ॥
(४) २ । २२ ॥
(५) ३ । १३ ॥
(६) २१ । ३८ ॥
(७) ३२ । ३३ ॥
(८) ११ । ७८ ॥
(९) १९ । २० ॥
(१०) ३ । २३ ॥
(११) ३ । २० ॥
(१२) ५ । १० । अत्रापि कश्चिद्विशेषोऽमोघनन्दिन्यां शिक्षायाम् । अनुस्वारो द्विमात्रः स्याद्वर्णव्यञ्जनोदये । उदाहरणं १६ । ४६ । देवानाᳬ हृदयेभ्यः । २५ ३६ । यत्रीक्षणं माँस्पचन्या इत्यत्र तु न ठं०कारोच्चारणम् । अनुस्वाराभावात् । ऋग्वेदप्रातिशाख्यसूत्रेण नकारलोपादिस्वरानुनासिकत्वयोर्विधानात्तदनुस्वारस्यैवाविद्यात् । अत्र विशेषानुक्तेः । प्रातिशाख्ये "अलोपो माँस्पचन्या" इति सूत्रटिप्पण्यां मया ऋग्वेदप्रातिशाख्यस्य सूत्रमुक्तं तस्मादत्र नोक्तमिति ॥

न । अषसहरेफेष्विति किम् । (१) भार्गं प्रजावर्ती: । (२) शतधारम् । सहस्रधारम् । अत्र मा भूत् । एतादृक्स्थले किं स्यादत आह ॥

## परसवर्णेषत्प्रकृत्या चान्यत्र ॥ ३ ॥

अन्यत्र यवलपरत्वाभावे परसवर्णेषत्प्रकृत्या परसवर्णा ईषती चासौ प्रकृतिश्च तया उच्चारणं भवति । यथा (३) युञ्जान इत्यत्र किञ्चित् अकारोच्चारणमनुस्वारस्यादेशः परसावर्ण्यात् । (४) भागम्प्रजावर्ती: (५) तन्त्वा समिद्धि: । (६) त्वाङ्गन्त्वर्व्वा इत्यादि । अयोगवाहप्रसङ्गादाह ॥

## विसर्गेष्वीषद्विरामः ॥ ४ ॥

विसर्गेषु अः इत्यादिषु ईषद्विरामः किञ्चिद्विरम्यते विसर्गस्य स्पष्टोच्चारणार्थम् । यथा (७) वसो: प-

---

(१) १ । १ ॥
(२) १ । ३ ॥
(३) ११ । १ ॥
(४) १ । १ ॥
(५) ३ । ३ ॥
(६) १२ । ९८ ॥
(७) १ । २ ॥

वित्त्रम् । (१) पुरुषः सोमावेष्टम् । ईषत्स्पृष्टयाऽऽह ॥

**पदाद्यस्य सँय्युक्ताकारस्येषद्दीर्घता च भवति ॥५॥**

अकारस्य ईषद्दीर्घता भवति ईषद्दीर्घोऽप्युच्चारणं कर्त्तव्यम् । (२) अश्मन्नूर्ज्जम् इत्यत्र मा भूदत आह संयुक्तेति । अत्रापि सँय्युक्तशब्देन योगः व्यञ्जनयुक्तस्ये- त्यर्थः । (३) व्वायवस्त्थेत्यत्र मध्यमवकारान्तर्गताकार-

---

(१) ४० । १७ । अयोगवाहा विज्ञेया आश्रयस्थानभागिन इति । पाणिनीय- शिक्षायामुक्तत्वादेकमात्रिकस्याग्रे एकमात्रिको विसर्गः प्राप्तः परन्तु स्थानत्वेन विभागः कृतः पाणिनिना न तूच्चारणत्वेन उच्चारणं तु विसर्गस्य नान्तरीयकार्द्धमात्राकालापे- क्षया किञ्चिदधिकमवसानं कृत्वाऽग्रिमवर्णोच्चारणं कार्यमित्यदोषः । अत्रापि कश्च- न विशेष उक्तो महर्षिणा भगवता योगियाज्ञवल्क्येन । ऊर्ध्वक्षेपाच्च यथोष्मा अध- क्षेपाच्च यो भवेत् । एकैकामुत्सृजेद्धीरः स्वरिते तूभयं क्षिपेत् । १ । द्विमात्रिके भवेदे- का मात्रिके तूभयं क्षिपेत् । स्वरितं यद्भवेत्किञ्चिद्वकारस्सह संयुतम् । २ । तत्रो- ष्माणि विजानीयान्निक्षेप उभयोरपि । कर्त्तव्यस्तूभयोः क्षेपो वायव्व्यैरिति दर्शनम् । ३ । जात्ये च स्वरिते चैव यकारो यत्र दृश्यते । कर्त्तव्यस्तूभयोः क्षेपः सदस्यैरिति दर्शनम् । ४ ॥ अस्यार्थः । उदात्तात्परे विसर्गे तर्जन्यङ्गुल्याः प्रसारणम् । तत्र हेतुः उदात्तं प्रदेशिनीं विद्यादिति पाणिनीयशिक्षोक्तत्वात् । अनुदात्तात्स्वरात्प्रचयाच्च परे कनिष्ठिकाया अङ्गुल्याः प्रसारणम् । ह्रस्वात्स्वरितस्वरात्परे विसर्गे सत्युभयोस्तर्जनी- कनिष्ठिकयोरङ्गुल्योः प्रक्षेपः । दीर्घात्स्वरात्परे विसर्गे कनिष्ठिकाङ्गुल्याः प्रक्षेपः । वका- रयुक्ताद्दीर्घादपि परे विसर्गे उभयोः प्रक्षेपः । यकारयुक्तजात्यस्वरिताद्दीर्घादपि परे विस- र्जनीये द्वयोरङ्गुल्योः प्रक्षेपः कर्त्तव्य इति ॥

(२) १७ । १ ॥

(३) १ । १ ॥

स्व मा भूदत आह पदाद्यस्येति । (१) त्विड्भ्यादित्यत्र मा भूदत आह्याकारस्येति । यथा (२) त्वसोः पवित्रम् । अत्र वकारपकारयोरीषद्दीर्घोच्चारणं यथा भवति तथा पठनीयम् । एवं (३) परमेष्ठ्यादिषु ज्ञेयम् । अत एवाध्यायसमाप्तौ संहितायां दीर्घपाठे इति सम्प्रदायविदो लिखन्ति ॥

## ईषद्दीर्घता च भवति ॥ ६ ॥

द्विरभ्यासो ग्रन्थपरिसमाप्तिसूचकार्थः । (४) अन्ये विस्तरशः स्वरसंस्काराः पञ्चदशशाखासाधारण्येन प्रातिशाख्ये उपनिबद्धा इति ॥

## इति श्रीकात्यायनकृतौ प्रतिज्ञापरिशिष्टसूत्रे तृतीया कण्डिका समाप्ता ॥

इति श्रीमदनन्तदेवयाज्ञिकविरचिते प्रतिज्ञापरिशिष्टसूत्रभाष्ये तृतीया कण्डिका समाप्ता ॥

(१) ३३ । ३० ॥

(२) १ । २ ॥

(३) १ । २ ॥

(४) ईषद्दीर्घत्वं नाम किम् । एकमात्राकालापेक्षया किञ्चिदधिककालोच्चारणीयं स्यात् । इति प्रतिज्ञापरिशिष्टसूत्रभाष्यटिप्पणी समाप्ता ॥

# अथ भाषिकपरिशिष्टसूत्रम् ॥

अथ भाषिकपरिशिष्टसूत्रभाष्यं लिख्यते ॥

वन्दे विष्णुं सदानन्दं भक्तकल्पमहीरुहम् । यच्छायामाश्रितैर्लभ्यं नरैरर्थचतुष्टयम् ॥ १ ॥ कुपिताद्दिक्पालाच्छाया समीक्षत्यापरं सुखम् । सेवन्ते तत्पदं धीरास्तमनन्तं भजेऽन्वहम् ॥ २ ॥ याज्ञवल्क्यं मुनिं नत्वा कात्यायनमुनीनपि । व्याख्यास्ये भाषिकं सूत्रं कात्यायनमुनीरितम् ॥ ३ ॥ मन्त्रलक्षणभिन्नत्वाच्छतपथब्राह्मणस्य तु । तल्लक्षणाय मुनिना प्रणीतं भाषिकं खलु ॥ ४ ॥ तस्येदमादिमं सूत्रम् ॥

## अथ ब्राह्मणस्वरसंस्कार-नियमः ॥ १ ॥

अथशब्द आनन्तर्यार्थः । अथ मन्त्रलक्षणप्रणयनानन्तरं शतपथब्राह्मणस्वरसंस्कारनियमः क्रियतइति सूत्रशेषः । मन्त्रलक्षणानन्तर्यञ्चैतस्य भाषिकलक्षणस्य सूत्रप्रस्थानादेव ज्ञायते । तथा हि वक्ष्यति । "जात्याभिनिहितक्षैप्रप्रश्लिष्टाश्चे"ति सूत्रेण पूर्वसिद्धं जात्यादिकमनूद्य भाषिकसञ्ज्ञाम् । तथा स्वरितानुदात्तौ चेति सूत्रेण पूर्वसिद्धस्वरितानुदात्तावनूद्य ब्राह्मणे उदात्तं विधास्यति । तेन तदुपजीव्यत्वात्तदानन्तर्यमेतस्य साधूक्तम् । "द्वौ" ब्राह्मणे उदात्तानुदात्तौ

द्वावेव स्वरौ वेदितव्यौ। न नु मन्त्रलक्षणे द्वितीयाध्या-याद्दौ स्वरनियमस्याभिहितत्वान्नेदमारब्धव्यम्। निरा-काङ्क्षत्वादित्यतआह ॥

## उक्तो मन्त्रस्वरः ॥ २ ॥

न च पूर्वोक्तेनेदमन्यथा सिद्धम् । पूर्वोक्तलक्षणस्य मन्त्रविभागविषयत्वात् । अतो नैराकाङ्क्ष्याभावाद्वक्त-व्यमेवेदम् । किं च (१) "करण्य ऋकारे ह्रस्व" मिति विद्यमाने यत्किञ्चर्तुषु क्रियते । (२) "तथर्षीणां तथा मनुष्याणाम्" । तथा (३) "यवयोः पदान्तयोः स्वरम-ध्ये लोप" इति सूत्रे विद्यमाने (४) "इन्द्रश्चैव प्रजापति-स्त्रयस्त्रिंशावविति" । तथा (५) "व्वायविहता व्विसु-च्चे" त्येवमादौ संस्कारवैलक्षण्यदर्शनाच्चारब्धमेवेद-म्। ननूक्तो मन्त्रस्वर इति न वक्तव्यम् । प्रकृते प्रयोज-नाभावादित्यतआह ॥

## तेनात्र सिद्धम् ॥ ३ ॥

तेन मन्त्रस्वरलक्षणेन सिद्धं स्वरमनूद्यात्र शतपथ-ब्राह्मणे स्वरलक्षणं प्रणीयते इति सूत्रशेषः । तत्रा-

(१) प्राति० अ० ४ । सू० ४९ ॥

(२) ब्रा० का० २ प्रपा० ३ ब्रा ४ । कण्डिका ५ ॥

(३) प्रा० अ० ४ । सू० १२५ ॥

(४) ब्रा० का ३ प्रपा० । ब्रा ६ । कण्डिका ८ ॥

(५) २१ । ३३ ॥

द्वौ सञ्ज्ञोच्यते ॥

## उदात्तानुदात्तौ भाषिकस्तत्सन्धिः ॥ ४ ॥

उदात्तश्चानुदात्तश्चेत्युदात्तानुदात्तौ पूर्वं कथितौ तयोः सन्धिस्तत्सन्धिः एकवर्णरूपः स भाषिकसञ्ज्ञः स्यात् । सञ्ज्ञाप्रयोजनमुत्तरत्र भविष्यति । यथा (१) अर्य्यमा आयुः । मा नो मित्रो वरुणोऽर्य्यमायुः तथा (२) भासा । अन्तरिक्षम् । भासान्तरिक्षमा पृण ॥ (३) गव्हरेष्ठा । उग्रम् । गव्हरेष्ठोग्रम् । इत्यादि स्वबुध्या ज्ञेयम् । उदात्तग्रहणं किम् । (४) बुध्यस्व । अग्ने । उद्बुध्यस्वाग्ने । अत्र द्वयोरनुदात्तयोर्भाषिकसञ्ज्ञा माभूदिति । उदात्तानुदात्तौ किम् । (५) जातवेदः । अवाट् । त्वमग्न ऽईडिते जातवेदोऽवाट् । अनुदात्तोदात्तसन्धित्वान्न भाषिकसञ्ज्ञा । सन्धिरिति किम् । ध्रुवा । असदन् । (६) ध्रुवा ऽअसदन् ।

(१) २५ । २४ ॥
(२) १७ । ७२ ॥
(३) ५ । ८ ॥
(४) १५ । ४८ ॥
(५) १२ । ५६ ॥
(६) २ । ६ ॥

(१) काऽ३मरे । अत्रासन्धित्वान्न भाषिकसञ्ज्ञा । कथं भवितव्यम् । (२) उद्दिवꣳस्तभानान्तरिक्षमित्यादौ । इत्यत आह ॥

## अनुदात्तावन्तरेणोदात्तः ॥ ६ ॥

अनुदात्तोदात्तयोः पूर्वमेकादेशः । तस्मिन्सति "उदात्तवानुदात्त" इत्युदात्त एव । तत्र भवतीति सूत्रकृदेकादेशसन्धिर्भाषिकसञ्ज्ञो भवतीत्युक्तवान् । एवं भाषिकसञ्ज्ञामुक्त्वा क्वचिदपवादमाह ॥

## आ प्र पूर्वआख्यातपरो न ॥७ ॥

आ प्र उपसर्गौ पूर्वौ यस्य स आ प्र पूर्वः । आख्यातपरं यस्य स आख्यातपरः । आ प्र पूर्व आख्यातपर उदात्तान्तानुदात्तसन्धिर्भाषिकसञ्ज्ञो न स्यात् । यथा (३) आ । अप्राः । आप्रा द्यावापृथिवी (४) प्र उक्षामि । अग्नये त्वा जुष्टं प्रोक्षामि । (५) प्र अर्प्पयतु । प्रार्प्पयतु । आ प्र पूर्व इति किम् । (६)

---

(१) २३ । ५५ ॥
(२) ५ । २७ ॥
(३) ७ । ४२ ॥
(४) २ । १ ॥
(५) १ । १ ॥
(६) १३ । १६ ॥

ध्रुवा । असि । ध्रुवाऽसिं धरुणा । (१) पूषाऽसि । (२) यन्ताऽसि । (३) स्वधया कृतासि । आख्यातपर इति किम् । (४) आ अयम् । आऽयङ्गौः पृश्निरक्रमीत् । (५) एदमगन्म । प्रेषे भगाय । अत्र न निषेधः ॥

## समासश्चानाख्यातपरो न ॥ ८॥

चकार आ प्रयोरुपसर्गयोरनुकर्षणार्थः । आ प्र पूर्वः समासश्च अनाख्यातपरोऽपि न भाषिकसञ्ज्ञः स्यात् । अनाख्यातग्रहणं आख्याताधिकारनिवृत्त्यर्थम् । अपिशब्द आख्यातपरो यदि समासो दृश्यते सोऽपि न भाषिकसञ्ज्ञः स्यात् । इत्येतदर्थः (६) आ इष्टः । एष्टा रायः । आ सम्यक् इष्टा एष्टा इति समासः । (७) आ इष्टयः । एष्टयो नाम । (८) प्र इद्धः । प्रेद्धो अग्ने । (९) प्र इत्यै । आ इत्यै ।

(१) ३८ । ३ ॥
(२) १९ । २२ ॥
(३) ११ । ७१ ॥
(४) ३ । ६ ॥
(५) ४ । १ ॥
(६) ५ । ७ ॥
(७) इदमपि तथैवोदाहरणम् ॥
(८) १८ । ४३ ॥
(९) २७ । ४५ ॥

प्रैयाऽएत्यै। समास इति किम्। (१) एदम्बर्हिर्नि-षीदत। (२) प्रेषे भगाय ॥

अपूर्वश्च समासो नैव ॥ ९ ॥

अ इति ह्रस्वाकारो गृह्यते। तथा च अकारः पूर्वो यस्य सन्धेः सोऽयमपूर्वः तादृशसमाससन्धिर्न भाषिकसञ्ज्ञः स्यात्। (३) विश्श्व। आयुः। सर्व्व। आयुः। स नो विश्श्वायुः सप्रथाः स नः सर्व्वायुः सप्रथाः। विश्श्व आयुर्यस्येति बहुव्रीहिः समासः। तथा (४) घृता आयुषम्। घृतायुषं क्रुणुहि चीयमानः। (५) चित्रः। ऊतयः। चित्रोतयो वामजाताः। (६) हृद्व आयुम्। हृद्वायुमनु हृदयो जुष्टा भवन्तु जुष्टयः। अपूर्व इति किम्। (७) द्विवीव चक्षुरातंतम्। ह्रस्वपूर्व इति किम्। (८) मातेव

(१) ७ । ३४ ॥
(२) ५ । ७ ॥
(३) ३८ । २० ॥
(४) १३ । ४१ ॥
(५) १२ । १०८ ॥
(६) ५ । २९ ॥
(७) ६ । ५ ॥
(८) १२ । ६१ ॥

पुंस्त्वम् । (१) पितेवं सूनवे । (२) व्वस्न्नेव विक्रीणावहै । समासइत्यनुवर्त्तमाने पुनः समासग्रहणमपूर्वसन्धिमात्रप्रतिपत्त्यर्थम् । तेन । (३) इहेहैषां कृणुहि भोजनानीत्यादि सर्वमुदाहरणं ज्ञातव्यम् । न शब्दैवकारौ अनवधारणार्थौ । (४) नेव वा इदमग्रे सदाऽऽसीन्नेव सदाऽऽसीत् । नेत्यनुवर्त्तमाने पुनर्नेतिवचनमुत्तरत्र प्रतिषेधनिवृत्त्यर्थम् ॥

## जात्याभिनिहितक्षैप्रप्रश्लिष्टाश्च ॥ १० ॥

चशब्दो भाषिकसञ्ज्ञानुकर्षार्थः । जात्यादयश्चत्वारः स्वरिता भाषिकसञ्ज्ञाः स्युः । तल्लक्षणानि तु पूर्वमेवाभिहितानि । "एकपदे नीचपूर्वः सयवो जात्यः"। "एदोद्भ्यामकारो लुगभिनिहितः"। "युवर्णौ यवौ क्षैप्रः"। "इवर्ण उभयतो ह्रस्वः प्रश्लिष्टः"। इति क्रमेणोदाहरणानि। तत्र जात्यो यथा। (५) धान्यमसि । (६)

(१) ३ । २४॥

(२) ३ । ४९ ॥

(३) १० । ३२ ॥

(४) शतपथब्राह्मणस्य दशमकाण्डाग्निरहस्यस्य तृतीयप्रपाठकस्य पञ्चमब्राह्मणस्य प्रथमखण्डस्योदाहरणम् ॥

(५) १ । २० ॥

(६) ३ । ३७ ॥

भूर्भुवः स्वः सुप्रजाइत्यादि अभिनिहितो यथा (१) प्रसवेऽश्विनोः। (२) पूष्णोऽग्नये। (३) त्वेदोऽसि। (४)कोऽसि। इत्यादि। चैप्रो यथा (५) त्र्यम्बकँयजामहे। (६) इवन्नः सर्पिरासुतिः। इत्यादि। प्रश्लिष्टो यथा (७) अभीन्धतामुखे। (८) दिवीव चक्षुः। जात्यचैप्रयोः 'स्वरितानुदात्तौ च' त्यनेनैवोदात्तत्त्वे सिद्धे पुनर्ग्रहणं निघातसिध्यर्थम्। अभिनिहितप्रश्लिष्टयोस्तूदात्तानुदात्तसन्धित्वाद्भाषिकसञ्ज्ञायां प्राप्तायामप्यत्र भाषिकसञ्ज्ञाया अनित्यत्वज्ञापनार्थं पुनर्ग्रहणम्। तेनात्र न सम्भवति। यथा (९) सवितासि सत्यप्रसवः। (१०) इत्यादि सोम इन्मदेवितासि सुन्वतो इक्तवर्हिष इति। (११) आहमजानि गर्भधम्॥

---

(१) १। १०॥
(२) ४। ७॥
(३) २। २१॥
(४) ७। २९॥
(५) ३। ६०॥
(६) ११। ७०॥
(७) ११। ६१॥
(८) ६। ४॥
(९) १०। २९॥
(१०) इदमुदाहरणम् काण्वानाम्॥
(११) २३। १९॥

# उतो यो मो नो सो च ॥ ११ ॥

उतो यो मो नो सो इत्येतेषां पञ्चानामोकारो भाषिकसञ्ज्ञः स्यात् । यथा (१) उतो तऽइषवे नमः । (२) यो मम तनूः । (३) मोऽअहन्तव । (४) नोऽएवासाधुना कनीयान् । (५) सोऽदेवेऽभवत् ॥

# ओञ्चैकेषाम् ॥ १२ ॥

ओङ्कारश्च केवलो भाषिकसञ्ज्ञः स्यात् । एकेषामाचार्य्याणां मतेन । एकशब्दोऽत्रैकदेशवचनः । तेन काण्वाचार्यमतेन न भाषिकसञ्ज्ञइत्यर्थः । यथा (६) सप्तदशाक्षरारायों श्रावयेति । (७) बोधयतातिथिम् । अस्मिन् । एकेषां किम् । काण्वानां मा भूदिति । यथा (८) ता वाएताः पञ्च व्याहृतयः, ओं श्रावयास्तु श्रौषट् यज ये यजामहे वौषडिति । अथेदानीं भाषिकसञ्ज्ञाप्रयोजनमाह ॥

---

(१) १६ । १ ॥

(२) ५ । ६ ॥

(३) ४ । २२ ॥

(४) इदमपि काण्वानाम् ॥

(५) ३४ । ११ ॥

(६) इदमुदाहरणं तथैव ज्ञेयम् ॥

(७) ३ । १ ॥

(८) इदमुदाहरणं तथैवेति ॥

## उदात्तमेतत् ॥ १३ ॥

यद्येतदुदात्तानुदात्तावित्यादिप्रबन्धेन भाषिकसूत्रमुपक्रान्तं तदुदात्तं स्यात् । यथा क्रमेणोदाहरणानि । (१) अर्घ्यमायुः । (२) भासान्तरिक्ष मा पृ-था । (३) चित्रामाऽहँत्सृष्णे । (४) सिठँ० हटँ०सेमम्यात्वटँ० हसः । (५) धान्यमसि । (६) भूर्भुवः स्वः सुप्रजाः । प्रसवेऽश्विनोः । वेदोसि । (७) कुमार्य्यः परियन्ति । (८) त्र्यम्बकँय्यजामहे । (९) द्वन्नः सर्पिरासुतिः । (१०) अभीन्धतामुखे ॥

## स्वरितानुदात्तौ च ॥ १४ ॥

मन्त्रविषये यौ स्वरितानुदात्तावुक्तौ तावपि शतप-

(१) १७ । ७० ॥
(२) १७ । ७४ ॥
(३) १ । १० ॥
(४) १ । २० ॥
(५) ३ । ३७ ॥
(६) १ । १० ॥
(७) इदमपि तथैव ॥
(८) ३ । ६० ॥
(९) ११ । ७० ॥
(१०) ११ । ६१ ॥

यत्र ब्राह्मणे उदात्तो स्यात्। तत्र स्वरितो यथा (१) अकृन्नकर्म्म कर्म्मकृतः । (२) वाजेवाजेऽवत (३) अग्ने नय सुपथा राये ऽअस्मान् । अनुदात्तो यथा (४) एष ते रुद्र भागः । (५) एष ते निर्ऋते भागः । (६) सह वाचा मयोभुवा ॥

## उदात्तमनुदात्तमनन्त्यम् ॥ १५ ॥

मन्त्रधर्मेण यदुदात्तमभिहितं तच्छतपथब्राह्मणेऽनुदात्तं स्यात् । अनन्त्यम् । अन्ते स्थितमन्त्यं तद्वर्ज्यमनन्त्यम् । अनवसितमित्यर्थः । यथा (७) इडऽये । काम्ये । इडे । रन्ते । चन्द्रे । अदिति । सरस्वति । महि । यथा (८) स्वानं । भ्राज । अङ्घारे । बम्भारे । हस्तेत्यादि । अनन्त्यमिति किम् । (९) चक्षुर्मित्रस्य वरुणस्याग्नेः । (१०) विश्वानि देव वयुनानि विद्वान् ।

(१) ३ । ४७ ॥
(२) ९ । १८ ॥
(३) ५ । ३६ ॥
(४) ३ । ५६ ॥
(५) ९ । ३५ ॥
(६) ३ । ४७ ॥

(१) विश्वं जगदभि पित्वे मनीषा । एवमेकोदात्तस्यानुदात्तत्वमभिधाय बहूदात्तेषु नियममाह ॥

## अन्त्यं ठ॰सठ॰हतानाम् ॥ २६ ॥

द्वयोर्बहूनामुदात्तानामेकत्र युक्तानां पौर्वापर्येणावस्थितानां मध्ये यदन्त्यमुदात्तं मन्त्रे तद्भाषेऽनुदात्तं स्यात् । पूर्वेषामुदात्तानां स्वरविशेषानुपदेशान्मन्त्रस्वर एव भवति । यथा (१) आ ब्रह्मन् । (२) व्रते तवानागसोऽअदितये । (३) लाजी३ञ्छाचीँ३ यव्ये गव्ये । (४) आयाद्यामास्या पृथिवीम् । (५) अग्ने युक्ष्वा हि ये तवाश्वासः । इत्यादि विवेक्तव्यम् । अथेदानीं भाषिकसञ्ज्ञे परे विशेषमाह ॥

## भाषिके चोभयेषाम् ॥ २७ ॥

उदात्तानुदात्तौ भाषिकस्तत्सन्धिरित्यादिना भाषिक उक्तः । तस्मिन्परे उभयेषामुदात्तानामनुदात्ता-

---

(१) ३३ । ३५ ॥
(२) २२ । २२ ॥
(३) १२ । १३ ॥
(४) २३ । ८ ॥
(५) १५ । ५७ ॥
(६) १३ । ३६ ॥

नां च । अनुदात्त एव स्यात् । तत्रोदात्तानां यथा (१) चित्रामाहँवृणे । (२) सिंहं हठं सेमम्पात्त्वठं ऋसः । इत्यादि । अनुदात्तानाँयथा (३) भासान्तरिक्षमा पृण । (४) अर्य्यमायुः । (५) धान्यमसि । (६) वैष्णव्यौ । (७) सवितारमोरायोः । (८) निग्ग्राब्ध्यास्त्थ । (९) पयस्या बृहस्पतये (१०) स्तऽउषस्याः । इत्यादिमन्त्रलक्षणेनानुदात्तत्वे सिद्धे पुनरनुदात्तविधानम् । 'स्वरितानुदात्तौ चे'त्यस्यापवादार्थम् ॥

## एकस्यापि ॥ १८ ॥

एकशब्दोचोक्तान्यवचनः । आभ्यामेक इति वत् । तदन्यश्च स्वरित एव । तथा चोदात्तानुदात्ताभ्यामेकोऽन्यः स्वरितस्तस्यापि भाषिके परेऽनुदात्तादेशः स्या-

---

(१) १७ । ७४ ॥
(२) १९ । १० ॥
(३) १७ । ७२ ॥
(४) २५ । २४ ॥
(५) १ । २० ॥
(६) १ । १३ ॥
(७) ४ । २५ ॥
(८) ६ । २९ ॥
(९) २९ । ६० ॥
(१०) २४ । ४ । इमान्युदाहरणानि शुक्लयजुरार्षीयसंहितायां बोध्यानीति ॥

त् । यथा (१) भूत्यै । येदम् । नमो भूत्यै येदं चका-
र । (२) रायः । प्रेषे । एष्टा रायः प्रेषे भगाय । (३)
भुवः । स्वः । भूर्भुवः स्वः । स्वरितस्योदात्तानुदा-
त्तोभयसंप्रयोगे जाते तद्भाषिके चोभयेषा'मित्यनेनै-
व निघाते सिद्धेऽपि यदारभ्यते । पुनस्तद्भाषयति नि-
हन्यमानोऽपि केन चित्प्रकरणेन । केन चिन्निमित्ते-
नायं स्वरितएवेति । किमेतस्य ज्ञापने प्रयोजनम् ।
उच्यते ॥

## स्वरितस्य चाभिनिहितत्वम् ॥ १९ ॥

स्वरितस्वरस्य भाषिकस्याभिनिघातः स्यात् । एवं निघातेऽपि सति स्वरितत्वं स्वरितस्य चाभिनिहितत्वम् । अभिनिहितस्य भाषिकसञ्ज्ञा भवतीति भावः । यथा (४) प्रसवेऽश्विनोः । (६) इष्टेऽग्निमन्नादम् ॥ (७) सरस्वत्यै पूष्णोऽग्नये ॥

## तेषां च प्रागुत्तमादनन्तराणां च

---

(१) १२ । ६५ ॥
(२) ५ । ७ ॥
(३) ३ । ३७ ॥
(४) १ । १० ॥
(५) ३ । ५ ॥
(६) ४ । ७ ॥

## कम्पनम् ॥ २० ॥

तेषां च प्रागुक्तानां बहूनां पौर्वापर्येणावस्थितानामुत्तमात्पूर्वेषामनन्तराणां जात्यन्तरेणाव्यवहितानामनुदात्तानां कम्पनं स्यात् । कम्पनं नामानुदात्तादप्यनुदात्तत्वम् । यथा (१) प्रतिष्ठापयति स्वर्गाके स्वाहेति । (२) यद्देवो देत्यथ वसन्तः । (३) श्रद्धा हि तद्यन्मन्त्वोद्धा तद्यदात्मा (४) आदित्यो ह त्वैवेषोऽग्निश्चितः । (५) सैषा त्र्य्येव विद्या तपति । (६) एवम्वेकेष्टकः । (७) सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यदित्यादि ॥

## उदात्तपूर्वस्यानुदात्तस्य च ॥ २१ ॥

उदात्तः पूर्वो यस्यानुदात्तस्य सोऽयमुदात्तपूर्वः । तादृशानुदात्तस्य भाषिके परे कम्पनं स्यात् । यथा (८) किञ्च न । आममत् । मो चं नः किञ्च नाममत् । (९)

(१) तथोदाहरणम् ॥
(२) तथा ॥
(३) तथैव ॥
(४) तथा ॥
(५) २० काण्डे । ३ प्रपाठके । ४ ब्राह्मणे । २ द्वितीयखण्डे ॥
(६) तथा २२ खण्डे ॥
(७) तथा ॥
(८) तथा ॥
(९) तथैवोदाहरणं बोध्यम् ॥

द्यामे। वित। इमाम्। स दाधार पृथिवीन्द्यामुतेमाम् ॥

## उदात्तपूर्व्वस्य स्वरितस्यापि च ॥ २२ ॥

उदात्तः पूर्वो यस्य स्वरितस्य स उदात्तपूर्वः। तादृशस्य स्वरितस्यापि भाषिके परे कम्पनं स्यात्। अनुदात्ततरं भवतीत्यर्थः। यथा (१) नमो भूत्यै येदं चकार। (२) एष्टा रायः प्रेषे भगाय ॥

## अत्रान्त्यस्योदात्तस्यानुदात्ततां प्रत्येके विवदन्ते ॥ २३ ॥

अत्रान्त्यस्योदात्तस्य सतः अनुदात्ततां प्रत्येके आचार्या विवदन्ते। एकशब्दोऽत्र मुख्यवचनः। तेन काण्वानां मतमिदमिति गम्यते। यथा (३) तस्माद्‌ कुर्य्याद्दिवैतस्य पुरुषस्य बाह्न। तथा। (४) रोचनास्य प्राणादपानतीत्यादि ॥

---

(१) १२। ६५॥

(२) ४। ७॥

(३) शतपथब्राह्मणोदाहरणम्॥

(४) ३। ७॥

## हि ॥ ४ ॥

हिशब्दात्परमाख्यातं विक्रियते । यथा (१) आपो हिष्ठा मयोभुवः । (२) विह्वीमिद्वोऽश्वयत् । (३) शिरो हि प्रथमं जायमानस्य जायते । हिशब्दात्पूर्वमपीति वक्तव्यम् । यथा (४) इन्दवो वामुशन्ति हि ॥

## हन्त ॥ ५ ॥

हन्तशब्दात्परमाख्यातं विक्रियते । यथा (५) हन्त तेऽनया कात्यायनान्तं करवाणीति । (६) हन्ताहमिमं द्वौ प्रश्नौ प्रवक्ष्यामि । (७) हन्तैनं ब्रह्मौघमाह्वयामहा इति । (८) हन्तास्येन्द्रियं वीर्यꣳ सोमपीथमन्नाद्यꣳ हराणीति । अत्र परत्वमर्थतो द्रष्टव्यम् ॥

## नेत् ॥ ६ ॥

नेदित्यस्मात्परमाख्यातं विक्रियते । यथा (९) ने-

(१) १२ । ६ ॥
(२) ७ । ८ ॥
(३) ब्राह्मणोदाहरणम् ॥
(४) इदमपि तथैव ॥
(५) तथा ॥
(६) तथैव ॥
(७) ३ । १६ ॥
(८) ब्राह्मणोदाहरणम् ॥
(९) १० । ३२ ॥

यदपचेतयाते । (१) नेदन्योन्यठं हि न सानीति ।
(२) नेदति रेचनीति ॥

## कुवित् ॥ ७ ॥

कुविदित्यस्मात्परमाख्यातं विक्रियते । यथा (३) कुविदङ्ग यवमन्तो यवञ्चिद्यथा दान्ति । (४) कुविन्मे पुत्रमधीदिति । (५) कुविन्मेऽनुपहूतः सोममवभक्ष-दिति ॥

## अह ॥ ८ ॥

अहइत्यस्मात्परमाख्यातं विक्रियते । यथा (६) नद्वमाहास्य भवतीत्यादि ॥

## समुच्चये ॥ ९ ॥

समुच्चयार्थाच्चकारात्परमाख्यातं विक्रियते । यथा (७) शर्म्म च स्थोवर्म्म च स्थइति । (८) सुज्मा चासि

(१) ब्राह्मणोदाहरणम् ॥
(२) इदमपि तथा ॥
(३) १० । ३२ ॥
(४) ब्राह्मणोदाहरणम् ॥
(५) इदमपि तथा ॥
(६) ११ । ३० ॥
(७) १ । २८ ॥
(८) ३ । ५६ ॥

था कामयते । (१) यतमथा कामयेत । (२) याद्दशादै जायते । इत्यादि ॥

## विनियोगः ॥ १५ ॥

विनियोगार्थकमाख्यातं विक्रियते । विनियोगो नाम मन्त्रादित्वदेवतापदादित्वादिकः । यथा (३) स वा इन्द्राग्निभ्यामुप दधाति । (४) विश्वकर्मणा सादयति । (५) तूष्णीं दर्भस्तम्बमुप दधाति । (६) यजुषाऽभि जुहोति । (७) तूष्णीमुदचमसान्निनयति । (८) यजुषा वपति ॥

## वाक्यशेषः ॥ १६ ॥

वाक्यशेषो यस्मिन्नाख्यातउपलभ्यते तदाख्यातं विक्रियते । यथा (९) अथ प्रातराग्नेयः पुरोडाशो भवत्यैन्द्रꣳ सान्नाय्यम् ॥ (१०) द्वावुत्तरस्यां वेद्यां पादौ

---

(१) तथा ॥
(२) तथैव ॥
(३) तथा ॥
(४) तथा ॥
(५) तथा ॥
(६) तथैव ॥
(७) तथा ॥
(८) तथा ॥
(९) तथैव ज्ञेयम् ॥
(१०) ब्राह्मणस्य ॥

भवतो द्वौ दक्षिणस्याम् (१) चितो गार्हपत्यो भवत्यो भवत्यचित आहवनीयः ॥

## अनुबन्धइति ॥ १७ ॥

अनुबध्यतेऽनेनेत्यनुबन्धः । आख्यातार्थस्य नित्यतां यः शब्दो ब्रवीति सोऽनुबन्धः । तस्मात्परमाख्यातं विक्रियते । यथा श्वः श्वः श्रेयान्भवति । इतिकरण-माख्याताधिकारपरिसमाप्त्यर्थम् । एवं यत्र यत्र स-माम्नाये आख्यातविकारो दृश्यते तत्र तत्र तथैव द्रष्ट-व्यम् । न्यायसाम्यात् । यथा (२) इमं मे वरुण श्रुधी हवम् ॥

## एतआषोडशादक्षरात्पदं विकु-र्वन्ति ॥ १८ ॥

एते हि शब्दादय आषोडशाक्षरादाख्यातपदं वि-कुर्वन्ति । आषोडशादभिविधिर्मर्यादा वा । तमेवा-रभ्य आषोडशादक्षरात् । यथालाभमुदाहरणानि दीयन्ते (३) हन्तास्येन्द्रियं वीर्य्यꣳ सोमपीथमन्ना-द्यꣳ हराणीति । स यो हैवमेतꣳ सँव्वत्सरमध्यात्मं प्रतिष्ठितं व्वेद । नेदति रेचयानीति । नेत्त्वदपचेत

(१) शतपथब्राह्मणस्यैवोदाहरणम्बोध्यम् ॥

(२) २१ । १ ॥

(३) ब्राह्मणोदाहरणम् ॥

यते ॥

## आपञ्चविंशादिति भारद्वाजः ॥ १९ ॥

स्वरादय आपञ्चविंशादाख्यातपदं विकुर्वन्तीति भारद्वाजआचार्यो मन्यते । यथा (१) येना नः पूर्वे पितरः पदज्ञाऽअर्चन्तो गाऽअविन्दन् । तथा (२) ऋन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति । इति ॥

## आद्वाविंशादित्यौपशविः ॥ २० ॥

स्वरादय आद्वाविंशात्स्वरादाख्यातं विकुर्वन्ति । इत्यौपशविराचार्यो मन्यते । यथा (३) सँय्यो हैवमेतत्सप्तदशं प्रजापतिमधिदेवतं चाध्यात्मं च प्रतिष्ठितं वेद ॥

## आमर्यादास्थयोः पदयोर्बहूनां चापूर्वपदं विक्रियते ॥ २१ ॥

मर्यादा त्रिधा । षोडशाक्षरा । पञ्चविंशत्यक्ष-

(१) ३४ । १७ ॥

(२) २५ । २५ ॥

(३) शतपथब्राह्मणस्यैवोदाहरणम् ॥

रा । द्वाविंशदक्षरायाम् । द्वात्रिंशदक्षरायां पक्षे विक्रियते । पाक्षिकत्वादपरिपूर्णे इतरे मर्यादे । अत्राङीषदर्थे वर्तते । आमर्यादा ईषन्मर्यादेत्यर्थः । ईषन्मर्यादायां तिष्ठतइत्यामर्यादास्थे । तयोरामर्यादास्थयोराख्यातपदयोः पूर्वमाख्यातमपि द्वात्रिंशदक्षरान्तं विक्रियते । ह्यादिभिर्योगे सतीत्यनुवर्त्तते । तत्र द्वयोर्यथा । (१) स यत्सायमस्तमिते जुहोत्यग्नावेवैभ्यऽएतत्प्रविष्टेभ्यो जुहोति । अथ यत्प्रातर्जुहोत्यस्य जीवनस्य देवेभ्यो जुहवामि । बहूनामाख्यातानां यथा (२) स यत्सायमस्तमिते जुहोति गर्भमेवैतत्सन्तमभि जुहोति गर्भꣳ सन्तमभि करोति । (३) अथ यत्प्रातरनुदिते जुहोति प्रजनयत्येवैनमेतत्सोऽयं तेजो भूत्वा विभ्राजमान उदेतीति ॥

## सर्वाणीत्यौपशविः ॥ २२ ॥

अत्र सर्वाण्यप्यामर्यादास्थितान्याख्यातपदानि ह्यादियोगे विक्रियन्ते । इत्यौपशविराचार्यो मन्यते । यथा (४) यस्मिन्नर्द्धे यजन्ते तेषां वा उन्नेतोत्तमो दीक्षते प्रथमोऽवभृथादुद्रायतामुदैति । (५) ये देवासो

(१) इदमपि तथैव ॥
(२) तथा ॥
(३) तथा ॥
(४) ब्राह्मणोदाहरणम् ॥
(५) ७ । १९ ॥

द्विंयेकादशस्तथ पृथिव्यामिति ॥

इति कात्यायनकृतौ भाषिकपरिशिष्टसूत्रे द्वितीया कण्डिका ॥

इत्यनन्तदेवकृते भाषिकपरिशिष्टसूत्रभाष्ये द्वितीया कण्डिका ॥

---

विनियोगे तु पूर्वपदम् ॥ १ ॥

विनियोगेऽर्थे गम्यमाने पूर्वमाख्यातं विक्रियते नोत्तरं तु शब्दोऽवधारणे । यथा (१) तूर्ष्णीं दर्भस्तम्बमुप दधाति । यजुषाभि जुहोति । (२) तूष्णीमुदचमसान्निनयति । यजुषा वर्षति । (३) स वाऽइन्द्राग्निभ्यामुपदधाति । (४) विश्वकर्म्मणा सादयति ॥

जिज्ञासितयोश्च ॥ २ ॥

जिज्ञासितयोराख्यातयोः पूर्वमाख्यातं विक्रियते नोत्तरं यथा । (५) जुहवानी३माहौषा३मिति । (६)

---

(१) शतपथस्यैवोदाहरणम् ॥

(२) तथा ॥

(३) तथा ॥

(४) तथा ॥

(५) तथैव ॥

(६) तथा ॥

कतमस्यैतत्कर्म्म सँवत्सरमग्निमाप्नोति । (१) कथठँ० स वरेणाग्निना सम्पद्यते ॥

## अन्तरहितयोश्च ॥ ३ ॥

अन्तर्हितं भिन्नजातीयेन व्यवहितमित्यर्थः । अन्यजातीययोराख्यातयोः पूर्वमाख्यातं विक्रियते न द्वितीयम् । यथा (२) पुरुषो ह नारायणं प्रजापतिरुवाच । (३) यजस्व यजस्वेति । (४) अथ यज यजेत्येवोत्तरानाह ॥

## विचारितसमुच्चयोश्च ॥ ४ ॥

विचारिते समुच्चिते चेति द्वन्द्वसमासः । विचारार्थकयोः समुच्चयार्थकयोश्चाख्यातयोः पूर्वं विक्रियते न द्वितीयम् । तत्र विचारयोर्यथा (५) यजेदाज्यभागौ ज्या३ इति यजेता३ न यजेता३ इति । समुच्चयोर्यथा (६) शर्म्म च स्थो वर्म्म च स्थः । (७) सुक्ष्मा चासि शिवा चासि ॥

---

(१) तथा ॥
(२) तथा ॥
(३) तथा ॥
(४) तथा ॥
(५) तथा ॥
(६) ११ । ३० ॥
(७) १ । २८ ॥

निर्वचनेऽनूबन्धो वाक्यशेषोऽवध्यर्थश्चावधारणो न विकुरुत इति भारद्वाजः ॥ ५ ॥

निर्वचनं नामार्थस्यान्वाख्यानम् । तच्च विधिरूपेण वाऽनुवादरूपेण वा पूर्वपदस्यानमित्यर्थः। अनुबध्यतइत्यनुबन्धः । पुनः पुनरावर्त्तनमित्यर्थः । अनुबन्ध इत्यत्र "अन्येषामपि दृश्यते" इति पाणिनीयसूत्रेण दीर्घः । निर्वचनेऽनुबन्धो वाक्यशेषो यस्मिन्नाख्याते तदाख्यातं न विकुरुते । इति भारद्वाजाचार्यो मन्यते । तथाऽवध्यर्थो योऽवधारणो यस्मिन्नाख्याते दृश्यते तदपि न विक्रियते । इति भारद्वाजो मन्यते । अवधिरत्र कालविशेष उच्यते । विनियोगो वाक्यशेष इति प्राप्तापवादोऽयम् । क्रमेणोदाहरणानि । (१) देवा दीक्षां निरमिनादित्यै प्रापणीयम् । इत्यग्रे कथयथेति । भारद्वाजोक्तिर्विक्रियते वा । वस्ताजिने पुष्टिकाममभिषिञ्चेत्कृष्णाजिने ब्रह्मवर्चसकाममुभयोरुभयकाममिति । प्रथमस्योदाहरणम्, द्वितीयोदाहरणं यथा (२) एवमेव मध्यन्दिने सवनगृहीतएवैतस्मादच्छावाकयोत्तमो ग्रहो भवत्यथ तृतीयां वसती

(१) ब्राह्मणोदाहरणानि ॥

(२) इमान्यपि तथा ॥

वरीणामवनयतीति ॥

भूयोवादी वरीयोवादी कनीयो-
वादी चानवधारणाः ॥ ६ ॥

भूयो बहुतरं वदतीति भूयो वादी, गुरुतरं वदतीति वरीयो वादी, कनीयोऽल्पतरं वदतीति कनीयोवादी। एते भूयोवाद्यादयोऽनवधारणाः। अवधारणकार्यकारिणो न स्युः। भूयोवाद्यादयः परं भूतमाख्यातं न विकुर्वन्तीत्यर्थः। क्रमेणोदाहरणानि (१) तस्य भूयोभूयएव तेजो भवति। परः परएव वरीयस्तपो भवति कनीयः कनीयस्तपो भवतीति 'अनुबन्ध-इति प्राप्तस्यापवादकमेतत्। नेत्यनुवर्त्तमाने पुनरवधारणार्थ इति नञ् अनित्यत्वसूचनार्थः। तेन शाखान्तरे पूर्वोक्तोदाहरणे आख्यातपदं विक्रियतेऽपीति गम्यते। अनवधारणा इति किम्। अन्यत्रापि यत्र विकारो दृश्यते तत्रावधारणेऽपि सति न विकारो माभूदिति। यथा (२) एवꣳ सꣳदीपयति। एवꣳ हैव श्रिया यशसा भवति। एवꣳ हैव स जायते। एवꣳ हैवं कीर्त्या यशसा श्रिया स्वः स्वः श्रेयान्भवतीत्यादिज्ञेयानि ॥

---

(१) तथाभूतानि ॥
(२) एतान्यप्युदाहरणानि शतपथब्राह्मणस्य बोध्यानि ॥

परिसमाप्त्यर्थश्चान्यतमो ह्यादी-
नां न विकरोति ॥ ७ ॥

ह्यिहन्तेत्यादयो विकारकारिण इत्युक्तम् । क्वचित्तस्यायमपवादः । ह्यादीनां मध्येऽनन्यतम एकतमः परिसमाप्त्यर्थश्चेदाख्यातं न विकरोति । बहुष्वप्याख्यातेषु येनाख्यातेन सम्बध्यते तदेवाख्यातं विकरोति । समीपस्थितान्यप्यन्याख्यातानि न विकुर्वन्ति । तस्मिन्नेव स्वसम्बद्धाख्याते परिसमाप्त्यर्थत्वात् । यथा (१) किर्ठ० हि हरेद्यदन्तरिक्षर्ठ० हरामि दिवं हरामीति हरेत् । हन्तास्मै प्रतिष्ठां कल्पयानीति सन्धियर्ठ० हि न सानीत्याह । कुम्भे पुत्रमवधीदिति चुक्रोधेत्यादि ॥

यमपदयोः स्वराद्योरल्पस्वरतरं
प्रकृत्या ॥ ८ ॥

द्विरुक्तं पदं यमपदमित्युच्यते । स्वर आदिर्ययोः पदयोस्ते स्वरादी । अतिशयेन अल्पाः स्वरा यत्र पदे दृश्यन्ते तदल्पस्वरतरमिति विग्रहः । स्वराद्ययोर्मध्ये यदल्पस्वरतरं तत्प्रकृत्या स्यात् । अत्र सूत्रे तरग्रहणं तुल्यसङ्ख्येष्वपि मात्राधिक्यादुत्तरस्य नाल्पस्वरत्वमि-

(१) ब्राह्मणस्योदाहरणम् ॥

ति भावः। यथा (१) तदेकैकयैवेमाँल्लोकान्त्स तनोति। एकैकयैवेमाँल्लोकान्त्स्पृणुते। तस्मादेकैकामेवानवानमनुब्रूयात्। अत्र पूर्वस्यैकशब्दस्योत्तरैकशब्दापेक्षया मात्राल्पत्वात्प्रकृतिस्वरत्वं ज्ञेयम्। अत्रैका चैका चेति समासे सति "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समनाधिकरणे स्त्रियामपूरणीप्रियादि"ष्विति सूत्रेण टाप्। लोपे पूर्वस्यैकशब्दस्यैकमात्रत्वमुत्तरस्य द्विमात्रत्वमिति विवेकः। यमाख्यातप्रसङ्गादनाख्यातयमार्थोऽयमारम्भः।

## स्वराद्यस्वराद्योश्च सममात्रयोःपूर्वन्नेष्टमिति भारद्वाजः॥ ९॥

स्वरआदिर्ययोः पदयोस्ते स्वरादी तादृशे ये न भवतस्ते अस्वरादी। चकारः समुच्चयार्थः। समाः सममात्रा ययोस्ते सममात्रे। स्वराद्योरस्वराद्योश्च सममात्रयोर्यमपदयोर्मध्ये पूर्वपदं प्रकृतिस्वरं नेष्टमिति भारद्वाजो मन्यते। अस्वरादिसममात्रार्थोऽयमारम्भः। तत्र स्वराद्योः सममात्रयोर्यथा (२) उपोपेन्नु मघवन्। अस्वराद्योः सममात्रयोर्यथा (३) प्रप्रायम-

---

(१) इदमपि तथा॥

(२) ३। ३४॥

(३) १२। ३४॥

ग्निः । (१) सर्ठं॰ समिद्धुवसे हृषन् । समभावयोः किम् । उप । उत । उपोत । प्रप्रति ॥

## यथार्थं चतुर्विधं पदं विपर्य्यस्तम् ॥ १० ॥

नामाख्यातोपसर्गनिपातरूपं चतुर्विधं पदं यथार्थं मन्त्रे स्वरतो व्याख्यातम् । तद्ब्राह्मणे स्वरतो विपर्य्यस्तं स्यात् । स च विपर्यासो व्याख्यातः पूर्वभाषिके । उदात्तमेतत् । स्वरितानुदात्तौ च । उदात्तमनन्त्यम् । अन्त्यर्ठं॰ संहतानाम् । भाषिके चोभयेषामिति ॥

## कण्ठ्यस्वरोऽकृत्सवर्णे ॥ ११ ॥

'अथ ब्राह्मणस्वरसंस्कारनियम' इति प्रतिज्ञा तयोः स्वरसंस्कारयोर्मध्ये पूर्वं स्वरनियममुक्त्वा । अथेदानीं संस्कारमाह । 'कण्ठ्यस्वरोऽकृत्सवर्णे' । इति । कण्ठे भवः कण्ठ्यः । कवर्गादिव्युदासार्थं स्वरग्रहणम् । कण्ठ्यस्वरो वर्णो ह्रस्वो दीर्घो वाऽऽस्यादुत्तरेण ऋवर्णेन सह । ब्राह्मणे इत्यनुवर्त्तते । यथा (२) यत्किञ्च ऋतुषु । यत्किञ्चर्तुषु क्रियते च । यत्किञ्चर्त्तसत्याभ्यां जय्यर्ठं॰ सर्वर्ठं॰ हैवमेतज्जयतीत्या-

(१) १५ । २८ ॥ इमान्युदाहरणानि यथायोग्यानि ज्ञेयानि ॥

(२) शतपथस्योदाहरणम् ॥

दि ह्रस्वोदाहरणम् । दीर्घोदाहरणँय्यथा (१) तथा ऋषीणाम् । तथार्षीणान्तथा मनुष्याणाम् । यथा ऋतुं प्राप्य । यथार्तुं प्राप्य । कण्ठ्यस्वरइति किम् । यदि ऋतः । यदृतो भूरिति । चतुर्गृहीतमाज्यं गृहीत्वाऽऽहवनीये जुहुवथ । सवर्णे किम् । ऋतवः सँव्वत्सरो यजमानस्तमृतवो याजयन्ति । ब्राह्मणे किम् । (२) यत्रा सप्तऽऋषीन्परऽएकमाहुः ॥

## वकारस्य पदान्तस्य स्वरमध्ये लोपः ॥१२॥

स्वरयोर्मध्ये वर्त्तमानस्य पदान्तस्य वकारस्य ब्राह्मणे लोपः स्यात् । यथा (३) द्वौ इति । द्वा इति । कत्येव देवा याज्ञवल्क्येति द्वा इत्योमिति होवाच । त्रयस्त्रिंश० शोइति । इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंश० शाविति । वायो इह । नियुद्भिर्वायविह ता विमुञ्चेत्यादि । ब्राह्मणे किम् । मन्त्रे तु "नियुद्भिर्वायविह ता विमुञ्च ॥

## शेषं सामान्यशास्त्रात् ॥ १३ ॥

---

(१) इदमपि तथैव ॥

(२) १७ । २४ ॥

(३) इमानि सर्वाण्युदाहरणानि शतपथब्राह्मणस्यैव सम्यक् ज्ञातव्यानीति ॥

धैवतनिषादाः ॥ १७ ॥

षड्जऋषभश्चेत्यादिद्वन्द्वः समासः । प्रसङ्गात्तेषां स्थानान्याह ॥

तेषां योनयः ॥ १८ ॥

तेषां षड्जादिसप्तसामस्वराणां योनयः कारणभूतानि स्थानान्युच्यन्त इति सूत्रशेषः । विशिष्य तान्येवाह ॥

कण्ठात्षड्जः ॥ १९ ॥

कण्ठस्थानात्षड्जस्वरोऽभिव्यज्यते ॥

शिरसऽऋषभः ॥ २० ॥

शिरस्स्थानादृषभोऽभिव्यज्यते ॥

नासिकायां गान्धारः ॥ २१ ॥

नासिकास्थानाद्गान्धारोऽभिव्यज्यते ॥

उरसो मध्यमः ॥ २२ ॥

उरस्स्थानान्मध्यमोऽभिव्यज्यते ॥

धैवतो ललाटात् ॥ २३ ॥

ललाटस्थानाद्धैवतोऽभिव्यज्यते॥

निषादः सर्व्वतइति॥ २४॥

निषादः स्वरस्तु कण्ठादिसर्वस्थानादभिव्यज्यते। इतिशब्दः सामस्वरप्रकरणज्ञापनार्थः। प्रसङ्गात्तैत्तिरीयब्राह्मणस्वरमाह॥

मन्त्रस्वरवद्ब्राह्मणस्वरश्चरकाणाम्॥ २५॥

चरकाणां ब्राह्मणस्वरो मन्त्रेण तुल्यो भवति। तेषामेव विशेषमाह॥

तेषां खाण्डिकेयौखेयानां चातुस्वर्य्यमपि क्वचित्॥ २६॥

तेषां चरकाणां मध्ये खांडिकेयौखेयानां ब्राह्मणे चत्वारः स्वरा उदात्तानुदात्तस्वरितप्रचिताख्या भवन्ति। क्वचिद्ग्रहणात्त्रैस्वर्य्यमपि। अत्र चत्वारः स्वराः समाहृता इति चातुस्वर्य्यमिति विग्रहः। तदन्यशाखिनां ब्राह्मणस्वरमाह॥

ततोऽन्येषां ब्राह्मणस्वरः॥ २७॥

अन्येषामुक्तव्यतिरिक्तशाखिनां आश्वलायनादीनां

तानो ब्राह्मणस्वरो भवति । तान एकश्रुतिरित्यर्थः । अथाङ्गोपाङ्गानां स्वरमाह ॥

तानऽएवाङ्गोपाङ्गानां तानऽएवाङ्गोपाङ्गानामिति ॥ २८ ॥

शिक्षा कल्पो व्याकरणं नैरुक्तं छन्दो ज्यौतिषमिति षडङ्गानि प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायस्तर्कइत्युपाङ्गानि । तेषामङ्गोपाङ्गानां तान एव स्वरो भवति । द्विरभ्यासः शास्त्रपरिसमाप्त्यर्थः । इतिशब्दः शास्त्रवेदिनामभ्युदयसूचनार्थः । तदेते श्लोका भवन्ति । उदात्तः स्वर्य्यते नीचो नीच उच्चस्वरो भवेत् । ब्राह्मणस्य स्वरो ह्येष ज्ञायते वेदपारगैः । १ ॥ ऋषिप्रोक्तयनुसारेण स्वरसञ्ज्ञां द्विजः पठेत् । स वेदफलमाप्नोति ह्यन्यथा नरकं व्रजेत् । २ । एकं तु ब्राह्मणं सम्यक्स्वरार्थं ज्ञानपूर्वकम् ॥ योऽधीते वेदवित्स स्यादन्यथा स्थाणुरुच्यते ॥ ३ ॥ अम्बा भागीरथी यस्य नागदेवात्मजः सुधीः ॥ तेनानन्तेन विहितं भाषिकं सूत्रमुत्तमम् ॥ ४ ॥ अनेन प्रीयतां देवो रमानाथः सदा मम ॥ ब्रह्मादिवन्दितपदो देवदेवशिखामणिः ॥ ५ ॥ वचनप्रसूनयाऽनन्ताख्येन सूरिणा रचिता ॥ भ्रियतां हृदये सदये कमलामहितेन पुरुषेण ॥ ६ ॥

इति कात्यायनकृतौ त्रिकण्डिकाभाषिकपरिशिष्टसूत्रे तृतीया कण्डिका समाप्ता ॥

इतिश्रीमत्प्रथमशाखिना नागभट्टात्मजेन श्रीमदनन्तभट्टेन विरचितं त्रिकण्डिकाभाषिकपरिशिष्टसूत्रभाष्यं समाप्तम् ॥



अथ जटाद्यष्टविकृतीनां लक्षणानि लिख्यन्ते । तत्र विकृतीनां पाठे फलं पङ्क्तिपावनत्वम् । जटादिविकृतीनां ये पारायणपरायणाः ॥ महात्मानो द्विजश्रेष्ठास्ते ज्ञेयाः पङ्क्तिपावनाः । १ । इत्यादित्यपुराणात् । अन्यान्यपि विष्णुलोकादिफलानि वाराहपुराणपाराशरस्मृत्यादिषु । तासां विकृतीनां नामानि प्रदर्श्यन्ते । जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः ॥ अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः ॥ २ ॥ क्रमः पूर्वो यासांताः आसां क्रमः प्रकृतिरित्यर्थः । तत्र प्रथमत्वाज्जटालक्षणमाह ॥

क्रमं यथोक्तं प्रब्रूयाद्व्युत्क्रमेण क्रमेण च ॥

सलक्षणं सर्वसन्धौ जटा सा प्रोच्यते बुधैः ॥ १ ॥

क्रमं यथोक्तं द्वित्रिचतुष्क्रमात्मकं पुनश्च तमेव वैपरीत्येन पुनश्च क्रमेण एवं त्रिवारं त्रिवारं सर्वसन्धिषु लक्षणयुक्तं पठेत्सा जटा तल्लज्ञैरुच्यते। उदाहरणं यथा (१) वायवस्थ स्थवायवो वायवस्थ ॥

स्वापूर्वांशं पदद्वन्द्वं स्वागर्भे त्रिचतुष्क्रमे ॥ पुनरुक्तमसन्देहार्थं जटात्वं न चार्हति ॥ २ ॥

सु आ इति पदद्वयगर्भे त्रिक्रमे "मोषूणः" "सोमेनातनच्मि" इत्यादौ तथा चतुष्क्रमे "गोमदूषुणा सत्या" इत्यादौ सु आ पूर्वांशं पदद्वयं असन्देहार्थं द्विपदत्वभ्रमवारणाय "सुनः" "आतनच्मि" इति पुनरुच्चारितं जटाभावं नार्हति। असन्देहार्थं इति हेतुगर्भं विशेषणम्। यथा (२) "उदुत्यम्" इत्यादौ द्विपदत्वभ्रमवारणाय "ऊँ३इत्यूँ" इति मध्यस्थस्य वे-

(१) १। १। पदपाठे ज्ञातव्यामिदमुदाहरणम्।
(२) ७। ३८॥

ष्टनम् । तथा इदं न तु क्रमः । अतो न जटा कार्या । इति ॥

अथ जटायां कति सन्धय इति प्रदर्शनार्थं जटायां पठ्यमानान् क्रमान्नामतो निर्दिशति ॥

अनुक्रमश्चोत्क्रमश्च व्युत्क्रमोऽभि-
क्रमस्तथा ॥
सङ्क्रमश्चेति पञ्चैते जटायां क-
थिताः क्रमाः ॥ २ ॥

वायवस्थ । इत्यनुक्रमः, । स्थस्थ । इत्युत्क्रमः, । स्थ वायव । इति व्युत्क्रमः, वायवो वायव । इत्यभिक्रमः, । वायवस्थ । इति सङ्क्रमः । कस्मिन्क्रमे किं प्रमाणमित्याह ॥

न स्थितोपस्थिते ये स्युर्ज्जटायां व्यु-
त्क्रमे न ते ॥

ये विषयः स्थितोपस्थिते न भवन्ति ते जटायां व्युत्क्रमे न पठनीयाः । उदाहरणं यथा (१) जास्म-

(१) ३३ । १० ॥

तृत्यठ्ठँ॰ सुयमठ्ठँ॰ सुयमं जाः पत्यं जास्पत्यठ्ठँ॰ सुयमम् । (१) व्वसवेऽहर्प्पतयेऽहः पतये व्वसवे व्वसवेऽहर्प्पतये । (२) द्दूतन्धूषीद्दौ धूः सद्दावितमितन्धूषीद्दौ । (३) दार्व्वाघाटस्ते ते दार्व्वाघातो दार्व्वाघाटस्ते । (४) व्वायवो व्वनषदो व्वनसदो व्वायवो व्वायवो व्वनषदः । (५) ऋतस्पते त्वष्टुस्त्वष्टुऋतपतऽऋतस्पते त्वष्टः । (६) उभेसुश्चन्द्र सुचन्द्रोभेऽउभे सुश्चन्द्र । (७) बृहतीन्दुदुच्चन्दुधुंच्चन्बृहतीम्बृहतीन्दुधुंच्चन् । (८) श्रेयस्कर भूयस्कर भूयःकर श्रेयस्कर श्रेयस्कर भूयस्कर । (९) आयुष्पाऽआयुरायुरायुः पाऽआयुष्पाऽआयुः । (१०) सिषासन्तो व्वनामहे व्वनामहे सिसासन्तः सिषासन्तो व्वनामहे । (११) अ-

(१) ३ । २० ॥
(२) ४ । ३३ ॥
(३) २४ । ३५ ॥
(४) ३३ । १ ॥
(५) २७ । ३४ ॥
(६) १५ । ४३ ॥
(७) ३३ । २८ ॥
(८) १५ । २९ ॥
(९) २२ । १ ॥
(१०) २६ । १७ ॥
(११) ११ । ६२ ॥

ग्नेः ऽ पुरीषवाहणः पुरीषवाहनोऽग्नेरग्नेः ऽ पुरीषवाहणः । (१) एनमायुनगयुनगेनमेनमायुनक् । (२) मामहन्तामदितिरदितिर्म्ममहन्ताम्मामहन्तामदितिः (३) देवीऽ उषासाऽउषसौ देवी देवीऽउषासौ । (४) पर्ज्जन्यो वृष्टिमाँ २ ॥ ऽइव वृष्टिमानिव पर्ज्जन्यः पर्ज्जन्यो वृष्टिमाँ २ ॥ ऽइव । एतस्यापवादमाह ॥

वर्ज्जयित्वा व्विश्यतीव ॥

इदमुदाहरणं वर्ज्जयित्वा अत्र स्थितोपस्थिते अनुच्चार्य्यमाणोऽपि एकादेशो व्युत्क्रमे उच्चारणीयः । (५) व्विश्यतीव वीरिटे व्वीरिटे व्विश्यतीव विश्यतीव वीरिटे ॥

विशेषविषयान्विधीन् ॥ ४ ॥

वैकल्पिकान्व्याकरणं ॥

प्रमाणं मध्यगत्रये ॥ सन्धौ ॥

उत्क्रमव्युत्क्रमाभिक्रमेषु सन्धिविषये व्याकरणं वै-

(१) २८ । १३ ॥
(२) ३३ । ३८ ॥
(३) २१ । ५० ॥
(४) ७ । २९ ॥ इमान्यासु विकृतिषु पदपाठस्योदाहरणानि बुधैर्बोध्यानीति ॥
(५) ३३ । ४० ॥

कल्पिकान् जिह्वामूलीयोपध्मादीन् प्रातिशाख्ये विशेषविषयान् "प्रकृत्या कखयोः पफयोश्च" त्यादिविशेषविहितान् त्यक्त्वा अन्यत्र व्याकरणं प्रमाणं पूर्वोक्तेषु प्रातिशाख्यमेव। कामंधुक्षो धुक्ष्वः काङ्क्षामंधुक्ष्वः। च पुष्टिमणीः पुष्टिमणीश्च च पुष्टिमणीः। अत्रोदाहरणद्वये जिह्वामूलीयोपध्मानीयौ न। सहस्रंधारन्देवो देवः सहस्रंधारꣳसहस्रंधारन्देवः। अत्र "वा शरी"त्यस्य वैकल्पिकत्वात्पक्षे सत्वं "अविकारꣳ शाकल्यः शषसेषु" इति विशेषविहितत्वान्न। स्यमहो महस्त्यस्त्य महः। अत्र "खय्परे शरि विसर्गस्य विसर्ग" इत्यस्य वैकल्पिकत्वात्पक्षे सत्वविसर्गौ "लुङ्मुदि जित्परे" इत्युक्तत्वान्न। चक्रे व्यायव्यान्व्यायव्याँश्चक्रे चक्रे व्यायव्यान्। "अत्रानुनासिकात्परोऽनुस्वार" इति पक्षेऽनुस्वारः। "अनुनासिकमुपधे"त्युक्तत्वान्न। औक्ष्यनुष्टुब्नुष्टुप्औक्षी औक्ष्यनुष्टुप्। अत्र "शश्छोटी"ति तवर्गौ "त्परश्चास्पर्शपरश्छम्" इति विशेषविधानान्न। सम्भ्रियमाणः सम्राट् सम्राट्त् सम्भ्रियमाणः सम्भ्रियमाणः सम्राट्। अत्र "ङः सि धुट्" इति "ङ्नौ क्ताभ्याꣳ सकारे" इति विशेषविहितत्वान्न। उदुत्यन्त्यमुदुदुत्यम्। अत्र "मय उञो वो वा" इत्यस्य वैकल्पि-

क्तत्वात्पक्षे प्रकृतिभावः "उकारोऽपृक्तोऽस्पर्शात्" इत्यु-क्तत्वान्न । ऋतसदन्यृतसदनमृतसदनमृतसदन्यृतसद-न्यृतसदनम् । अत्र "ऋत्यक" इति पाक्षिकः प्रकृति-भावो न । "करश्च ऋकारे ह्रस्वम्" इति विशेषवि-धानात् । अत एव । ऋताषाडृतधामऽर्तधामऽर्त-ताषाडृताषाडृतधामा । अत्र पाक्षिको गुणो न । ऋ-ण्वानालभते लभतऽअऽर्ण्वानृण्वानालभते । अत्रार् इति न प्रातिशाख्यस्थत्वात् । "उपसर्गादृति धातौ" इत्यस्य तु धातुत्वाभावान्न प्राप्तः । पोषेण रायो रा-यः पोषेण पोषेण रायः । अत्र "रायः सहसस्पोषपु-त्रयोः" । इति न प्रातिशाख्यस्थत्वात् । यूपऽआप्यतऽ-आप्यते यूपो यूपऽआप्यते । ऊरू पादौ पादाऽऊरूऽऊ-रू पादौ । अत्र "लोपः शाकल्यस्य"त्यस्य वैकल्पिकत्वा-त्पक्षे अवर्णं प्राप्तं "यवयोः पदान्तयोः स्वरमध्ये लोप" इत्युक्तत्वान्न भवति । अस्मिन्योनौ योनावस्मिन्नस्मि-न्योनौ । अत्र पूर्वोक्तेन वकारलोपः प्राप्तः । "न वका-रस्याऽसस्थान एकेषाम्" । इति विहितत्वान्न भव-ति । छन्त्स्यन्नर्वन्छन्त्सि च्छन्त्स्यर्वन् । रुक्मोऽअ-न्तरन्ता रुक्मो रुक्मो ऽअन्तः । षोडशाक्षरेण षोड-शं षोडशं० षोडशाक्षरेण षोडशाक्षरेण षोडश-

म् । इत्यादौ व्याकरणानुसृतत्वाच्च । "चक्षुर्योः शम्" "रेफे लुप्यते दीर्घं चोपधा" "अनुस्वारं० रोष्मसु मकार" इत्यादि भवति । एवमन्यदप्यूह्यम् ॥

## आद्यान्त्ययोः प्रातिशाख्यं मानम् ॥

अनुक्रमसङ्क्रमयोस्तु प्रातिशाख्यं प्रमाणम् । संहिताधर्मवत्त्वात् । उक्तान्युदाहरणानि । समेष्वपि प्रतिज्ञासूत्रगा धर्माः । सर्वेष्वपि पञ्चसु क्रमेषु जकारादिपठनरूपा धर्मा ज्ञेयाः । प्रतिज्ञासूत्रगा इत्युपलक्षणं शिक्षाख्यधर्माणामपि । उक्तान्येवोदाहरणानि (१) ॥

(१) "क्रमः स्मृतिप्रयोजनः" इत्युक्तं तत्र स्मरणं पदसन्धिस्वरसन्ध्यादिना दृढं जातं इति व्याडिराचार्यः क्रमप्रकृतिका अष्टौ विकृतीराह जटामालेति पद्येन तत्राद्या जटाविकृतिस्तल्लक्षणमाह । ब्रूयात्क्रमविपर्यासं क्रममीदृग्विनिर्दिशेत् । जटाख्यां विकृतिं धीमान् विज्ञाय क्रमलक्षणम् । स्पष्टार्थः । क्रमविपर्यासक्रमामित्यस्यैव प्रपञ्चं विवक्षुः पूर्वोक्तमर्थमनूद्य धर्मविशेषमाह । अनुलोमविलोमाभ्यां त्रिवारं हि पठेत्क्रमम् ॥ विलोमे पदवत्सन्धिरनुलोमे यथा क्रमम् । अनुलोमे आद्यन्तक्रमयोः पाठे यथा क्रमं प्रातिशाख्योक्तलक्षणविशिष्टक्रमकालीनसन्ध्यनतिक्रमेण सन्धिर्ज्ञातव्यः । विलोमेऽनुपदवत् पदेन तुल्यम् । पदपाठे यथा पदानि वर्त्तन्ते तादृशपदानामेव सन्धिः कर्त्तव्येति । हयग्रीवोऽप्यमुमर्थमाह । यथा । क्रमे यथोक्ते पदजातमेव द्विरभ्यसेदुत्तरमेव पूर्वम् ॥ अभ्यस्य पूर्वं च तथोत्तरे पदेऽवसानमेवं हि जटाभिधीयते ॥ १ ॥ क्रमे यथोक्ते "द्वेद्वे पदे सन्दधात्युत्तरेणोत्तरमावसानादपृक्तवर्ज्जं" मित्यादिनोक्ते पदजातं पदद्वयं वा पदत्रयं वा द्विरभ्यसेत् द्विवारं पठेदुत्तरं पदं पूर्वं च ततः प्रथमं द्विरभ्यस्य उत्तरेऽवसेत् । अभिक्रमे क्रमशास्त्रं प्रधानं स्यादव्युत्क्रमे व्याकरणं प्रमाणम् । उक्तः क्रमे व्युत्क्रमणे विशेषः स्वराः प्रकाराद्वितयेऽप्यभिन्नाः । निगदव्याख्यानम् । पूर्वेण "स्वरसंस्कारयोश्छन्दसि नियम" इति संस्कारादिना नानारूपतायां विलोमपाठे विशेषमाह । षत्वं

# सर्वस्वरेषु तु ॥ ५ ॥

सर्वेषु स्वरविषयेषु तु पुनः प्रातिशाख्यमेव प्रमाणं तद्विचारस्तु स्वरप्रकरणे उक्तः । यान्युदाहरणानि संहितायां न दृश्यन्ते तानि प्रदर्श्यन्ते । अञ्जानाऽ अभ्यभ्यञ्जानाऽ अञ्जानाऽ अभि । विस्वः स्वर्विविस्वः । युञ्जोऽभ्यभि यञ्जो युञ्जोऽभि । तेऽप्सरसामप्सर-

णत्वं च दीर्घत्वं क्रमसन्धौ यदुच्यते । व्युत्क्रमे तत्र कर्त्तव्यं स्वरं क्षैप्रादिकं भवेत् । क्रमसन्धौ अनुलोमपाठे षत्वं "भाविभ्यः सषर्ठ० समानपदे" इति । णत्वम् । "ऋषरेभ्यो नकारो णकारर्ठ० समानपदे"इत्युक्तम् । तथा दीर्घत्वं "दीर्घमि"त्यधिकृत्य "अश्वरश्मिसुमती"त्यादिसूत्रसन्दर्भेण विहितं विलोमपाठे तन्न कर्त्तव्यम् । पदस्वरूपं व्याकरणोक्तविधिना पठेदित्यर्थः । एवं चकारात् लोपागमविकारप्रकृतिभावाअपि विलोमपाठे न भवन्ति तुल्याधिकारात् । "अनितावध्याये" इत्यस्यापवादः । उदाहरणं तु प्रातिशाख्योक्तं ज्ञेयम् । स्वरं क्षैप्रादिकं भवेदिति । स्वरसन्ध्यादि "उदात्तवानुदात्तः" । "स्वरितवान्त्स्वरितः" इत्यादिक्षैप्रादिषु "युवर्णौ यवौ क्षैप्रः" इत्यादि । अनुलोमवत्प्रतिलोमेऽपि भवति यथा त्र्यम्बकँय्यजामहे यजामहे त्र्यम्बकन्त्र्यम्बकँय्यजामहे । इत्याद्युदाहरणानि सर्वत्रैव बोध्यानीति ॥ अवसानेऽर्द्धर्चे च ऋक्षु यजुष्षु वा स्थितोपस्थितं कर्त्तव्यम् । वेष्टनापरपर्यायेण भवतीत्यर्थः । त्रिक्रमे चतुष्क्रमे च जटापाठे हयग्रीवो विशेषमाह "त्रिभिः पदैः स्यादुत्क्रमणं यत्र तत्र मध्यं त्वनभ्यस्य च पूर्वमभ्यसेत् । अर्थाच्च मध्यस्य भवेद्द्विरुक्तिता सन्देहदं त्विङ्गनेन प्रदर्शयेत् । अस्यार्थः । यत्र त्रिभिः पदैः क्रमणं स्यात्तत्रान्त्यपदं द्विरुक्त्वा पश्चान्मध्यपदं त्वनभ्यस्य सकृदेव चोक्त्वा आद्यं अभ्यसेत् । द्विर्ब्रूयात् तत्र पदत्रयं गृहीत्वा अनभ्यस्य अभ्यासरहितस्य मध्यस्य तत्सन्धानद्वारा पूर्वमभ्यस्य क्रमवदन्तेऽवसानं कुर्यात् । उत्क्रमणम् व्युत्क्रमणतो मध्यस्य द्विरुक्तिता भवेत् । अन्ते पदेऽवसाय ततः सन्देहदं सन्दिग्धं मध्यमपदं निश्चयेन इङ्गनेन पृथक्कालेन प्रदर्शयेत् पदस्वरूपं प्रकटीकुर्यात् यथा । कर्म्मणऽआप्यायद्ध्वमप्यायद्ध्वमा कर्म्मणे कर्म्मणऽआप्यायद्ध्वम् ॥

सान्ते तेऽप्सरसाम् । अभीन्धतामीन्धतामभ्यभीन्धताम् । इत्यादिप्रकारेण बोध्यम् । प्रातिशाख्येऽनुक्तत्वाद्व्याकरणस्थान्विधीन्दर्शयति ॥

## सवर्णेऽपृक्त उः स्पर्शात्स्वरे याति वतामिह ॥

जटायां सवर्णे स्वरे परे स्पर्शात्परः उ इति शब्दो वकारभावं याति । यथा उदुत्यन्त्यमुदुदुत्यम् । अत्र "मय उञो वो वे"ति वकारो भवति । (१) ॥

---

(१) त्रिचतुष्क्रमपञ्चक्रमादौ जटाप्रकारं हयग्रीवोऽप्याह । चतुष्क्रमे त्रिक्रमे च तथा पञ्चक्रमेऽपि च ॥ आद्यन्ताभ्यां त्रिवृन्मध्यं ब्रूयात्क्रमविपर्ययैरित्यस्य स्पष्टार्थः ॥ उकारस्योदाहरणं यथा "उदुत्यत्यमुदुदुत्यम् । इत्यादि चतुष्क्रमेऽपि यथा ऊर्द्ध्वऽऊषुणो नऽ:सूऽऊर्द्ध्वऽऊर्द्ध्वऽऊषुण ÷ । पंचपदक्रमजटोदाहरणं त्वृग्वेदिनां भवति न वाजसनेयिशाखिनाम् । अथ गलत्पदे विशेषमाह व्याडिर्भगवान् । समयादौ क्रमे यद्वत्समयात्परतस्तथा ॥ जटायां समयादिस्थं शुद्धेन परिवर्त्तयेत् । अस्यार्थः । समयशब्दो गलत्पदवाचकोऽध्येतृप्रसिद्धः । गलत्पदादौ क्रमाध्ययने यद्वद्येन प्रकारेण "यथा समाम्नातं क्रमावसानर्थं॰ सङ्क्रमेष्वि"त्यादिना विधानं अङ्गीक्रियते जटायामपि तादृगेवाङ्गी कर्त्तव्यम् । समयादुदाहरणम् । सा विश्वायुर्विश्वायुः सा सा विश्वायु ÷ । समयात्परतस्योदाहरणं यथा। विश्वायुर्विश्वकर्म्मा विश्वकर्म्मा विश्वायुर्विश्वायुर्विश्वकर्म्मा । मध्यपदस्य विशेषमाह स एव । समयक्रमणं नास्ति समयाद्द्विक्रमं विना ॥ त्रिक्रमं समयादिस्थमादिना संहितां पठेत् ॥ समयस्य गलत्पदस्य क्रमणं पुनः पुनरुत्तरोत्तरपदसन्धानं शुद्धक्रमवन्नास्ति समयादिपदं वर्जयित्वा ततः समयादौ यदि क्रमो भवति तं त्रिक्रमव्युत्क्रमसङ्क्रमैरित्यादिपदेन सह त्रिवारं पठेदित्यर्थः । दूरऽउऽअ-

# स एव सन्धिनान्यैक्यमापन्नोऽपि प्रगृह्यकः ॥ ६ ॥

सन्धिविधायकेन शास्त्रेण अन्येन सहैक्यमापन्नोऽपि उ इतिशब्दः प्रगृह्यः । यथा ऊर्ध्व ऽऊषुणो नः स्व ऊर्ध्वं ऽऊर्ध्व ऽऊषुण ÷ । उदुंत्वात्वोउदुदुंत्वा । अत्र उका-

---

न्तिकेऽन्तिकऽउदूरे दूरऽउऽअन्तिके । इत्यादि ज्ञेयम् । स्वरे यातिवतामिहेत्यत्र वता-
मिति षष्ठ्यन्तो न बोध्यः । किन्तु वकारस्य भावो वता इति भावार्थस्ता प्रत्ययः । तां
वकारतां याति प्राप्नोतीत्यर्थः १ । अथ विलोमशेषजटायां कथं सन्धिः कार्यइत्याह ।
व्युत्क्रमे पदवत्सन्धिः स्वरक्षैप्रादिरिष्यते ॥ उकारादिविधानं तत्स्वरान्तः परि-
वर्त्तनम् । अस्यार्थः । विलोमक्रमसन्धौ अनुलोमपदपाठवत्सन्धयः क्षैप्रादिस्वराश्च
भवन्ति तल्लक्षणानि तु प्रथमाध्याये जात्याभिनिहितक्षैप्रप्रश्लिष्टतैरोव्यञ्जनतै-
रोविरामपादवृत्तानां स्वराणामुक्तानि । तद्वज्जटादिविकृतिष्वपि । आद्येषु चतुर्षु
स्वरितेषु ऋग्वेदिनामेव भवति अन्येषान्तु स्वरमात्रमेव तेषामुदाहरणानि पूर्वो-
क्तवज्ज्ञातव्यानि । तथा डढयोः स्थाने ळल्हौ समानपदे "डढौळल्हावेकेषा"
मित्यनेन सूत्रेण परिवर्त्तनपाठो जटायामनुलोमविलोमे च संहितावत्काण्वाः पठन्ति
न तु माध्यन्दिनाः कुतो वाजसनेयिनां "तस्मिँल्लळल्हेत्याद्यष्टमाध्यायस्थसूत्रेण निषेधा-
त् । अथ विलोमे प्रगृह्यं यत्पदं तन्निमित्ततः प्रकृतिभावश्च केषामस्ति केषान्नास्तीति
विशेषमाह । त्र्यक्षरान्तं प्रगृह्याणामुकारामन्त्रितस्य च ॥ विलोमे पदसन्धौ तु प्र-
गृह्यत्वं न विद्यते ॥ विलोमे यथावस्थितएव पाठः । विलोमे पदवत्सन्धिरित्यस्या-
पवादभूतं यथा "इदूदेद्द्विवचनं प्रगृह्य"मित्यनेन वेष्टने एव प्रगृह्यसञ्ज्ञायां प्रकृतिभाव-
नियमो नान्यत्रेति कात्यायनोक्तमेवार्थं वदति । डकारस्य तु स्पर्शात्परस्य न द्रष्टव्यः ।
उदाहरणानि पूर्वोक्तानि बोध्यानीति, सवथा कम्पलोपविषयो नोक्तस्तद्विधिश्च दौर्मित्रा-
चार्योक्तनिषेधोऽपि ऋग्वेदीयेशौनकोक्तत्वात् । सङ्क्रमं व्युत्क्रमवद्ब्रूयादिति गार्ग्यवच-
नं तदापस्तम्बादिविषयम् । ननु जटाद्यष्टविकृतीनां लक्षणानि प्रातिशाख्ये न प्रोक्तानि
महर्षिणा कात्यायनेन तदप्रमाणमिति, उच्यते "बव्हल्पं वा स्वगृह्योक्तं यस्य कर्म प्र-

रस्य ओकारस्य च "अन्तादिवच्चे"त्यनेन परादिवत्वादेकाज्निपातत्वेन "निपातएकाजनाङ्" इति प्रगृह्यत्वम् (१) ॥

## ओकारान्तनिपातानां व्युत्क्रमेऽस्ति प्रगृह्यता ॥

यथा उपो ते तऽउपो ऽउपो ते । अथो ये येऽथोऽअथो ये । "ओत्" इत्यनेन प्रगृह्यत्वम् । "ओकारश्च" इत्यनेन विहितप्रगृह्यत्वनिमित्तप्रकृतिभावस्तु इतौ प्रकृतिभावविधानादन्यत्र न । अत एव विष्णावेति इत्यत्र अवादेशः । अथोऽअन्नस्येत्यादौ तु "प्रकृतिभावश्चच्च" इत्यनेन प्रकृतिभावत्वम् ॥

## सपूर्व्वाकारओङ्कारः प्रयात्योम्भावमत्र हि ॥ ७ ॥

पूर्वेण अकारेण सहितः ओं शब्दो जटायां ओ-

---

कीर्तितम् ॥ तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्" इति क्रमपर्यन्तलक्षणोक्तमेवाध्ययनमस्ति न जटादिविकृतीनामतआह आलस्येन कात्यायनेनानुक्तत्वात् । कात्यायनसमानकालीनमहर्षिणा व्याडिना सामान्येनेतिहासमुखेन च प्रतिपादनादविरोधाच्चेति शम् ३ ॥

इति पाठकोपाव्हयुगलकिशोरव्याससङ्कलितप्रातिशाख्यकीर्तिप्रकाशटिप्पण्यां जटाद्यष्टविकृतिशास्त्रार्थः समाप्तः । संवत् १९४४ कार्तिकशुक्लपूर्णिमायाम् ॥

न्भावं प्रयाति । यथा ओम्प्रमोमोम्प्र । अत्र "ओमा-ङोश्च" इत्यनेन पररूपत्वम् ॥

अयमेव हि शास्त्रार्थः सर्वासु विकृतिष्वपि ॥

जटोक्त एव शास्त्रार्थो मालादिसप्तसु विकृतिषु बोध्यः ॥

माला मालेव पुष्पाणां पदानां ग्रन्थिनी हि सा ॥
आवर्त्तन्ते त्रयस्तस्यां क्रमव्युत्क्रमसङ्क्रमाः ॥ ८ ॥

अस्यार्थः । यथा पुष्पाणां माला ग्रन्थिनी परस्परसम्बद्धकारिणी तथा पदानां परस्परसम्बद्धकारिणी या विकृतिः सा मालेत्युच्यते । तस्याः पठनप्रकारमाह । तस्यां मालायां जटोक्तपञ्चक्रममध्ये त्रयः क्रमव्युत्क्रमसङ्क्रमा आवर्त्तन्ते पदाद्वृत्त्या पठ्यन्ते । यथा । सुसमिद्धाय शोचिषे । शोचिषे सुसमिद्धाय । सुसमिद्धाय शोचिषे । सुसमिद्धायेति सु । समिद्धाय । शोचिषे घृतम् । घृतꣳ शोचिषे । शोचिषे घृतम् । घृतं

पदोत्तरां जटामेव शिखामार्य्याः प्रचक्षते ॥

अस्यार्थः। पूर्वोक्तां जटामेव अन्ते एकपदाधिकां शिखां विकृतिं बुद्धिमन्त आहुः। यथा। अन्तश्चरति चरत्यन्तरन्तश्चरति रोचना। अन्तरित्यन्तः। चरति रोचना रोचना चरति चरति रोचनास्य। अस्य प्राणात्प्राणादस्यास्य प्राणादपानती। प्राणादपानत्यपानती प्राणात्प्राणादपानती। अपानतीत्यप। अनती॥ व्यख्यन्महिषः। अख्यन्महिषो महिषोऽख्यदख्यन्महिषो दिवम्। महिषो दिवन्दिवम्महिषो महिषो दिवम्। दिवमिति दिवम्॥ अथ रेखालक्षणमाह॥

क्रमाद्द्वित्रिचतुःपञ्चपदक्रममुदाहरेत्।
पृथक्पृथग्विपर्य्यस्य रेखामाहुः पुनः क्रमात्॥ १०॥

अस्यार्थः। क्रमेण द्विपदत्रिपदचतुष्पदपञ्चपदक्रमानुक्त्वा प्रतिक्रमे पृथक् पृथक् विपर्यासेन पठित्वा पुनः क्रमं पठेत्। तां विकृतिं रेखामाहुः। यथा। म-

धु नक्तम् । नक्तम्मधु । मधु नक्तम् । नक्तमुतोषसः । उ-षसऽउत नक्तम् । नक्तमुत । उतोषसः । उषसो म-धुमत्पार्थिवꣳ रजः । रजः पार्थिवम्मधुमदुषसः । उषसो मधुमत् । मधुमत्पार्थिवम् । मधुमदिति मधु । मत् । पार्थिवꣳ रजः । रजऽइति रजः ॥ मधु द्यौ-रस्तु नः पिता । पिता नोऽस्तु द्यौर्मधु । मधुद्यौः । द्यौर-स्तु । अस्तुनः । नः पिता । पितेति पिता । अथ ध्व-जलक्षणमाह ।

ब्रूयादादेः क्रमं सम्यगन्तादुच्चारये-दिति ॥ वर्गे वा ऋचि वा यस्य पठनं स ध्वजः स्मृतः ॥ ११ ॥

अस्यार्थः । वर्गे ऋचि वा आदेः क्रमं अन्तपर्य्यन्तं ब्रूयात् । अन्तात्सम्यग्यथोक्तं क्रममेव उच्चारयेत् आदि-पर्य्यन्तं पठेत् । एवं यस्य पठनं स ध्वजः ध्वजाख्यविकृ-तिर्बोध्या । यथा । विष्णोः कर्माणि । सखेति सखा । कर्माणि पश्यत । युज्यः सखा । पश्यत यतः । इन्द्रस्य युज्यः । यतो व्रतानि । पस्पशऽइति पस्पशे । व्र-तानि पस्पशे । व्रतानि पस्पशे । यतो व्रतानि । पस्पशऽइति पस्पशे । व्रतानि पस्पशे । व्रतानि प-

स्पशे । यतो व्रतानि । पस्पशऽइति पस्पशे । पश्यत यतः । इन्द्रस्य युज्यः । कर्माणि पश्यत । युज्यः सखा । विष्णोः कर्माणि । सखेति सखा ॥ अथ क्रमदण्डलक्षणमाह ॥

क्रममुक्त्वा विपर्य्यस्य पुनश्च क्रममुत्तरम् ॥ आऽर्द्धर्चादेवमुक्तोऽयं क्रमदण्डोऽभिधीयते ॥ १२ ॥

क्रममनुलोममुक्त्वा विपर्य्यस्य विलोममुक्त्वा पुनः क्रमं पठित्वा चकारादनुलोमविलोमैः अर्द्धर्चसमाप्तिपर्यन्तं ब्रूयात् । द्वितीयार्द्धर्चादेवमेवोक्त्वाऽनुलोमविलोमैरर्द्धर्चान्तम्पठित्वा एवं क्रमदण्डइत्युच्यते । स यथा । यज्ञा नः । नो यज्ञ । यज्ञा नः । नो मित्रावरुणा । मित्रावरुणा नो यज्ञ । यज्ञा नः । नो मित्रावरुणा । मित्रावरुणा यज्ञ । यज्ञ मित्रावरुणा नो यज्ञ । यज्ञा नः । नो मित्रावरुणा । मित्रावरुणा यज्ञ । यज्ञा देवान् । देवान्यज्ञ मित्रावरुणा नो यज्ञ । यज्ञा नः । नो मित्रावरुणा । मित्रावरुणा यज्ञ । यज्ञा देवान् । देवाँ २॥ऽऋतम् । ऋतन्देवान्यज्ञ मित्रावरुणा नो यज्ञ । यज्ञा नः । नो मित्रावरुणा । मित्रावरुणा यज्ञ । यज्ञा देवान् । दे-

वाँ २॥ ऽऋतम् । ऋतम्बृहत् । बृहदृतं देवान्यज मित्रावरुणा नो यज्ञं । यज्ञा नः । नो मित्रावरुणा । मित्रावरुणा यज्ञं । यज्ञा देवान् । देवाँ २॥ ऽऋतम् । ऋतम्बृहत् । बृहदिति बृहत् ॥ अग्ने युच्चि । युच्च्यग्ने । अग्ने युच्चि । युच्चि स्वम् । स्वँय्युच्च्यग्ने । अग्ने युच्चि । युच्चि स्वम् । स्वन्दमम् । दमꣳ स्वँय्युच्च्यग्ने । अग्ने युच्चि । युच्चि स्वम् । स्वन्दमम् । दममिति दमम् ॥ अथ रथलक्षणमाह ॥

## पादशोऽर्द्धर्चशो वाऽपि सहोक्त्या दण्डवद्रथः ॥

पादे पादे अर्द्धर्चे वा क्रमविपर्यासौ दण्डवत्सह उक्तौ चेत्स विकृतिविशेषो रथइत्युच्यते । यथा । समिधाग्निम् । समिधेति सम् । इधा । अग्निꣳ समिधा । घृतैर्बोधयत । बोधयत घृतैः । समिधाऽग्निम् । समिधेति सम् । इधा । अग्निन्दुवस्यत । दुवस्यताग्निꣳ समिधा । घृतैर्बोधयत । बोधयतातिथिम् । अतिथिम्बोधयत घृतैः । समिधाग्निम् । समिधेति सम् । इधा । अग्निन्दुवस्यत । दुवस्यत घृतैः । घृतैर्बोधयत । बोधयतातिथिम् । अतिथिमित्यतिथि-

म् ॥ इति पादानुसारतः ॥ अर्द्धर्चानुसारतो लिख्यते ॥ ऋधगित्था । इत्थऽऋधक् । यो नूनम् । नूनँव्यः । ऋधगित्था । इत्थासः । सऽइत्थऽऋधक् । यो नूनम् । नूनं मित्रावरुणौ । मित्रावरुणौ नूनँव्यः । ऋधगित्था । इत्थासः । समर्त्यः । मर्त्यः शशमे । शशमे देवतातये । देवतातये शशमे मर्त्यः सऽइत्थऽऋधक् । यो नूनम् । नूनं मित्रावरुणौ । मित्रावरुणावभिष्टये । अभिष्टयऽआचक्रे । आचक्रे हव्यदातये । हव्यदातयऽआचक्रेऽभिष्टये मित्रावरुणौ नूनँव्यः । ऋधगित्था । इत्थासः । समर्त्यः । मर्त्यः शशमे । शशमे देवतातये । देवतातयऽइति देव । तातये ॥ यो नूनम् । नूनं मित्रावरुणौ । मित्रावरुणावभिष्टये । अभिष्टयऽआचक्रे । आचक्रे हव्यदातये । आचक्रऽइत्या । चक्रे । हव्यदातयऽइति हव्य । दातये ॥ उभयोः पादार्द्धर्चयोरपि द्वितीयः प्रकारः कथ्यते ॥ मित्रꣳ हुवे । वरुणं च । हुवे मित्रम् । च वरुणम् । मित्रꣳ हुवे । हुवे पूतदक्षम् । वरुणं च । च रिशादसम् । पूतदक्षꣳ हुवे मित्रम् । रिशादसञ्च वरुणम् । मित्रꣳ हुवे । हुवे पूतदक्षम् । पूतदक्षँ वरुणम् । पूतदक्ष-

मिति पूत । दक्षम् । वरुणञ्च । च रिशादसम् । रिशादसमिति रिशा । दसम् । इत्येकः प्रकारः । अथ द्वितीयः प्रकारः । मित्रो वरुणः । इन्द्रो बृहस्पतिः । वरुणो मित्रः । बृहस्पतिरिन्द्रः । मित्रो वरुणः । वरुणो भवतु । इन्द्रो बृहस्पतिः । बृहस्पतिर्विष्णुः । भवतु वरुणो मित्रः । विष्णुर्बृहस्पतिरिन्द्रः । मित्रो वरुणः । वरुणो भवतु । भवत्वर्य्यमा । इन्द्रो बृहस्पतिः । बृहस्पतिर्विष्णुः । विष्णुरुरुक्रमः । अर्य्यमा भवतु वरुणो मित्रः । उरुक्रमो विष्णुर्बृहस्पतिरिन्द्रः । मित्रो वरुणः । वरुणो भवतु । भवत्वर्य्यमा । अर्य्यमेत्यर्य्यमा ॥ इन्द्रो बृहस्पतिः । बृहस्पतिर्विष्णुः । विष्णुरुरुक्रमः । उरुक्रमऽइत्युरु क्रमः ॥ उभयोरपि तृतीयः प्रकारः । अन्तश्चरति । चरत्यन्तः । अन्तश्चरति । अस्य प्राणात् । प्राणादस्य । अस्य प्राणात् । चरति रोचना । रोचना चरत्यन्तः । अन्तश्चरति । अन्तश्चरति । अन्तरित्यन्तः । चरति रोचना । प्राणादपानती । अपानती प्राणादस्य । रोचनास्य । अस्य प्राणादपानती । अपानतीत्यप । अनती । इत्येकः । अथ द्वितीयः । धानावन्तं करम्भि-

णाम् । करम्भिणन्धानावन्तम् । धानावन्तं करम्भिणम् । इन्द्र प्रातः । प्रातरिन्द्र । इन्द्र प्रातः । करम्भिणमपूपवन्तम् । अपूपवन्तं करम्भिणं धानावन्तम् । धानावन्तं करम्भिणम् । करम्भिणमपूपवन्तम् । प्रातर्जुषस्व । जुषस्व प्रातरिन्द्र । इन्द्र प्रातः । प्रातर्जुषस्व । अपूपवन्तमुक्थिनम् । उक्थिनमपूपवन्तं करम्भिणं धानावन्तम् । धानावन्तं करम्भिणम् । धानावन्तमिति धाना । वन्तम् । करम्भिणमपूपवन्तम् । अपूपवन्तमुक्थिनम् । अपूपवन्तमित्यपूप । वन्तम् । उक्थिनमित्युक्थिनम् । जुषस्वनः । नो जुषस्व प्रातरिन्द्र । इन्द्रप्रातः । प्रातर्जुषस्व । जुषस्व नः । नऽइति नः ॥ अथ द्विविधघनलक्षणमाह ॥

अन्तात्क्रमं पठेत्पूर्वमादिपर्य्यन्तमानयेत् ॥ आदिक्रमं नयेदन्तं घनमाहुर्म्मनीषिणः ॥ १४ ॥

यथोक्तं क्रममेव अन्तमारभ्य आदिपर्यन्तं पूर्वं पठेत् । तत आदिमारभ्य अन्तपर्य्यन्तं क्रमं पठेत् पण्डितास्तं घनमाहुः ॥ यथा अतिथिमित्यतिथिम् । बोधयताति-

थिम् । इतैर्बोधयत । दुवस्यत इतैः । अग्निन्दुवस्यत । समिधाग्निम् । समिधेति सम् । इधा । अग्निन्दुवस्यत । दुवस्यत इतैः । इतैर्बोधयत । बोधयतातिथिम् । अतिथिमित्यतिथिम् । जुहोतनेति जुहोतन । हव्या जुहोतन । आस्मिन्हव्या । आस्मिन् । अस्मिन्हव्या । हव्या जुहोतन । जुहोतनेति जुहोतन । इति प्रथमः प्रकारः । अथ लोकप्रसिद्धद्वितीयघनलक्षणमाह ॥

शिखामुक्त्वा विपर्य्यस्य तत्पदानि पुनः पठेत् ॥ अयं घन इति प्रोक्तः- इत्यष्टौ विकृतीः पठेत् ॥ २५ ॥

अस्यार्थः । शिखां पूर्वोक्तामुच्चार्य्य विपर्य्यासेन तानि पदान्युच्चार्य्य पुनः क्रमेण तानि पदान्युच्चारयेत् । अयं विकृतिविशेषो घनइति प्रोक्तो महर्षिभिर्व्याडिभिरिति । उदाहरणँ यथा । दस्रा युवाकवो युवाकवो दस्रा दस्रा युवाकवः सुताः सुता युवाकवो दस्रा दस्रा युवाकवः सुताः । युवाकवः सुताः सुता युवाकवो युवाकवः सुता नासत्या नासत्या सुता यु-

वांकवो युवाकव: सुता नासत्या । सुता नासत्या नासत्या सुता: सुता नासत्या वृक्तबर्हिषो वृक्तबर्हिषो नासत्या सुता: सुता नासत्या वृक्तबर्हिष: । नासत्या वृक्तबर्हिषो वृक्तबर्हिषो नासत्या नासत्या वृक्तबर्हिष: । वृक्तबर्हिषऽइति वृक्त । बर्हिष: ॥ आयातँय्यातमायातठं॰ रुद्रवर्त्तनी रुद्रवर्त्तनी यातमायातठं॰ रुद्रवर्त्तनी । यातठं॰ रुद्रवर्त्तनी रुद्रवर्त्तनी यातँय्यातठं॰ रुद्रवर्त्तनी ॥ रुद्रवर्त्तनीऽ इति रुद्र वर्त्तनी ॥ एवं प्रकारेणाष्टौ विकृती: पठेत् ॥ वेदवेदाङ्गेन्दुवर्षे मार्गे मास्यसिते दले ॥ पञ्चम्यां रविवारे तु गुरुभे कर्कचन्द्रके ॥ १ ॥ विश्वेश्वरस्यानुजेन सुतेन सुधिया मुदे ॥ युगलप्राक्शिरोरेण पाठकेन कृता सताम् ॥ २ ॥ टिप्पणी प्रातिशाख्यस्य सम्यक्कीर्त्तिप्रकाशिका ॥ तां मुद्रयित्वा प्रथिता लोके लौहाचरै: शुभै: ॥३॥ कात्यायनकृतं सूत्रं प्रतिज्ञानामकं शुभम् ॥ अनन्तदेवरचितं सद्भाष्येणैव सँय्युतम् ॥ ४ ॥ भाषिकं परिशिष्टं च तत्कृतं भाष्ययुक्तथा ॥ शतपथब्राह्मणस्य स्वरादिज्ञानकारणम् ॥ ५ ॥ जटादिविकृतीनां तु सम्यज्ज्ञानँय्यथाऽऽप्यते ॥ महर्षिणा व्याडिना यज्जटापटलसञ्ज्ञकम् ॥ ६ ॥ तद्भावं समनुज्ञाय हयग्रीवेण भाषितम् ॥ दौर्मिञ्चिणा गौतमेन रामेणापि सु

भाषितम् ॥ ७ ॥

॥ श्रीगणेशाय नमः ॥

# अथ कात्यायनमहर्षिप्रणीतमृग्यजुः परिशिष्टन्नवमं प्रातिशाख्योपयुक्तं शिष्याणां परिज्ञानार्थं च ऋग्यजुर्लक्षणविशिष्टमारभ्यते ॥

अथादित्ये यजुर्वेदे भेदे माध्यन्दिनीयके(१) ॥ वक्ष्याम्यृग्यजुषां सम्यग्विभागं तु यथाश्रुतम् ॥ १ ॥ ऋटगादेशे यजुर्ज्ञेयमनादेशे तु केवलम् ॥ ऋतौ यजुरुदाहारे (२) ग्रोषा विद्याद्दचः कविः ॥ २ ॥ उपयामः स-

(१) अथ शिक्षां प्रवक्ष्यामि वासिष्ठस्य मतं यथा । इति पद्यं क्वचित्पुस्तके लिखितं तदसमीचीनं कुतः शिक्षालक्षणधर्मरहितत्वात् । शिक्षालक्षणं तु महर्षिणा कात्यायनेन प्रसवोत्थानपरिशिष्टे सप्तदशाख्येऽभिहितम् । तद्यथा स्वरसंस्कारलघ्वनुनासिकानुस्वारविसर्जनीयदन्त्यमूर्द्धन्यतालुकण्ठ्योष्ठ्ययमोपध्मानीयजिह्वामूलीयानां यज्ञस्वरसंस्कारोच्चारणार्था शिक्षेति ॥ अथेति । अथशब्दो मङ्गलार्थः । पार्षदपरिशिष्टानन्तरमेतस्य कथनमित्यानन्तर्यार्थश्चेति । आदित्यइति । आदित्यात्सूर्यनारायणात्प्राप्तो यजुर्वेदो येन महर्षिणा योगिना याज्ञवल्क्येनासावादित्यस्तस्मिन्नादित्ये । तत्र प्रमाणं शतपथब्राह्मणस्य चतुर्दशकाण्डे बृहदारण्ये "आदित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येन ख्यायन्ते । इति ॥

(२) ऋते यजुरुच्चाहारे इति 'ख' पुस्तकपाठः । भेदे इति । यजुर्वेदस्य षडशीति भेदाउक्ता महर्षिणा कात्यायनेन चरणव्यूहपरिशिष्टे,परन्तु शुक्लयजुर्वेदस्य पञ्चदश भेदा भवन्ति तन्मध्ये तृतीया शाखा माध्यन्दिनीयाभिधा तस्मिन्माध्यन्दिनीयके ऋग्यजुः परिशिष्टमुच्यते ॥

योनिश्च स्वाहाकारश्च योऽन्त्यभाक् ॥ ऋक्सम्बन्धं यजुर्ज्ञेयं यच्च वक्ष्याम्यतोऽध्रुवम् ॥ ३ ॥ द्व्यवसाना ऋचः सर्वा यजुरन्यत्तदाश्रितम् ॥ वर्गादिष्टासु नैवं स्यात्तत्रादिष्टे यजुर्भवेत् ॥ ४ ॥ ज्ञेयान्येकावसानानि स्वाध्यायोपरमात्क्वचित् ॥ अवसानानि वक्ष्यामि द्विपदैकपदां तथा ॥ ५ ॥ ऋग्गर्द्धे चानुवाकानामन्तेषु यजुषां (१) तथा ॥ अवसानं विजानीयादाम्नायनियमेन तु ॥ ६ ॥ पुरा क्रूरस्येत्येका प्रथमे, वीतिहोत्रमित्येषा ते, मरुतां पृषतीरिति च, युम्परिधिमिति यजुरन्ताऽग्नेः प्रियमिति यजुः, स ॐ स्वभागास्थेषेति स्वाहा वाडिति यजु, र्देवा गातु विदऽइति द्वे, सँव्वर्च्चसेत्येका, ये रूपाण्येका,ऽन्ते द्वे, ॥ १ ॥ समिधाग्निमिति चतस्र, आयङ्गौरिति तिस्रो,ऽग्निर्ज्योतिरिति सप्त पूर्वा पञ्चैकपदा, उप प्रयन्तऽइति षडि,न्धाना इति त्र्यवसानो,पत्नेति सप्तपदाश्चतस्रो द्विपदाः, सोमानमिति

(१) एतस्य ऋग्यजुःपरिशिष्टस्य प्रातिशाख्ये प्रयोजनं किमित्यपेक्षायाम् । प्रा० ४ सू० "प्रकृतिभावऋक्षु" अस्मिन्त्सूत्रे ऋक्पदेन ऋग्लक्षणं वक्तुमुचितं तद्यथा नियताक्षरपादावसानत्वमृक्त्वम् ।। एवमेव प्रा० अ० ४ सू० यजुष्षु चे"त्यस्मिन्त्सूत्रे च यजुःपदेन यजुर्लक्षणं यथा अनियताक्षरपादावसानत्वं यजुष्ट्वम्। केचन एतेषां छन्दो न विद्यतइति प्रवदन्ति तन्मते पादो नास्ति यजुषि पादाभावाच्छन्दो नास्ति परन्तु छन्दसोऽभावे मन्त्रत्वन्न तन्मन्त्रकृतकर्मभिः कर्त्तुः फलमपि न भवति । तत्र प्रमाणं कातीयसर्वानुक्रमे प्रथमखण्डे "एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजते तस्य ब्रह्म निर्वीर्य्यं यातयामं भवत्यथान्तराऽश्वगर्त्तं वापद्यते स्थाणुं वर्छति प्रमीयते वा पापीयान्भवति । अथ विज्ञायैतानि योऽधीते तस्य वीर्य्यवदथ योऽर्थवित्तस्य वीर्य्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते इति ॥

नवा,ऽऽगन्मेति तिस्रो, गृह्णा मेति तिस्र, उपहूता इति त्र्यवसाना, प्रचासिनस्तिस्रः, पूर्णा दर्व्वि द्वे, अ-त्रन्नमीमदन्त षड, वरुद्रद्रमिति चतस्र,स्त्र्यायुषमि-त्येका ॥ २ ॥ एदमिति द्वे त्र्यवसाने, ऽआपऽइत्येका, ऽऽपो देवीरिति द्वे, दैवीन्धियं, स्वात्ताः पीता, ऽअ-ग्नेत्व, न्त्वमग्नऽएषा ते, व्वस्व्यसि, समक्ख्ये,ऽभित्य-मेकशः, परिमेति तिस्र, ऽअस्तभ्नादिति चतस्रो, न-मो मित्त्रस्येत्येका, यातऽइति च ॥ ३ ॥ भवतन्नऽइति द्वे, अर्ठ॰शुरिति चतुरवसाना, युञ्जन्ति तिस्रो, व्वि-ष्णोर्न्नु कमिति च पूर्वे यजुरन्ते विष्णवे त्वेति यजुरुभ-यतः, परित्वेत्येका, त्वर्ठ॰ सोमेति पञ्च, जुषाणऽ इ-त्येकपदो,रु व्विष्णवित्येका, ॥ ४ ॥ देवामिति यजुः, कोऽसीत्येको, दुत्यमिति चतस्रः, कदा चनेति तिस्रो यजुरन्ता, ऽआदित्येभ्यस्त्वेति यजुरन्तेऽर्थी,च्छदस्मा,-अर्ह परस्ता,त्सँव्वर्च्चसेत्येकशः, समिन्द्रणऽइति सप्तो, रुर्ठ॰ ह्वीत्येका,ऽग्नेरनीकमिति चतस्र,ऽएजतु द्वे पूर्वा त्र्यवसाना, मरुतो यस्येति द्वे,यस्मान्नेति च द्वि-तीया यजुरन्ता, सह प्राणेनेति यजु,राजिघ्रेति द्वे, ऽउपसृजन्निति तिस्रोऽन्त्या त्र्यवसाना, जयोरोजसे-त्येका, चतुस्त्रिर्ठ॰ शदिति चतस्रः ॥ ५ ॥ देव सवि-तरेका, ध्रुवसदमिति त्रीणि यजूꣳषि, पुरोरुषि पु-रोरुत्वयान्येषु, व्वाजस्य न्वित्येका,ऽप्स्वन्तरिति च, व्वातो वेति तिस्रऽ, एषस्य व्वाजी, व्वाजस्ये ममिति

सप्त,ग्ने सहस्वेत्येका,ऽपो देवाः, सधमादऽइत्येक-
र्शो, हिरण्यरूपाविति, मित्रोऽसि वरुणोसीति यजु-
षी, प्रपर्व्वतस्येत्येका, प्रजापतेनेति यजुर्म्मध्या त्वन्याऽ-
श्वमेधे व्याख्याताऽयमसुष्य पिताऽसावस्य पितेति
यजुर्षी ते, हर्ठ०सो, निषसादेत्येकर्शो, वायुः पू-
तो, युवर्ठ० सुराममिति द्विशः ॥ ६ ॥ युञ्जतऽइति
सप्त,ग्नी स्तोममित्येका, हस्तऽ आधायेति यजुरन्ताऽनु-
ष्टुभेनेति यजुः, प्रतूर्व्वन्निति चतस्रोऽन्त्या यजुर्गर्भो,
ऽर्व्वन्तरिक्षँल्लोके्होत्येतावद्यजु,रन्वग्निरित्येकादशा,पा-
स्पृष्ठमिति तिस्र,स्त्वामग्नऽ इति षडपो देवीरि-
ति दश, नवमी त्र्यवसानाऽन्त्यैकपादौ,षधयऽइति
तिस्रऽ, आपो हीत्यष्टौ, कृत्वायेत्येका, मित्रस्येति ति-
स्रो, विश्वो देवस्येत्यध्यायान्ताः ॥ ७ ॥ विष्णोः
क्रमोऽसि, विश्वकर्म्मणे, सञ्ज्ञानं, चिदसि, सजू-
रब्दऽइत्युद्रुतानि यजूर्ठ०षि, द्वितीये सुपर्णोऽसीति
चतुरवना, नमो भूत्याऽइत्येकपदा, मयि गृह्णामीति
त्रयोदशा, ऽग्निर्म्मूर्द्धेत्येका, भुवो यज्ञस्येति च, ध्रुवासी-
ति तिस्रः, काण्डात्काण्डादिति चतस्रो,ऽषाढाऽसी-
त्येका, मधु वाताऽइत्येकादश, सम्यक्स्रवन्ति न-
वेमन्ना षड, पान्त्वा, पञ्चानाञ्चाध्यायान्तानां नाना-
दिशुपरमान्तेषु यजूर्ठ०षि लोकन्ताऽइन्द्रमिति तिस्रः ॥
८॥ ध्रुवक्षितिरिति पञ्चाश्विनीनामेकं लोकन्ताऽइन्द्र-
मिति तिस्र, ऽइन्द्राग्नीऽइत्येका, मूर्द्धाऽसीति द्वे, लो-

कन्ताऽइन्द्रमिति, लोकन्ताऽइन्द्रमिति त्वा,ऽग्ने जातानिति द्वे, अग्निर्मूर्द्धेत्येकचिंठ०शदग्निठं० होतारमिति त्र्यवसाना द्विपदा व्याख्याता, येनऽऋषयोऽष्टौ, लोकम्पृणेति चतस्रो, नमस्तऽइति प्राङ्नमस्कारेभ्यो, द्रापेऽअन्धसस्पतऽइति प्राक् प्रत्यवरोहेभ्योऽ,ऽस्मन्निमा मे, नृषदे वेडिन्द्रन्दैवीरित्युद्धृतानि यजूꣳषि सप्त सप्तेति ॥ ९ ॥ व्वाजस्य न्विति सप्त, स नोभुवनस्येत्येका, यास्तऽइति चतस्रो,ऽग्निंय्युनज्मीत्यध्यायान्ता, ऋचोनामेत्युद्धृत्य यजुरेकोऽपरꣳ, स्वाद्वीन्त्वेत्येका, परितऽइति षड्, या व्याघ्रमिति द्वे, देवा यज्ञमित्याध्यायान्ता, पितृभ्यः स्वधा नम इत्युद्धृते यजुरेकमपर,मिदठं० हविरिति त्र्यवसाना, रेतो मूत्रमिति च द्वे, जनस्य योनिरेका, कोऽसीति षडन्त्या त्र्यवसाना, त्वया देवाऽइति त्र्यवसाना, लोमानीत्येका, यद्देवाऽइति तिस्रो, यदापऽइत्येका, सुमित्रिया नऽइति, द्रुपदादिवेति तिस्रो,ऽध्यादधामीत्याध्यायान्तादिमस्माऽइति प्राक् प्रैषेभ्यः ॥ १० ॥ इमामगृभ्णन्नित्येका, योऽअर्वन्तमित्येका, हिरण्यपाणिर्न्नेव, युञ्जन्तीति तिस्रः, कः स्विदिति चतस्रः, सठं०शितऽइति तिस्रो,ऽम्बऽइत्येको, रसकथ्याऽइत्यध्यायान्तादुद्धृत्य प्रैषठं०, हिरण्यगर्भऽइत्याद्याश्च सठं०हिताध्यायान्ता,ऽइमा नु कमिति च षड्द्विपदाः, प्रियो देवानामित्येका, तन्त्वेत्यध्यायान्ताः, समास्त्वेति

प्राणाग्न्यभिमर्शना,स्समिद्धोऽअञ्जन्निति प्रागाग्नेयाद्दे-
व सवितरिति प्राक्प्रैषेभ्यः ॥ ११ ॥ सहस्रशीर्षेत्य-
ध्याय,स्त्वद्देवेति च, न तस्येति द्विपदा, अस्याजरास-
ऽइत्यध्यायो, युञ्जानग्रतऽइति च, व्वायुः पुनातु, प्रजा-
पतौ, सुमित्रिया नोऽप नः शोशुचदघमित्युद्धृता-
नि यजूंषि दश, यन्मऽइत्येका, तत्सवितुरिति षड्-
त्येकपदा, भन्नऽइति नवा,न्हानीति द्विपदा, नमस्त-
ऽइति तिस्रो, युञ्जतऽइत्येका, प्रैत्विति च, धर्त्ता दिव-
ऽइति, हृदे त्वा, यस्ते, व्विश्वाऽआशाऽइत्येकशो,ऽ-
श्विना घर्म्ममिति द्वे, ऽअभीममिति व्यवसाना, चत-
स्रेति चतस्र, ऽउद्वयमित्येका, यावतीति द्वे, मनसः
काममित्येका, मयित्यदित्येको,ग्ग्रश्चेति च ॥ १२ ॥
इंशा व्वास्यमिति चतुर्द्द्शाग्ने नयेति द्वे, यथोक्तरी-
त्या च काचिदनियतावसाना स्यात्तासाञ्चानामच्च-
रसङ्ख्यया विद्यादृचा स्तोममिति दृश्येद्गायत्री प्रियो
देवानामित्यनुष्टुप् तदप्येते श्लोकाः ॥१३॥ पादा यत्रा-
वियुक्ताः स्युरन्तरैर्न्निगदो भवेत् ॥ छन्दसां परिमा-
णञ्च दृश्यते हि यथा क्वचित् ॥ १ ॥ परमेष्ठ्यऽक्टगा-
दीनामाग्नेयं ब्राह्मणन्तथा ॥ नाना छन्दर्ग्यजुर्भ्यां च
ब्राह्मणस्य सदा स्मृतम् ॥ २ ॥ देवा यज्ञमिति चैत-
द्ब्राह्मणन्नैककर्मभाक् ॥ सोमसौत्रामणी सम्पत्यै
तद्भावादृचोऽब्रुवन् ॥ ३ ॥ अथ वा सर्व्वमन्त्राणाञ्चत्वा-
मेवं प्रकल्पयेत् ॥ उत विद्वान्प्रशंसीयश्छन्दोविचिति-

यं प्रति ॥ ४ ॥ छन्दोभूतमिदं सर्व्वं वाङ्मयं स्याद्वि-
जानतः ॥ नाच्छन्दसि न चापृष्टे शब्दश्चरति कश्चन ॥
५ ॥ अपि चास्मिन्यजुर्वेदे सर्वो मन्त्रो यजुर्भवेत् ॥
यजुषाऽध्वर्य्युकर्मेति श्रुतौ कल्पेऽति कीर्त्तितम् ॥ ६ ॥
यजुषाऽनड्वाहौ युनक्ति यजुषा क्रियते यजुषा ॥ जप-
ति यजुर्भिर्जुहोति यजुष्कृत्यै यज्ञस्य समृद्धौ ॥ ७ ॥
यः कश्चित्पादवान्मन्त्रो युक्तश्चाक्षरसङ्ख्यया ॥ (१)
सुवियुक्तावसानां च तामृचं परिचक्षते ॥ ८ ॥ यः
कश्चित्करणो मन्त्रो न च पादाक्षरैर्युतः ॥ अनियु-
क्तावसानश्च तं यजुः परिकल्पयेत् ॥ ९ ॥ व्यवसिता
नियताऽक्षरार्द्धमाना सुविभक्तावसाना पादाक्षरपादा
ऋचः ॥ यजुरन्यदुपैत्यस्य कश्चिदतः स्वयमेव शतैर्वि-
वित्तयामयोः ॥ १० ॥ ऋचो यजूंषि प्रतिवेदशाखं
दृष्टं विपर्य्यस्य ऋषिप्रसादात् ॥ एतद्धितं ब्रह्म सना-
तनाद्यंतं तानृषिर्वेद नमोऽस्तु तस्मै ॥ ११ ॥ द्वे
सहस्रे शते न्यूने मन्त्रे वाजसनेयके ॥ ऋग्गणः प-
रिसङ्ख्यातः शेषमन्यदृचो यजु ॥ १२ ॥ अष्टौ सह-
स्राणि शतानि चाष्टावशीत्यन्यान्यधिकानि यजूं-
षि ॥ एतत्प्रमाणं यजुषां तु केवलं सशुक्रियं सखिलं
याज्ञवल्क्यम् ॥ १३ ॥ हारीतमाद्यं परमं पवित्रं वि-
द्यात्प्रमाणं यजुषामृचां यः ॥ स ब्रह्मसन्तानमिहाब्र-
वीच्च सालोक्यतामृग्यजुषां च गच्छतीति सालोक्यता-

(१) विनियुक्तावसानां इति 'ख' पुस्तकपाठः ॥

ऋग्यजुषां च गच्छतीति ॥ १५ ॥ इति महर्षिकात्यायनप्रणीतमष्टादशपरिशिष्टान्तर्गतं नवमम्ऋग्यजुःपरिशिष्टं समाप्तम् ॥

# अथाष्टादशपरिशिष्टान्तर्गतं चतुर्थमनुवाकाध्यायपरिशिष्टमारभ्यते ॥

अथानुवाकान्वक्ष्यामि ब्रह्मणा विहितान्पुरा(१) ॥ विप्राणां यज्ञकालेषु जपहोमार्च्चनादिषु ॥ १ ॥ इषे त्वैका, वसोः पवित्रं तिस्रो, ऽग्ने व्रतपते सप्त, पवित्रे स्थो द्वे, शर्म्मासि तिस्रो, धृष्टिरसि शर्म्मासि द्विकौ, देवस्य त्वा तिस्रो, देवस्य त्वा पञ्च, प्रत्युष्टꣳ रक्षस्तिस्रो, दशैकविꣳशत् ॥ १० । ३१ । १ ॥ कृष्णोऽसि षड, ग्ने वाजजित्तिस्रो, मयीदमग्नीषोमयोः पञ्चका, वग्ने दब्धायो चतस्रः, सँव्वर्च्चसा पञ्चाग्नये कव्यवाहनाय षट्, सप्त, चतुस्त्रिꣳशत् ॥ ७ । ३४ । ३ ॥ समिधाग्निम्भूर्भुवः स्वश्चतुष्का, वग्निर्ज्ज्योतिर्द्वे, ऽउपप्रयन्तः षड्विꣳशति, भूर्भुवः स्वस्तस्रो, गृहा मा तिस्रः, प्रघासिनः पञ्च, पूर्णा दर्व्वि द्वे ऽअक्षन्नमीमदन्त षडे, षते सप्त, दश, त्रिषष्टिः ॥

(१) एतत्परिशिष्टस्यापि प्रातिशाख्ये प्रयोजनम् ४ अ० सू० १६७ द्विपदैकपदान्यप्यनुवाके" इति ॥

१० । ६३ । ३ ॥ एदन्द्वे, महीनां पयस्तस्त्र, ऽआकू-
ष्याऽस्तकस्सामयो द्विकौ, व्रतं कृणुत षडे, आते च-
तस्रो, वस्व्यसि तिस्र, ऽएष ते द्वे, शुक्रज्ज्वा चतस्रो,
ऽदित्यास्त्वगष्टौ, दश, सप्तविंठ॰ शत् ॥ १० । ३७ ।
४ ॥ अग्नेस्तनूरापतये चतुष्कौ, तप्तायनी द्वे, इन्द्रघो-
षस्तिस्रो, युञ्जतेऽष्टौ, देवस्य त्वा चतस्रो, देवस्य त्वा
पञ्च, विभूरसि चतस्रो, ज्योतिरसि षडु,रु विष्णो
तिस्रो, दश, त्रिचत्वारिंठ॰ शत् ॥ १० । ४३ । ६ ॥
देवस्यत्वा षडु,पावीरसि पञ्च, माऽहिः षट्, सन्ते ति-
स्रः, समुद्रङ्गच्छ हविष्मतीर्द्विकौ, हृदे त्वा पञ्च,
देवस्य त्वाऽष्टा,वष्टौ, सप्तविंठ॰ शत् ॥ ६ । ३७ । ६ ॥
वाचस्पतयऽउपयामगृहीतोऽसि त्रिका,वावायोऽयँ-
वाग्द्विकौ, या वामेका, तम्प्रत्नथा चतस्रो, ऽयँत्रेनो ये
देवासस्त्रिका,विन्द्राय मूर्द्धानन्द्विकौ, यस्तऽएका, प्रा-
णाय तिस्रो, मघवऽ, इन्द्राग्नीऽआगत, माघौ, मा-
सश्चर्षणीधृतो, विश्वेदेवासऽआगते,न्द्रमरुत्वो, म-
रुत्वन्तं वृषभं, मरुताम्त्वौजसे, सजोषाऽइन्द्र, मरु-
त्वाँ २ ॥ ऽइन्द्र, महाँ २ ॥ ऽइन्द्रो, महाँ २ ॥ इन्द्रऽ-
एकैको, दुश्यमष्टौ, पञ्चविंठ॰ शति,रष्टाचत्वारिं-
ठ॰ शत् ॥ २५ । ४८ । ७ ॥ उपयामगृहीतोऽस्यादि-
त्येभ्यः पञ्च, वाममद्य द्वे, सुशर्म्माऽस्येका, बृहस्पति
सुतस्य द्वे, हरिरसि चतस्रः, समिन्द्रणोऽष्टौ, माऽहि,
रेजतु दशमास्यः पञ्चका, वातिष्ठ, युक्ष्वा ही, न्द्रमिदे-

कैका, यस्मान्न ह ऽअग्ने पवस्वो, त्तिष्ठन्नह्वश्च समुदुत्य-मेकैका, ऽऽजिघ्र द्वे, व्विनऽइन्द्र, व्वाचस्पतिँ, व्वि-श्वकर्म्मन्नेकैका, ऽग्नयेत्त्वा चतस्र, ऽइह रतिस्तिस्रः, परमेष्ठी दश, त्रयोविँ०शति, स्त्रिषष्टिः ॥ २३ । ६३ । ८ ॥ देव सवितश्चतस्र, ऽइन्द्रस्य व्वज्रः पञ्च, देवस्याहं दशा, पये तिस्रो, व्वाजस्येममष्टा, वग्निरे-कात्त्वरेणैष ते चतुष्कौ, सविता द्वे, अष्टौ, चत्त्वारि-ँ०शत् ॥ ८ । ४० । ९ ॥ अपो देवास्तिस्रः, सोमस्य त्विषिः पञ्चा, वेष्ट्राः सप्त, सोमस्य त्वा चतस्रऽइन्द्रस्य व्वज्रः पञ्च, स्योनाऽसि चतस्रः, सविन्नैका, ऽश्विभ्यां चतस्रो, ऽष्टौ, चतुस्त्रिँ०शत् ॥ ८ । ३४ । १० । ११९ ॥ युञ्जानऽएकादश, प्रतूर्त्तँ०षोडश, देवस्य त्वा दशा, पो देवीर्द्वादशा, ऽऽपो ह्येकादशा, दिति-ड्वा पञ्चा, कूतिमष्टादश सप्त, त्र्यशीतिः ॥ ७ । ८३ । ११ ॥ दृशानः सप्तदश, दिवस्परि द्वादश, समिधा-ग्निं पञ्चदशा, पेत सप्तदशासुन्वन्तं त्रयोदश, याऽ-ओषधीः सप्तविँ०शति, र्म्मा मा षोडश, सप्त, सप्तद-शँ०शतम् ॥ ७ । ११७ । १२ ॥ मयि गृह्णामि प-ञ्चदश, ध्रुवाऽसि मधु व्वाताऽएकादशकौ, सम्म्य-क्स्रवन्ति नवे, मम्मा षड, पान्त्वैका, ऽयम्पुरः पञ्च, सप्ता, ष्टापञ्चाशत् ॥ ७ । ५८ । १३ ॥ ध्रुवक्षितिः षट्, सजूर्ऋतुभिर्म्मूर्द्धावयो द्विका, विन्द्राग्नीऽआयुर्म्मे षट्का, वाशुस्त्रिवृदेका, ऽग्नेर्ब्भागोऽस्येकया चतुष्का,

वष्टा,वेंकविंश॰ शत् ॥ । ३१ । १४ ॥ अग्ने जाता-न्पञ्च, रश्मिना सत्याय चतस्रो,राड्यस्ययम्पुरः पञ्च-का, वाग्निम्मूर्द्वैकोनविंश॰ श,द्येनऽक्तृषयोऽष्टौ, तपश्च नव, सप्तपञ्चषष्टिः ॥ ७ । ६५ । १५ ॥ नमस्ते षोड-श, हिरण्यबाहवऽउष्णीषिणे, तत्तभ्यो, ज्येष्ठाय, प-ञ्चकाः, स्तुत्याय चतस्रः, शम्भवायैका, पार्य्याय प-ञ्च, द्रापेऽअन्धसो विंश॰ शतिन्नव, षट्षष्टिः ॥ ८ । ६६ । १६ ॥ अश्मन्नूर्ज्जन्दश, नमस्ते पञ्चा,ग्निस्ति-ग्मेन नव,चक्षुषः पिताष्टा,वाशुः शिशानः सप्तदशो, देवं क्रमद्भमग्निना पञ्चदशको, शुक्रज्ज्योतिः सप्ते मण्स्तनं त्रयोदश, नवै, कोनशतम् ॥ ८ । ६८ । १७ ॥ व्याजः सत्यमूर्क्कं चतुष्का, ऽअप्सग्निस्त्रि-का, वंश॰ शुः पञ्चै,का चतस्रो, व्याजाय द्वे, व्याजस्य न्वष्टा, इताषाट्त्रयोदशा, ग्निंय्युनज्मि सप्त, यदाकू-ताद्वात्र्त्रंहत्याय दशको, त्रयोदश, सप्तसप्ततिः ॥ १३ । ७७ । १८ ॥ ६७ ॥ स्वाद्वीन्त्वैकादश, देवा यज्ञं विंश॰ शतिः, सुरावन्तं॰ सप्तदशो, दीरतां त्रयोदशा,च्चा-जानु दश, सोमो राजाऽष्टौ, सीसेन तन्त्रं॰ षोडश, सप्त, पञ्चनवतिः ॥ ७ । ८५ । १८ ॥ ऋतस्य योनि-स्त्रयोदश, यद्देवा दशा, ऽध्याद्धाम्यष्टौ, यो भूतानां चतस्रः, समिद्धऽइन्द्रऽएकादशा, यात्वष्टौ,समिद्धोऽअ-ग्निर्द्वादशा,श्विना हविस्त्रयोदशा,श्विना तेजसै-कादश, नव, नवतिः ॥ ८ । ८० । २० ॥ इममे समि-

द्वोऽअग्निरेकादशकौ, व्वसन्तेनऽऋतुना षड्ढोता य-त्समिधाऽग्निं द्वादशा,श्विनौ च्छागस्य सप्त, देवं बर्हिस्त्रयुद्दश, षडेकषष्टिः ॥ ६ । ६१ ॥ २१ ॥ २२ ॥ तेजोऽसि पञ्चा, ग्नयऽएका, हिङ्काराय द्वे, तत्सवि-तुर्द्दश, व्विभूर्म्मात्रैका, काय द्वे, शेषास्त्रयोदशैकैका, ऽएकोनविᳪं॰शति,श्चतुस्त्रिᳪं॰शत् ॥ १९ । ३४ । २२ ॥ हिरण्यगर्ब्भो यः प्राणतो द्विकौ, युञ्जन्त्यष्टौ व्वायुष्ट्वा पञ्च, प्राणाय तिस्र, ऽउत्सक्थ्या द्वादश, गायत्री कस्त्वा षट्कौ, कः स्विदष्टौ, कास्विद्दश, सुभूः स्वयम्भूस्तिस्र,ऽएकादश, पञ्चषष्टिः ॥ ११ । ६५ । २३ ॥ अश्वस्तूपरो, धूम्म्रान्वसन्ताय, समुद्द्राय शिशुमा-रा,न्मयुः प्राजापत्यो, दशकाश्चत्वारश्चत्वारिᳪं॰शत् ॥ ४ । ४० । २४ ॥ शादन्दद्भिर्न्नवैकैका, हिरण्य-गर्ब्भश्चतस्र, ऽआनो दश, मा नो मित्त्रो, यदश्वस्या-ष्टकौ, यत्ते षडिमा नु कन्द्वे, पञ्चदश, सप्तचत्वारिᳪं॰शत् ॥ १५ । ४७ । २५ ॥ ४६ ॥ अग्निश्च पञ्चदशो-स्रा तऽएकादश, द्वौ, षड्विᳪं॰शतिः ॥ २ । २६ ॥ २६ ॥ समास्त्वा दशो, द्वौऽअस्य, पीवोऽअन्ना द्वादश-का, वभि स्त्वैकादश, चत्त्वारः, पञ्चचत्वारिᳪं॰शत् ॥ ४ । ४५ । २७ ॥ होतायक्षदेकादश, देवं बर्हिर्द्वा-दश, पुनरप्येवं, चत्वारः, षट्चत्वारिᳪं॰शत् ॥ ४ ।

४६ । २८ ॥ समिद्धोऽग्नेकादश, यदक्रन्दस्त्रयो-
दश, समिद्धोऽग्नद्य द्वादश, केतुङ्कृण्वंश्चतुर्विंदं०
शति,श्चत्वारः, षष्टिः ॥ ४ । ६० । २८ । देव सवि-
तः षट्, तपसे कौलालठं० षोडश, द्वौ, द्वाविंठं० श-
तिः ॥ २ । २२ । ३० ॥ सहस्रशीर्षा षोडशा, द्भ्यः
सम्भृतः षड्, द्वौ, द्वाविंठं० शतिः ॥ २ । २२ । ३१ ॥
तदेव सप्त, वेनस्तत्पश्यन्, द्वौ, षोडश ॥ २ । १६ ।
३२ ॥ अस्माजरासः सप्तदशा, प्रश्चिन् द्वादश, विभ्रा,
ट्चतुर्दश, प्रवाहजऽएकादश, प्रवायुं, प्रवीरया पञ्च-
दशका, वानस्त्रयोदश, सप्त, सप्तनवतिः । ७ । २७ ।
३३ ॥ युञ्जाग्रतः, पञ्चनद्यः, सोमो धेनु,माकृष्णेन,
पूषन्तव, दशका,नतदष्टौ, षड,ष्टापञ्चाशत् ॥ ६ ।
५८ । ३४ ॥ अपेतो दशा, पादं द्वादश, द्वौ द्वाविंठं०
शतिः ॥ ॥ २ । २२ । ३५ ॥ ऋचंवाचठं० षोडश, द्यौः
शान्तिरष्टौ, द्वौ, चतुर्विंठं० शतिः ॥ २ । २४ । ३६ ॥
देवस्य त्वा दश,यमाय त्वैकादश, द्वा, वेकविंठं० शतिः ॥
२ । २१ । ३७ ॥ देवस्य त्वाऽष्टौ, यमाय त्वा, व्रतस्य
त्वा दशकौ, त्रयो, ऽष्टाविंठं० शतिः ॥ ३ । ३८ ॥
स्वाहा प्राणेभ्यः षड्,नग्नश्च, सप्त, द्वौ, त्रयोदश ॥
२ । १३ । ३९ ॥ ईशा वास्यमष्टा,वन्धन्तमो नव, द्वौ
सप्तदश ॥ २ । १७ । ४० । ११ ॥ दशाध्याये समा-
ख्याता ग्रनुवाकास्तु सङ्ख्यया ॥ शतं दशानुवाका-

श्च नवान्ये च मनीषिभिः ॥ १ ॥ ११९ ॥ सप्तषष्टिस्त्रि-
तौ ज्ञेयाः ६७ सौत्रे द्वाविंशतिस्तथा ॥ २२ ॥ अ-
श्वऽएकोनपञ्चाश ४९ त्पञ्चत्रिंशत्खिले ३५
स्मृताः ॥ २ ॥ शुक्रियेषु तु विज्ञेया एकादश ११
मनीषिभिः ॥ एकीकृत्य समाख्यातं त्रिशतं त्र्यधिकं
३०३ मतं त्रिशतं त्र्यधिकं मतम् ॥ ३ ॥ इति महर्षि
कात्यायनप्रणीतमष्टादशपरिशिष्टान्तर्गतं चतुर्थमनुवा-
काध्यायपरिशिष्टं समाप्तम् ॥

---

# अथ शौनकोक्तं चरणव्यूहपरिशिष्टं सभाष्यँल्लिख्यते ॥

नत्वा श्रीमसुमेशं च गणेशं श्रीयुतं गुरुम् ॥ शाखादेरिदमाख्यानं क्रियतेऽन्वेष्य यत्नतः ॥ १ ॥ यथाऽनादिर्हरिः ख्यातो निदानं जगतां परम् ॥ तथा वेदोऽपि शास्त्राणां स्मृत्यादीनां महाशयः ॥ २ ॥ तमगाधं च को वेत्ति विस्तीर्णत्वं विनेश्वरम् ॥ तस्मात्सङ्क्षेपतो वक्ष्ये वैदिकादिमुदे मुदा ॥ ३ ॥ ओमित्येकाक्षरं ब्रह्म नादबिन्दुकलात्मकम् ॥ त्रिदैवत्वं त्रिमात्रं च स्फुटं विष्णुसनातनम् ॥ ४ ॥ तं सर्वज्ञं जगत्सेतुं परमात्मानमीश्वरम् ॥ वन्दे नारायणं देवं निरवद्यं निरञ्जनम् ॥ ५ ॥ कृष्णद्वैपायनं वन्दे गुरुं वेदमहानिधिम् ॥ येन चरणव्यूहेषु शाखाभेदमितं कृतम् ॥ ६ ॥ तच्छिष्यं शौनकगुरुं वेदज्ञं लोकविश्रुतम् ॥ नत्वा तु शाकलाचार्य्यं तथैव चाश्वलायनम् ॥ ७ ॥ एवं परम्पराप्राप्तं बालकृष्णं महागुरुम् ॥ यस्य प्रसादाद्व्याख्यामि चरणव्यूहसञ्ज्ञकम् ॥ ८ ॥

## अथातश्चरणव्यूहं व्याख्यास्यामः ॥ १ ॥

अथशब्दो मङ्गले प्रस्तावे च । अथशब्दः पूर्वमेव

मङ्गलार्थ इत्यर्थः । अतो हेत्वर्थः । वेदराशेः पारायण-
चतुर्विभागाच्चरण उच्यते । तस्य व्यूहः समुदायः ।
चतुर्वेदानां समुदायं व्याख्यास्याम इत्यर्थः । कथमेक-
वेदः । तदुक्तमारण्यके "सर्वे वेदाः सर्वे घोषा एकैव
व्याहृतिः प्राणा एव प्राण ऋच एवं विद्यादिति" त-
स्य चतुर्विभागाः कृताः । तथा चोक्तं द्वादशस्कन्धे ष-
ष्ठाध्याये भागवते । तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैः
प्रभुः ॥ सव्याहृतिकान्सोङ्कारांश्चातुर्होत्रविवक्षया ॥
१ ॥ पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन्ब्रह्मकोविदान् ॥ ते
तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥ २ ॥ ते प-
रम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ॥ चतुर्युगेष्वथ व्य-
स्ता द्वापरादौ महर्षिभिः ॥ ३ ॥ क्षीणायुषः क्षीणस-
त्वान्दुर्मेधान्वीक्ष्य कालतः ॥ वेदान्ब्रह्मर्षयो व्यस्यन्हृ-
दिस्थाच्युतनोदिताः ॥ ४ ॥ अस्मिन्नप्यन्तरे ब्रह्मन्भग-
वाँल्लोकभावनः ॥ ब्रह्मेशाद्यैर्लोकपालैर्याचितो ध-
र्मगुप्तये ॥ ५ ॥ पराशरात्सत्यवत्यामंशांशकलया वि-
भुः ॥ अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥ ६ ॥
ऋगथर्वयजुःसाम्नां राशीकृत्य वर्गशः ॥ चतस्रः सं-
हिताश्चक्रे सूत्रे मणिगणा इव ॥ ७ ॥ तासां स चतु-
रः शिष्यानुपाहूय महामतिः ॥ एकैकसंहितां ब्रह्म-
न्नेकैकस्मै ददौ विभुः ॥ ८ ॥ पैलाय संहितामाद्यां
बह्वृचाख्यामुवाच ह ॥ वैशम्पायनसञ्ज्ञाय निगदाख्यां
यजुर्गणम् ॥ ९ ॥ साम्नां जैमिनये प्राह तथा छन्दो-
गसंहिताम् ॥ अथर्वाङ्गिरसां नाम स्वशिष्याय सुमन्त-

वे ॥ १० ॥ पैलः स्वसंहितामूचे इन्द्रप्रमितये मुनिः ।
बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥
११ ॥ चतुर्द्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव ।
पराशरायाग्निमित्रे इन्द्रप्रमितिरात्मवान् ॥ १२ ॥
अध्यापयत्संहितां स्वां माण्डूकेयमृषिं कविम् ॥ तस्य
शिष्यो वेदमित्रः सौभर्य्यादिभ्यऊचिवान् ॥ १३ ॥ शा-
कल्यस्तत्सुतः स्वां तु पञ्चधा व्यस्य संहिताम् ॥ वात्स्य-
मौद्गल्यशालीयगोसत्यशिशिरेष्वधात् ॥ १४ ॥ जातू-
कर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् ॥ व्यलीक-
पैङ्गिपैलालविरजेभ्यो ददौ मुनिः ॥ १५ ॥ बाष्कलिः
प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् ॥ चक्रे बाला-
य निर्भज्य कासाराश्चैव तां दधुः ॥ १६ ॥ बह्वृचाः
संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः ॥ श्रुत्वैतच्छन्दसां
व्यासं सर्वपापैः प्रमुच्यते ॥ १७ ॥ अस्यार्थः । व्यासा-
त्पैलः संहितां पदक्रमं च त्रिविधरूपं पठित्वा इन्द्रप्र-
मितये बाष्कलाय च ददौ इन्द्रप्रमितिश्चतुर्धा जटान्तं
व्यासं कृत्वा स्वसुताय माण्डूकेयाय बोध्याय याज्ञव-
ल्क्याय पराशरायाग्निमित्रे च ददौ । माण्डूकेयस्य-
शिष्यो वेदमित्रस्तस्य पुत्रेभ्यः सौभर्यादिभ्यस्तैः स्वसुता-
य शाकल्याय ददौ । शाकल्यः संहितापदक्रमज-
टादण्डरूपं च पञ्चधा व्यासं कृत्वा वात्स्यमुद्गलशा-
लीयगोसत्यशिशिरेभ्यो ददौ। शाकल्यशिष्यो जा-
तूकर्ण्यः सनिरुक्तां संहितां व्यलीकपैङ्गिपैलालविर-
जेभ्यो ददौ । पूर्वोक्तबाष्कलपुत्रो बाष्कलिः पूर्वोक्त

सर्वशाखाभ्य उद्धृत्य वालखिल्याख्यसंहितां चक्रे तां नाम्ना वालखिल्यसंहितां वालायनिप्रभृतयोऽधीतवन्तः ॥ इति पदेषु संहितात्वमितिकरणावेष्टनं, उदात्तस्वरितस्वराणां सिद्धिः, एतच्छन्दसां व्यासं विस्तारं श्रुत्वा सर्वपापैः प्रमुच्यत इत्यर्थः । तथा च विष्णुपुराणे । ब्रह्मणा चोदितो व्यासो वेदान्व्यस्तुं प्रचक्रमे ॥ अथ शिष्यात्स जग्राह चतुरो वेदपारगान् ॥ १ ॥ ऋग्वेदश्रावकं पैलं सञ्जग्राह महामतिः ॥ वैशम्पायननामानं यजुर्वेदस्य चाग्रहीत् ॥ २ ॥ जैमिनिः सामवेदस्य तथैवाथर्ववेदवित् । सुमन्तुस्तस्य शिष्योऽभूद्वेदव्यासस्य धीमतः ॥ ३ ॥ तथा च गृह्यसूत्रम् ॥ सुमन्तुजैमिनि वैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्या इति । जानन्ति बाहवित्यारभ्य माण्डूकेया इत्यन्तं माण्डूकगणसमुदायः । गार्गी वाचक्नवीत्यारभ्य शाङ्खायनमित्यन्तेन शाङ्खायनगणः । एतेषां कौषीतकीब्राह्मणमारण्यकं शाङ्खायनसूत्रं चेति । ऐतरेय इत्यारभ्य आश्वलायनान्ता आश्वलायनगणाः । एषामैतरेयब्राह्मणमारण्यकमाश्वलायनसूत्रं चेत्यर्थः ॥ (१)

---

(१) अमुमेवार्थं श्रीमद्वेदव्यासः प्रथमस्कन्धे चतुर्थोध्याये आह ॥ सूतउवाच ॥ द्वापरे समनुप्राप्ते तृतीययुगपर्यये ॥ जातः पराशराद्योगी वासव्यां कलया हरेः । १ । स कदाचित्सरस्वत्याउपस्पृश्य जलं शुचिः ॥ विविक्त एक आसीनउदिते रविमण्डले ॥ २ ॥ परावरज्ञः स ऋषिः कालेनाव्यक्तरंहसा ॥ युगधर्मव्यतिकरं प्राप्तं भुवि युगे युगे ॥ ३ ॥ भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम् ॥ अश्रद्दधानान्निःसत्त्वान्दुर्मेधान्ह्रसितायुषः । ४ । दुर्भगांश्च जनान्वीक्ष्य मुनिर्दिव्येन चक्षुषा ॥ सर्वधर्माश्रयाणां यद्दध्यौ चिरममोघदृक् । ५ । चातुर्होत्रं कर्मशुद्धं प्रजानां वीक्ष्य वैदिकम् ॥ व्यदधाद्यज्ञसन्तत्यै वेदमेकं चतुर्विधम् । ६ । ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वा-

## तत्र यदुक्तं चातुर्विध्यं चत्वारो वेदा विज्ञाता भवन्ति ॥ २ ॥

अस्मिन् ग्रन्थे यदुक्तं चातुर्विध्यं तेऽत्र चत्वारो वेदा विज्ञाता भवन्ति ॥

## ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदश्चेति ॥ ३ ॥

रउद्धृताः। इतिहासपुराणां च पञ्चमो वेद उच्यते । ७ । तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः कविः । वैशम्पायन एवैको निष्णातो यजुषां मुने । ८ । अथर्वाङ्गिरसामासीत्सुमन्तुर्वारुणो मुनिः । इतिहासपुराणानां पिता मे रोमहर्षणः । ९ । तएव ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा । शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनो भवन् । १० । तएव वेदा दुर्मेधैर्धार्यन्ते पुरुषैर्यथा। एवं व्यवस्यद्भगवान्व्यासः कृपणवत्सलः । ११ । अस्यार्थः । कृतयुगापेक्षया तृतीये युगपर्यवसाने समनुप्राप्ते सति हरेः कलांशेन पराशरात्पराकृतः शरो हिंसा येन स तथोक्तस्तद्वासव्यां वसोरुपरिचरस्य पुत्र्यां सत्यवत्यां योगी नित्यज्ञानी नाम्ना व्यासो जातोऽवतीर्णो भगवान् स कदाचिच्छुद्धः सरस्वत्या नद्या जलमुपस्पृश्य सन्ध्याक्रियां निर्वर्त्य पश्चाद्रविमण्डले उदिते सति तत्तटे एकान्ते एकाकी कालत्रयज्ञानी युगधर्मसाङ्कर्यं कालकृतभूतकार्याणां शक्तिह्रासं च तात्पर्यशून्यान्निरुत्साहान्दुर्मेधान्धारणाशक्तिशून्यानल्पायुषो दुर्भाग्यान्वीक्ष्य मौनवान् अपरोक्षज्ञानेन सर्वाश्रमाणां यद्धितं तच्चिरं चिन्तितवान् । होत्रध्वर्यूद्गातृब्रह्माणो यस्मिस्तत्तथोक्तं दर्शहोत्रादिचातुर्होत्रपर्यन्तैर्मन्त्रैः प्रकाश्यं वा अग्निष्टोमादिकं कर्मप्रजानां वैदिकीनां शुद्धिकरं वीक्ष्य अग्निष्टोमादियज्ञपरम्पराप्रवर्त्तनाय अविभक्तं ऋगादिभेदेन चतुर्विधं वेदं व्यदधात् । वेदव्यासेन मूलवेदसमुद्राच्चत्वारो वेदा उद्धृता न तु कृताः तदर्थज्ञानाय कृतं इतिहासपुराणं च वेदार्थावेदकत्वात्पञ्चमो वेदो रचितोऽर्थतो न किन्तु शब्दतः। जैमिनस्यापत्यं जैमिनिः साम गायति शिष्येषु गमयति प्रवर्तयति, कविः सूक्ष्मज्ञानी । यजुर्वेदप्रवर्त्तकतया वैशम्पायनः । वरुणपुत्रः सुमन्तुः । रोमहर्षणः इतिहासपुराणानां प्रवर्त्तकः । किमर्थं दीनजनःस्निग्धः शाखोपशाखाभेदेन व्यवस्यत् चकार तस्माद्व्यास इति नाम बोध्यम् ॥

इति स्पष्टार्थः । "वेदा हि यज्ञार्थमभिप्रवृत्ताः ।
तथा च विष्णुपुराणम् । आद्यो वेदश्चतुष्पादः शत-
साहस्रसंमितः । ततो दशगुणः कृत्स्नो यज्ञोऽयं स-
र्वकामधुक् ॥ १ ॥ अत्रैव मत्सुतो व्यास अष्टाविंशति-
मेऽन्तरे ॥ वेदमेकं चतुष्पादश्चतुर्धा व्यभजत्प्रभुः ॥ २ ॥
अस्यार्थः । आद्यो वेदो वेदविभागात्पूर्वकालीनो
वेदश्चतुष्पादः ऋगादिचतुष्टयसमूहरूपः । शतसाह-
स्रसम्मितः । दश दश तच्छतं दशशतानि "तत्साहस्रं
तत्सर्वमिति श्रुतेः । अनन्तसङ्ख्याकः । "अनन्ता वै वेदा
इति श्रुतेः । ततो वेदात्प्रवृत्तः कृत्स्नोऽयं दशगुणः ।
दशविधः । "स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपौ-
र्णमासौ चातुर्मास्यानि पशुः सोमइति श्रुतेः । तथा
च "पञ्च वा एते महायज्ञा इत्युपक्रम्य ब्रह्मयज्ञो देव-
यज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञइति श्रुतेश्च ।
वैतानिका गार्ह्याश्च दशयज्ञाः । अत्रान्तरे वैवस्वत-
मन्वन्तरे अष्टाविंशतिमे द्वापरयुगे इति शेषः । मत्सु-
तो व्यासः कृष्णद्वैपायनश्चतुर्धा व्यभजत् । ऋग्वेदा-
दिरूपेण चतुर्धा विभक्तवान् । पाकयज्ञास्त्रिविधाः ।
अत्रगृह्यम् । "हुता अग्नौ हूयमाना अनग्नौ प्रहु-
ता ब्राह्मणभोजने ब्रह्मणि हुताइति । अत्र वृत्ति-
कृत् । हुता अग्नौ हूयमाना हविष्यस्य जुहुयादि-
त्येवमादयो हुताः । अनग्नौ क्रियमाणा अथ बलिह-
रणमित्येवमादयः प्रहुताः । ब्राह्मणभोजनं यत्रास्ति
ब्राह्मणान्भोजयित्वेति ब्रह्मणि हुताः इति । नित्या-

भ्यासो ब्रह्मयज्ञः पारायणं च । अत्र गृह्यसूत्रम् । ब्रह्मयज्ञखण्डे । यदृचोऽधीते पय आहुतिभिरेव तद्देवतास्तर्पयति यद्यजूंषि घृताहुतिभिर्यत्सामानि मध्वाहुतिभिर्यदथर्वाङ्गिरसः सोमाहुतिभिर्यद्ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीत्यमृताहुतिर्यदृचोऽधीते पयसः कुल्या अस्य पितॄन्त्स्वधा उपक्षरन्तीति ॥

## तत्र ऋग्वेदस्याष्टौ स्थानानि भवन्ति ॥ ४ ॥

तत्र ऋग्वेदस्याष्टभेदा भवन्ति शाकलबाष्कलौ ऐतरेयब्राह्मणारण्यकौ ४ शाङ्खायनमाण्डूकौ ६ कौषीतकीब्राह्मणारण्यकौ ८ अन्येऽष्टभेदा यथा "वेदा विकृतिशाखाश्च भेदस्तु त्रिविधस्तथा ॥ पृथङ्नाना विधानेन व्यासेन कथितं पुरा । इति । अत्राष्टभेदेनाष्टस्थानेन वा विकृतिर्ग्राह्या । विकृतिस्तु अग्रे वक्ष्यामः । तस्माद्ब्रह्मयज्ञार्थे पारायणार्थे च ऋग्वेदस्याध्ययनं कर्त्तव्यम् । ततश्चतुष्पदेन वक्ष्यति ॥

## चर्चा श्रावकश्चर्चकः श्रवणीयपारः ॥ ५ ॥

चर्चाअध्ययनम् । तत्र औणादिसूत्रे । चिन्ति पूजि कथि कुम्बि चर्चश्च । एभ्योऽङ्स्त्रियां भावादौ । चि-

न्ति स्मृत्याम् । पूजि पूजायाम् । कथि वाक्यप्रबन्धे । कुम्बि आच्छादने । चर्चाध्ययने । चुरादय इति । अष्टाध्यायीसूत्रे ताल्वोष्ठपुटव्यापारेण शब्दस्य श्रवणं क्रियते सा चर्चा । तदध्ययनस्य श्रावको गुरुः । तस्य चर्चकः शिष्यः । श्रवणीयपारः श्रवणीयो वेदः तस्य पारः समाप्तिः । इति चतुष्पदेन अध्ययनं सूचितम् । अग्रे चतुष्पदेन चत्वारि पारायणानि सूचयति । तत्पारायणं द्विविधं प्रकृति विकृति रूपम् । का प्रकृतिः । का विकृतिः । प्रकृतिः संहिता सा द्विविधा रूढा योगा । रूढा यथा "अग्निमीडे पुरोहितमिति । योगा यथा अग्निमीडे । ईडे पुरोहितम् । इति शौनकीयप्रातिशाख्यद्वितीयपटले उव्वटभाष्यकारेण व्याख्यातम् । अथ चतुष्पारायणं यथा ॥

## क्रमपारः क्रमपदः क्रमजटः क्रमदण्डश्चेति चतुष्पारायणम् ॥ ६ ॥

क्रमशब्द उभयसंहिता वाच्यः । स कथम् । अनुलोमविलोमाभ्यां त्रिवारं हि पठेत्क्रमम् । विलोमे पदवत्सन्धिरनुलोमे यथाक्रमम् । यथाक्रमं यथा संहिता इत्यर्थः । अन्यच्च । वर्णक्रमः । अक्षरसमाम्नाय एवेत्यारण्यके । कथमभिष्टुयादित्यक्षरशः । चतुरक्षरशः । पच्छः । अर्द्धर्चशः । त्रटकृशः । इति ब्राह्मणम् । भूयांसि तु समाम्नानात् व्यञ्जनमात्रं तु तत्तस्याभिधानस्य भवतीति नैरुक्ताः । क्रमः संहिता-

वाची कथम् । पदप्रकृतिः संहितेति निरुक्तवचनात्सा क्रमरूपा इत्यर्थः । क्रमपदः क्रमः संहिता तस्याः पदानि । इति द्वे प्रकृतिपारायणे द्वे विकृतिरूपे । विकृतिरष्टविधा भवति । तत्र । जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः । अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिरिति । आसां मध्ये जटा दण्डयोः प्राधान्यम् । तत्कथम् । जटानुसारिणी शिखा । दण्डानुसारिणी माला लेखा ध्वजो रथश्च । घनस्तूभयानुसारित्वात् । अस्या नियमवाक्यानि व्याडीकृतजटापटले उदाहरणानि च । तत्र जटावाक्यम् । क्रमे यथोक्ते पदजातमेव द्विरभ्यसेदुत्तरमेव पूर्वम् ॥ अभ्यस्य पूर्वं च तथोत्तरे पदेऽवसानमेवं हि जटाभिधीयते । १ । अस्यार्थः । क्रमे यथोक्तेसति "क्रमो द्वाभ्या"मित्याद्युक्ते क्रमप्रकारे पदजातं पदद्वयं वा पदत्रयं वा द्विवारमभ्यसेत् । द्विवारं पठेत् अभ्यासप्रकारः । उत्तरमेव पूर्वं क्रमवत्पदद्वयं गृहीत्वा पूर्वं नाम प्रथमं उत्तरपदमभ्यसेत् । तत उत्तरपूर्वपदयोः सन्धानद्वारा पूर्वं द्विरभ्यस्योत्तरे पदेऽवसानं एवं प्रकारेणाध्ययनं जटाभिधीयते कथ्यते । हीति निश्चयार्थम् । उदाहरणान्दर्शयति । अग्निमीडईडेग्निमग्निमीडे, ईडे पुरोहितं पुरोहितमीडऽईडे पुरोहितम् । इत्यादि ज्ञेयम् । अथ दण्डलक्षणम् । क्रममुक्त्वा विपर्यस्य पुनश्च क्रममुत्तरम् । अर्द्धर्चादेवमुक्तोऽयं क्रमदण्डोऽभिधीयते । उदाहरणं

यथा । अग्निमीडे । ईडेग्निम् । अग्निमीडे । ईडेपुरोहितम् । पुरोहितमीडेग्निम् । इत्यादि ज्ञेयम् । अथमाला लक्षणम् । ब्रूयात्क्रमविपर्यासावर्द्धर्चस्यादितोऽन्ततः । अन्तं चादिं नयेदेवं क्रममालेति गीयते । माला मालेव पुष्पाणां पदानां ग्रन्थिनी हि सा ॥ आवर्त्तन्ते वयस्तस्यां क्रमव्युत्क्रमसङ्क्रमाः । अथ शिखालक्षणम् । पदोत्तरां जटामेव शिखामार्याः प्रचक्षते । अथ रेखालक्षणम् । क्रमाद्द्वित्रिचतुष्पञ्चपदक्रममुदाहरेत् । पृथक्पृथग्विपर्यस्य लेखामाहुः पुनः क्रमात् ॥ अथ ध्वजलक्षणम् । ब्रूयादादेः क्रमं सम्यगन्तादुत्तारयेद्यदि ॥ वर्गे च क्वचि वा यत्र पठनं स ध्वजः स्मृतः । अथ रथलक्षणम् । पादशोऽर्द्धर्चशो वाऽपि सहोक्त्या दण्डवद्रथः । अथ घनलक्षणम् । जटामुक्त्वा विपर्यस्य तत्पदानि पुनः पठेत् । अयं घन इति प्रोक्तः इत्यष्टौ विकृतीः पठेत् । अन्यच्च घनस्य द्वितीयलक्षणम् । अन्तात्क्रमं पठेत्पूर्वमादिपर्यन्तमानयेत् । आदिक्रमं नयेदन्तं घनमाहुर्मनीषिणः । इत्यष्टविकृतिलक्षणान्युक्तानि अध्ययने संहितापारायणम् । १ । पदपारायणम् । २ । जटापारायणम् । क्रमदण्डपारायणञ्च । ४ । एतत्पारायणचतुष्टयमित्यर्थः ॥

## एतेषां शाखाः पञ्च विधा भवन्ति ॥ ७ ॥

एतेषां वेदपारायणानां पञ्च शाखा भवन्तीत्यर्थः ॥

गाः काइत्यत आह ॥

शाकला बाष्कला आश्वलायनाः शाङ्खायना माण्डूकायनाश्चेति ॥ ८ ॥

इति प्रसिद्धाः ॥ तेषामध्ययनम् । तेषां आश्वलायनीयादिशाखानां समानाध्ययनं सूचयति ॥

अध्यायाश्चतुःषष्टिर्मण्डलानि दशैव तु ॥ ९ ॥

अध्यायाश्चतुःषष्टिः । अग्निमीळे । अयं देवायेत्यादि चतुःषष्टिरध्यायाइत्यर्थः । मण्डलानि दशैव तु । अग्निमीळे । कुषुम्भक इत्याद्युपाकर्मप्रसिद्धानीत्यर्थः ॥

एकश्च एकवर्गश्चैकश्च नवकस्तथा द्वौ वर्गौ तु द्व्यृचौ ज्ञेयौ न्यूनं तृचशतं स्मृतम् । वर्गाणां परिसङ्ख्यातं द्वे सहस्रे षडुत्तरे । ऋचां दश सहस्राणि ऋचां पञ्च शतानि च । ऋचामशीतिपादश्चैतत्पारायणमु-

चयते ॥ १ ॥ इति शौनकीये चरणव्यूहपरिशिष्टे प्रथमा कण्डिका समाप्ता ॥

वर्गादि आऋचान्ताः सङ्ख्या वालखिल्यैर्विना ज्ञेया । षडुत्तरसहस्रद्वयवर्गादित्यर्थः । सहस्रमेकं सूक्तानां निर्विशङ्कं विकल्पितम् । दशसप्तसु पञ्चान्ते सप्तदशाधिकसहस्रसूक्तानीत्यर्थः । सङ्ख्यातं वै पदक्रमं एकशतसहस्रं वा द्विपंचाशत्सहस्रार्धमेतानि चतुर्दश वासिष्ठानामितरेषां पञ्चाशीतिः । एकलक्षद्विपञ्चाशत्सहस्रपञ्चशतचतुर्दश, वासिष्ठानाम् । १५२५१४ । वासिष्ठगोत्रीयाणां "इन्द्रोतिभिरेकसप्ततिपदात्मको वर्गो नास्ति । इतरगोत्रीयाणां पञ्चाशीत्यधिकपदानीत्यर्थः । ८५ । अथ वालखिल्यसहिता पदसङ्ख्योच्यते । लक्षैकं तु त्रिपञ्चाशत्सहस्रं शतसप्तकम् । पदानि च द्विनवतिः प्रमाणं शाकलस्य च । १ । एकलक्षत्रिपञ्चाशत्सहस्रसप्तशतद्विनवतिश्चाधिकानि पदानीत्यर्थः । १५३७९२ । पदानि वालखिल्यस्य ह्यर्कसङ्ख्याशतानि च । अधिकानि तु सप्तैव । १२०७ । वर्गा अष्टादश स्मृताः । सप्ताधिकद्वादशशतानि पदानीत्यर्थः । इत्याश्वलायनानाम् । शाङ्खायनानां तु वालखिल्यसहितपदसङ्ख्योच्यते । शाकल्यदृष्टे पदलक्षमेकसार्द्धन्तु वेदे त्रिसहस्रयुक्तम् । शतानि सप्तैव तथाऽधिकानि चत्वा-

रि त्रिंशच्च पदानि चर्चा । शाकल्यो माण्डूकगणस्य: ।
संहिता पदानि एकलक्षत्रिपञ्चाशत्सहस्रसप्तशतचतु-
स्त्रिंशदधिकानि पदानीत्यर्थ: । १५३७४३ ॥ पदानि
वालखिल्यस्य रुद्रसङ्ख्याशतानि च । षट्पञ्चाशदधि-
कानि वर्गा: सप्तदशास्तथा । एकादशशतषट्पञ्चा-
शदधिकवालखिल्ये पदानीत्यर्थ: । ११४९ । अष्टप-
ञ्चाशत्पादात्मकृटक्त्रयस्य । यस्त्विजो वर्गो नास्ति ।
न तु हविष्पान्तीयसूक्ते द्वे समीचीवर्गे त्रिकृचानन्तर-
मेक एवाग्निर्कृटक् । यस्त्विनो कृटक् । खिलरूपेण
पठन्ति । ज्योतिष्मन्तस्यचाभाव: । कृटक्त्रयस्य तेषाम-
न्ते पदाभावत्वात् । अन्ते वर्गसमाप्तौ यावन्मात्रस्यर्चं
पठन्ति । एवं द्वे समीचीति षडृचो वर्ग: । आश्व-
लायनानां चतुर्कृचात्मको वर्ग: । इत्याश्वलायनशा-
ङ्खायनशाखयोर्भेदइत्यर्थ: । यस्य मन्त्रस्य पदाभाव-
स्तस्य खैलिकत्वं सिद्धम् । तर्हि त्र्यम्बकं यजामह इ-
ति मन्त्रस्य पदाभावात्तस्य खैलिकत्वं सिद्धम् । न हि
उ मा नागात् । उपलेखायां त्र्यम्बकं प्रथमं भद्रं न: प्र-
जायते ऋतं चेति पदक्रममिममुपयामि गीतमर्द्धर्चान्ते
पदम् । तस्मात्पदकाले क्रमकाले च पठन्ति । "क्रमो
द्वे पदश"इति वचनात् । अत्र द्वितीयपदं नास्ति अर्द्ध-
र्चान्तसमापनात् । क्रमाभावस्तस्मात्पदकाले क्रमकाले
पठनं सएव पदक्रमं इत्यर्थ: । क्रमकाले तु वेष्टनं कर्त्त-
व्यं चतुस्त्रिंशत्सहस्राणि । षत्वे णत्वे च दीर्घत्वे आकारे
सानुनासिके ॥ त्रिचतुष्पञ्चक्रमे अर्द्धर्चान्ते च वेष्टयेत् ।

क्रमेणोदाहरणानि ज्ञातव्यानि । "सुषुमायातम् । मो षूणः । वाजेषु सा सहिर्भव । आ उपानसः । न्या- विध्यदिलीशस्य । अगादारैगुरुकृष्णा । निरुस्सारम- स्कृतोषसम् । अग्निमीडे॰ ऋत्विजमित्यृत्विर्जमिति । चतुस्त्रिंशत्सहस्राणि क्रमकाले वेष्टनानीत्यर्थः । ३४००० । द्विखण्डानां सहस्राणि द्वात्रिंशत्षोडशो- त्तरम् । षोडशोत्तरद्वात्रिंशत्सहस्राणि द्विखण्डानी- त्यर्थः । ३२०१६ । चत्वारिंशत्सहस्राणि द्वात्रिंशतं चाक्षरसहस्राणि । चतुर्लक्षद्वात्रिंशत्सहस्राक्षराणी- त्यर्थः । ४३२००० । द्वात्रिंशतं चाक्षरसहस्राणीत्यर्थ- समाप्तिः पुनर्वचनमुक्तम् । अथ पारायणे ऋक्परिमा- णा उच्यन्ते । ऋचां दशसहस्राणि ऋचां पञ्चशतानि च । ऋचामशीतिपादश्च पारायणं प्रकीर्तितम् । ए- तत्पारायणं वालखिल्यैर्विना सङ्ख्यातम् । वालखिल्या- नि पारायणे न सन्ति तदुच्यते । ऋग्वेदान्तर्गतवाल- खिल्यमेकादशसूक्तम् । ११ । सूक्तं १०० सप्तदशाधि- क १७ मित्यत्र ऋचां दशसहस्राणीत्येतत्सङ्ख्याव्यति- रिक्तानि वालखिल्यानीति प्रसिद्धिः । तत्र यज्ञानुष्ठा- ने ब्राह्मणे सूत्रे च श्रूयते । "वालखिल्याः शंसन्ति प्राणा वै वालखिल्या"इति । अभि प्र वः सुराधसमि- ति षड्वालखिल्यानां सूक्तानामिति ब्राह्मणे आरण्य- के । अथ वालखिल्याविहरेत्तदुक्तं षोडशिनेति सू- त्रकारः श्रौतस्मार्त्तसर्वकर्मानुष्ठाने वालखिल्यप्रसि- द्धिः । वेदपारायणे वर्जमित्यर्थः । शौनकाचार्यवच-

नात् । यथा प्रैषाध्यायकुन्तापाध्यायनिविदाध्यायसुपर्णाध्यायश्चेति तद्वालखिल्याध्याय इत्यर्थः । वालखिल्यसंहितासर्वानुक्रमणीयमन्त्ररूपीसङ्ख्योच्यते । द्विपञ्चाद्धिकपञ्चशतदशसहस्राणीति १०५५२ । वालखिल्यव्यतिरिक्तऋक्सङ्ख्या तु । द्विसप्तत्यधिकचतुःशतमन्त्रः सहस्रऋक् १०४७२ । एतत्सङ्ख्या नित्या द्विपदा नैमित्तिकद्विपदासहित उक्तहवनाभ्यां समाना सा नित्या द्विपदा । आसां सङ्ख्या उपलेखायाम् । तत्र "साधुरसिकन्यां सिषक्तु न उरौ देवा विद्वेषांसयथा वाजं महिराध आवां सुम्नेते ते देवाय रायस्कामः प्रति न स्तोमं स्वायुधासः पितुर्न पुत्रः स नोवाजेषु गावो न यूथं पवस्व सोममन्दयन्निति तिस्रः परिसुवानो नृभिर्ये मा नः प्रत्यञ्चमर्कमनयच्छचीभिरिति द्विपदैकपदा द्वाविंशतिस्तासां सप्तदश द्विपदा १७ एकपदाः पञ्चइति । हवनाध्ययने विपरीता सा नैमित्तिकद्विपदा ता आह वर्गरूपेण । पश्वानतायुं दशरथिनं दश । श्रीणान्दश शुक्रः शुशुक्वां दश वनेम पूर्वीर्दशाग्ने त्वन्नस्त्वार्यग्ने भव षट् प्रशुक्रैतु दश राजा राष्ट्रानां दशक इन्द्राव्य दश बभ्रुरेका दश परिशधन्व दश तन्ते सोतारो द्वादशेमा नुकं चत्वार्यायाहि वनसा चत्वारीति नैमित्तिकद्विपदा चत्वारिंशोत्तरशतमिति १४० । हवने एकैका अध्ययने द्वे द्वे आसामन्त्या एका उर्वरिता सा नित्या द्विपदा । उक्तं च परिभाषायाम् । विंशिका द्विपदा विराजस्तद्द्वैमेक-

पदा द्विर्द्विपदास्तृचः समामनन्ति। आयुक्वन्त्या द्विपदैवेति। द्विर्द्विपदास्तृचः समामनन्ति। यस्य सूक्तस्य द्विर्द्विपदाः समामनन्ति। ता ऋचोऽध्ययने चतुष्पदाः कृत्वेत्यर्थः। आयुक्वन्त्या द्विपदैव सूक्तस्यार्चो युजो या न भवति तास्त्वन्त्या नित्या द्विपदैव। एवमध्ययने द्वावर्द्धर्चावेव प्राधान्यम्। त्रीण्यर्द्धर्चायाः कथम्। तत्रापि द्वावर्द्धर्चावेका ऋचा। अर्द्धर्चा एका कर्तव्या अध्ययनसम्प्रदायबलात्। अनादेशे अष्टाक्षराः पादाश्चर्चा इति परिभाषायाम्। अध्ययने त्रीण्यर्द्धर्चं ऋगेव सम्प्रदायो नास्ति। अस्यां परिमाणमाह। अग्निं होतारं पञ्च सहिश्रद्धोनिषडयं जायत पञ्च विश्वो विहायास्तिस्रोऽयं त्वं रथं पञ्च प्रतद्वोचे यं षडिन्द्राय्यागुप नः पञ्चेमां ते वाचं चत्वारि स नो नव्येभिर्वज्रमिन्द्राय हि द्यौः सप्त त्वया वयं षड्वर्म ह एका वनोति हि एका त्वा जुषः षट् स्तोर्णं पञ्चेमे वांसोमा एका इमे ये ते सुवायवे का प्रसुज्येष्ठं षडति देवानां वर्जम्। सुषुमायातं त्रीणि प्रप्रपूषास्तुष्कमस्तु श्रौषट् चत्वारि शचीभिर्नोवज्र्यं हर्षनिन्द्रपञ्च ये देवासो वर्जं तवत्यं नर्यमेका सखे सखायमेकया ऋचा चीण्येतास्त्रीणि त्रीण्यर्द्धा ऋचा हवनीयास्तुर्न्नवतिसङ्ख्येत्यर्द्धर्चं ऋग्भवने। अध्ययने अर्द्धर्चद्वयेन ऋगेका। अर्द्धर्चेनैकैव ऋग्द्वये कर्त्तव्य इत्यर्थः। एकर्चस्य ऋग्द्वयं विराट् छन्दो विना कथं भवतीत्याशङ्क्य तत्रोच्यते। विराट्छन्दः सर्वच्छन्दसि व्याप्तं वर्त्तते। उ-

र्त्तं चारायणके । "चत्वारः पुरुषा इति ब्राध्वः शरीर-पुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुषइति । तस्यो ष्णिग्लोमानि त्वचं गायत्री त्रिष्टुप् मांसमनुष्टुप् स्ना-वान्यस्थि जगती पङ्क्तिर्मज्जा प्राणो बृहतीति यान्ये-तानि विराट् चतुर्थीन्येवमु हैवैवं विदुष एतद्वहः सर्वैश्छन्दोभिः प्रतिपन्नं भवतीति"प्राप्तो भवतीत्य-र्थः । "गायत्री पङ्क्तीश्च व्यतिषजति गायत्रो वै पुरुषः पाङ्क्ताः पशव"इति ब्राह्मणम् । अत्रोदाहरणम् । "प्रवस्व सोम मन्दयन्निति तिस्रो नित्या द्विपदा गाय-त्र्य"इति सर्वानुक्रमण्याम् । द्विपाद्वै पुरुषो वीर्यं त्रि-ष्टुब्विराड्भ्यामनयोर्द्वाविंशयोर्द्विपदयोरयं पुरुषः । अत्रोदाहरणानि । आवां सुम्ने वरिमन् । प्रत्यञ्चम-र्कमनयन् । परिसुवानो गिरिः । जगती पादइति । एवं सर्वव्याप्तो भवतीत्यर्थः । "छन्दांसि जज्ञिरे" इति श्रुतिः । तथा च शतपथब्राह्मणे "किञ्छन्दः का देवता प्रतिष्ठे" । यथा विष्णुः सर्वव्याप्तस्तथा व्विराट्-छन्दइत्यर्थः । विराट् छन्दस्तु चतुष्पदा । त्रीण्यूर्द्ध्व-चीयां पञ्चपदा स्यक्तर्त्तव्येति । किं प्रमाणं तत्रोच्यते । "एकपाद्भूयो द्विपदो विचक्रमे द्विपात्त्रिपादमभ्येति पश्चात् । चतुष्पादेति द्विपदामभिस्वरे सम्पश्यन्पङ्क्ती-रुपतिष्ठमानः" । एकपदा द्विपदा नित्या द्विपात्त्रि-पादमभ्येति । एकीभूता भवन्तीत्यर्थः । अस्योदाहरण-म् । "अग्निं होतारं मन्ये॰ दसम् । यऽऊर्द्ध्वया॰ क्ष-म् । "अग्रे अर्द्धर्चा "घृतस्य विभ्राष्टिमनुवष्टि॰ सर्पि-षा" ।

ष:" । इति द्विपदा । चतुष्पदा तु । पश्वानतायुम्० । एकार्द्धर्चा त्रिपदा । एकार्द्धर्चा द्विपदा । एका ऋक् पञ्चपदा अध्ययने । द्विर्द्विपदास्त्वृच: समामनन्तीत्यत्र समपादग्रहणात् । असमानपादा विरुद्धा तर्हि पङ्क्तिच्छन्द: पञ्चपदा भवति तस्य द्वितीयभेदो विराट् तस्मात्पञ्चपादत्वं प्राप्तम् । समपादा वा असमपादो विराट् छन्दइत्यर्थ: । अत्र श्रुति: । "समौ चिद्धस्तौ न समं विविष्ट: सम्मातरा चिन्न समं दुहाते" इत्यनया ऋचा परिहार: । दक्षिणवामहस्तौ समौ कर्त्तव्ये असमाप्ताविल्यर्थ: । अथाध्ययने ऋक्सङ्ख्योच्यते । षण्णवत्यधिकचतु:शतदशसहस्राणीति । १०-४९६ । ता: सहितनैर्मित्तिकद्विपदाश्चत्वारिंशोत्तरशतसहितदशसहस्राणीति । १०५६६ । सञ्ज्ञानमुशनावदत्सूक्तस्य पञ्चदशर्चैकीकृत्य पारायणे ऋक्सङ्ख्या । १०५८० । ऋचां दशसहस्राणि इति वचनस्य सङ्ख्या पूर्णा भवतीत्यर्थ: । एका उर्वरिता सा "भद्रन्नो अपि वातयमन:" इति पादाधिक्यमनुक्रमणिकाष्टत्तावप्युक्ते: । भद्रं पुञ्छमित्यारण्यके । अथ सञ्ज्ञानसूक्तम् । सञ्ज्ञानमुशनाऽवदत्सञ्ज्ञानं वरुणोऽवदत् । सञ्ज्ञानमिन्द्रश्चाग्निश्च सञ्ज्ञानं सविता वदत् । १ । सञ्ज्ञानं न स्वेभ्य: सञ्ज्ञानमरणेभ्य: । सञ्ज्ञानमश्विना युवमिहास्मासु नियच्छताम् । २ । यत्कक्षीवांसं वननं पुत्रो अङ्गिरसामवे । तेन नोऽद्य विश्वेदेवा: सम्प्रियां समजीजन-

तृ । ३ संवो मनांसि जानतां समाकूतिर्मनामसि । असौ यो विमना जनस्तं समावर्त्तयामसि । ४ । तच्छं-योरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजं शन्नो अस्तु द्विपदे शं चतुष्पदे । ५ । नैर्हस्त्यं सेनादरणं परिवर्त्म तु यद्हविः । तेनामित्राणां बाहू हविषा शोषयामसि । ६ । परिवर्त्मान्येषामिन्द्रः पूषा च सस्रुतः । तेषां वो अग्निदग्धानामग्निमूढानामिन्द्रो हन्तु वरं वरम् । ऐषु नह्यवृषाजिनं हरिणस्य भियं यथा । परा अमित्रां एष त्वर्वाची गौरुपेजतु ।८। प्राध्वराणां पते वसो होतर्वरेण्य क्रतो। तुभ्यं गायत्रमृच्यते । गो-कामो अन्नकामः प्रजाकामश्च कश्यपः । ९ । भूतं भ-विष्यत्प्रस्तौति महद्ब्रह्मैकमक्षरं बहु ब्रह्मैकमक्षरम् । यदक्षरं भूतकृतो विश्वेदेवा उपासते । १० । महर्षिभि-श्च गोप्तारं जमदग्निमकुर्वत । जमदग्निराप्यायते छ-न्दोभिश्चतुरुत्तरैः ।११। राज्ञः सोमस्य भक्षेण ब्रह्मणा वीर्यावता । शिवा नः प्रदिशो दिशः सत्या नः प्रदिशो दिशः । १२ । अजो यत्तेजो ददृशे शुक्रं ज्योतिः परो गुहा । तदृषिः कश्यपः स्तौति सत्यं ब्रह्म चराचरम् ध्रुवं ब्रह्मचराचरम् ।१३। त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषम् । यद्देवानां त्र्यायुषं तन्मेऽ-अस्तु त्र्यायुषं । १४ । तच्छंयोरावृणीमहे० । १५ । इति सञ्ज्ञानसूक्तं पञ्चदशर्चात्मकम् । अस्य ग्रहणे प्रमाणमाश्वलायनसूत्रम् । तत्र "समानीव" इत्येका ।

तच्छंय्योरावृणीमह" इत्येकेति । तथा च शाङ्खायनसूत्रम् । "अथोपाकर्मौषधीनां प्रादुर्भावे हस्तेन श्रवणेन वाऽक्षतसक्तूनां धानानां च दधिघृतमिश्राणां प्रत्यृचं वेदेन जुहुयादिति हैक आहुः सूक्तानुवाकाद्याभिरिति वाऽध्यायार्षेयाद्याभिरिति माण्डूकेयोऽथ ह स्म कौषीतकिरग्निमीळे पुरोहितमित्येका कुषुम्भकस्तदब्रवीदावदंस्त्वं शकुने भद्रमावद गृणाना जमदग्निना धामन्ते विश्वं भुवनमधिश्रितं गन्तानो यज्ञं यज्ञियाः सुशमि यो नः स्वोऽअरणः प्रतिचक्ष्व विचक्ष्वाग्ने याहि मरुत्सखा यत्ते राजञ्छृतं हविरिति ह्यृचास्तच्छंय्योरावृणीमह इत्येका हुतशेषाद्धविः प्राश्नन्तीति" । पञ्चशाखानां पारायणं तच्छंय्योरावृणीमह इत्यत्र समाप्तिरेकवेदत्वात् । उक्तञ्च । शाङ्ख्याश्वलायनौ चैव माण्डूका बाष्कलस्तथा । बह्वृचा ऋषयः सर्वे पञ्चैते ह्येकवेदिनः ॥ अथ पारायणे चर्चासङ्ख्योच्यते । "एकर्चएकवर्गश्च एकर्चनवकस्तथा" । एकर्चं एकवर्गो जातवेदस इत्यर्थः । नवर्चं एकवर्गऽआपो हि ष्ठेति । द्वौ वर्गौ तु ह्यृचौ ज्ञेयौ, द्वौ वर्गौ ह्यृचावित्यर्थः । अग्ने त्वन्नोऽअन्तमः । आयाहि वनसा सहेति । ऋक्त्रयस्य शतं स्मृतम् । ऋचो वर्गाः शतमित्यर्थः । उदुत्यं चमसं नवमित्यादि । चतुरृचां पञ्चसप्तत्यधिकं च शतं तथा । चतुरृचवर्गाः पञ्चसप्तत्यधिकशतमित्यर्थः । १७५ । यदङ्ग दाशुषे त्वमित्यादि, । पञ्चर्चं तु द्विशतकं सहस्रं रुद्रसंयुतम् ।

पञ्चर्चवर्गा एकादशाधिकद्वादशशतानीत्यर्थः । १२११। अग्निमीळे इत्यादि, । पञ्चचत्वार्यधिकं तु षड्टचां तु शतत्रयम् । षड्टचवर्गाः पञ्चचत्वारिंशदधिकशतत्रय इत्यर्थः। ३४५। अश्विना यज्वरीरिषइत्यादि,। सप्त ऋचां शतं ज्ञेयं विंशतिश्चाधिकाः स्मृताः। सप्तर्चवर्गा विंशत्यधिकशतत्रय इत्यर्थः।१२०। यच्चिद्धि सत्यसोमपा इत्यादि,। अष्टर्चां तु पञ्चाशत्पञ्चाधिकास्तथैव च। अष्टर्चवर्गाः पञ्चाधिकपञ्चशतं इत्यर्थः। ५५। इन्द्रं विश्वाऽअवीवृधन्नित्यादि, । एवं दशाधिकसहस्रद्वयवर्गा इत्यर्थः। २०१०। पञ्चशाखासु निश्चिताः। पञ्चशाखानां पारायणे निश्चयेन इत्यर्थः । वर्गाः सञ्ज्ञानसूक्तस्य चत्वारश्चात्र मीलिताः। सञ्ज्ञानसूक्तस्य चत्वारो वर्गाश्चात्र मिलित्वा दशाधिकसहस्रद्वयमित्यर्थः। एवं पारायणे प्रोक्ता ऋचां सङ्ख्या न न्यूनतः । एवं पूर्वोक्तप्रकारेण वर्गस्य ऋक् न्यूनसङ्ख्येन दशर्चस्य पञ्च ऋक् लोप्यर्द्धर्चस्य ऋक्कर्त्तव्येत्यर्थः। एवं चतुर्विधपारायणेऽपि ज्ञेयम्। "समानीव इति" शाकलानां "तच्छंय्योरिति" बाष्कलानामित्यत्र बाष्कलशाखाध्ययनमनुक्रमणिकाद्युक्तावुक्तम् । "गौतमादौशिजः कुत्सा दीर्घतमेत्येव बाष्कलाध्ययनक्रमः" । अस्यार्थः। गौतमादौशिजः कुत्सः। उपप्रयन्तो । नासत्याभ्याम् । अग्निं होतारम् । इमं स्तोमम् । वेदिषदे । एष बाष्कलक्रमइत्यर्थः । अत्रैवसूक्ते उत्तम-

मण्डले नवके अनुक्रमविपर्यासः । तच्च । स्वादोरभ- क्षि सूक्तान्ते अभिप्रवः सुराधसम् । प्र सुश्रुत"मिति सूक्तद्वयं पठित्वा । अग्नऽआयाह्यग्निभिरिति पठेत् । ततः आग्न इत्वाध्याये गौर्धयत्यनुवाको दशसूक्तात्मकः शाकलस्य । पञ्चदशसूक्तात्मको बाष्कलस्य । तत्रो- च्यते । गौर्धयति सूक्तानन्तरं "यथा मनौ सांवरणौ । यथा मनौ विवस्वति । उपमन्त्वा । एतत्तऽइन्द्र । भूरिदिन्द्रस्य । इत्यन्तानि पञ्चसूक्तानि पठित्वा "आत्वा गिरो रथीरिवेति" पठेयुः । अन्ते संसमित्सूक्तान- न्तरं पञ्चदशऋचात्मकं "सञ्ज्ञानमुशनावदत्तच्छंय्यो- रावृणीमहे" इत्यन्तं वेदसमाप्तिरिति बाष्कलशाखा- ध्ययनम् । एवमध्ययनाभावाच्छाखाऽभाव इत्यर्थः । सूक्तसहस्रसप्तदशाधिकात् अष्टौ सूक्तानि बाष्कल- स्याधिकानीत्यर्थः । प्रति ते । युवं देवाः । यम्त्वि- जः । इमानि वामिति चत्वारि वालखिल्यसूक्तानां लोपइत्यर्थः । यस्तानृग्विवेद चैवाप्यधीते स नाकपृष्ठं भजते ह शश्वत् । अस्यार्थः । यः तान् ऋगर्थंवित् वे- द, ततः हवनपारायणं च अधीते सः वेदिताऽध्येता च नाकपृष्ठं शश्वत्सदा भजते । ह प्रसिद्धौ । इतोऽमुं लोक- मेत्युत तस्मान्न प्रच्यवते हीत्यर्थः । अथ पारायणफलं तदुक्तमारण्यके । "यद्धि सन्धि विवर्त्तयति तं निर्भुजस्य रूपमथ यच्छुद्धे अक्षरे अभिव्यवहरति तत्प्रतृण्णस्या- ग्रऽउऽएवोभयमन्तरेणोभयव्याप्तं भवत्यन्नाद्यकामो नि- र्भुजं ब्रूयात्स्वर्गकामः प्रतृण्णमुभयकाम उभयमन्त-

र्णेति" । अस्यार्थः । द्वयोः पदयोरक्षरयोर्वाऽपि स-
न्धिस्तस्य अविच्छेदाध्ययनं तन्निर्भुजं संहितापारायण-
मुच्यते । शुद्धे द्वे पदे अक्षरे वा सन्धिमकुर्वतोच्चार-
णं तत्प्रतृण्णं पदपारायणम् । संहितापदाभ्यामुभा-
भ्यां व्याप्तमुभयमन्तरेण क्रमपारायणमित्यर्थः । त-
था च सति त्रिभिः कृत्वा स्वरास्वरं विजानाति मा-
त्रामात्रां विभजते सा संहितेति । एवमेतां यो वेद
सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण
लोकेन सर्वमायुरेतीति । तस्मात्क्रमावृत्ते द्वे पदे सं-
हिता द्वे पदे स्वरश्च न सिध्यति । द्वे पदे सिद्धे उत्त-
रारम्भः कर्त्तुं न शक्यते । अतश्च पादार्द्धर्च ऋक् सूक्त-
सिध्यर्थं भगवता पाञ्चालेन स्थापितानां पारायणकर्म-
णां क्रमपारायणमुत्तमं भवतीति चात्र श्लोकः । प्रा-
गाथेन पुरा दानं दृष्ट्वा क्रुद्धो महामुनिः । अर्थवन्तं
क्रमं ब्रूयाद्देवतायाश्च शास्त्रतः । अत ऋग्यजुषां बृं-
हणं पदैः स्वरैश्चाध्ययनं तथा त्रिभिः । अतोऽपि अ-
स्मादपि हेतोः क्रमः अर्थवान्भवति । क्रमेण कृत्वा ऋ-
ग्वेदपारायणे ऋचां बृंहणं साधारणं भवति । इदमि-
त्थं सर्व पाठ इति । स्वरमात्रादिरूपेण निश्चयो भवति
तथा यजुर्वेदपारायणे यजुषां बृंहणं नाम साधारणं
स्वरमात्रादिरूपेण इदमित्थमेव पाठइति निश्चयो भ-
वति । इत्यतिदेश इत्यलं प्रपञ्चेन ॥ अथ पारायण
विधिः । अत्रादौ कलशस्थापनाद्युक्तं महार्णवे । ती-
र्थे देवालये गेहे प्रशस्ते सुपरिष्कृते ॥ कलशं सुदृढं

तत्र सुनिर्मितं सुभूषितम् । १ । पुष्पपल्लवमालाभिश्च-न्दनैः कुङ्कुमादिभिः । मृत्तिकायवसम्मिश्रं वेदमध्ये न्यसेत्ततः । २ । पश्चाग्रङ्गिः कुशैः कार्यो ब्रह्मा प-श्चान्मुखस्थितः । स्नापितः स्थापितः कुम्भे चतुर्बाहुश्च-तुर्मुखः । ३ । वत्सजान्वाकृतिर्वेद उत्तराग्रैः कुशैः कृतम् । ब्रह्मोपधाने दत्वा तं ततः स्वस्त्ययनं पठेत् । ४ । प्रतिष्ठां कारयेत्पश्चात्पूजाद्रव्यमथोच्यते । यज्ञो-पवीतं नैवेद्यं वस्त्रं चन्दनकुङ्कुमैः । ५ । स्रग्धूपदीप-ताम्बूलैरेतैश्चापि पितामहम् । ब्रह्म जज्ञानमिति वा गायत्र्या वा प्रपूजयेत् । ६ । उपाध्यायं च सम्पूज्य यथा पाठं पठेत्ततः । ततो होमादि वक्ष्यमाणं कृत्वा पठेदित्यर्थः । तत्रैव बौधायनः । स्थंडिलं कल्पयित्वा-ग्निमुपसमाधाय तं परिस्तीर्याज्येनैताभ्यो देवताभ्यो जुहोत्यग्नये सोमाय विश्वेभ्यो देवेभ्यो ब्रह्मणे ऋषि-भ्यो ऋग्भ्यो यजुर्भ्यः सामभ्यः श्रद्धायै मेधायै प्रज्ञायै धारणायै श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये काण्डऽऋषयेऽग्नये काण्डऽऋषये विश्वेभ्यो देवेभ्यः काण्डऽऋषिभ्यः सांहितीभ्यो देवताभ्यऽउपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यो वारुणीदेवताभ्य उपनिषद्भ्यो हव्यवाहाय विश्वेभ्यो वरुणेभ्योऽनुमत्यै स्विष्टकृते च पृथक् स्वाहाकारेण हुत्वा व्याहृति भिश्च हुत्वा पुनः परिषिञ्चति समाप्ते चैव यजुषा त-र्पयति । अन्ते एताग्निसोमाद्या यजुषा पदेन सह तर्पयेत् । यद्वा “भूर्देवांस्तर्पयामि” इत्यादि यजुषा त-

र्पयित्वाऽग्न्यादींस्तर्पयेदित्यर्थः । महार्णवः । एवमृग्वेदिनां काण्डऋष्यादिवर्जमास्विष्टकृतस्तेषां स्थाने शतर्चिभ्यो मध्यमेभ्यो गृत्समदाय विश्वामित्राय वामदेवायात्रये भरद्वाजाय जमदग्नये गौतमाय वसिष्ठाय प्रगाथेभ्यः पावमानीभ्यः क्षुद्रसूक्तेभ्यो महानाम्नीभ्य इति ततो वेदादिमारभ्य सन्ततमधीयीतेत्याह भगवान्बोधायनः । पुनर्महार्णवे । अथातः पारायणविधिं व्याख्यास्यामस्त्रासमाप्तेर्नाश्नीयाद्यथाशक्तिं वाऽपः पयः फलान्योदनं हविष्यं मात्रमन्नमल्पं भुक्त्वा तद्राऽशेषमधीयीत ग्रामात्प्राच्यामुदीच्यां वा दिश्युपनिष्क्रम्याग्निमुपसमाधाय परिस्तीर्येध्मं प्रज्वाल्याज्येनैताभ्यो देवताभ्यो जुहोत्यग्नये सोमायेन्द्राय प्रजापतये बृहस्पतये विश्वेभ्यो देवेभ्यो ब्रह्मण ऋषिभ्यऽऋग्यजुर्भ्यः श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतयेऽनुमतये श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये काण्डऽऋषये सोमाय काण्डऽऋषयेऽग्नये काण्डऽऋषये विश्वेभ्यो देवेभ्यः काण्डऽऋषिभ्यः सांहितीभ्यो देवताभ्य ऽउपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य ऽउपनिषद्भ्यो वारुणीभ्यो देवताभ्यऽउपनिषद्भ्यो हव्यवाहाय विश्वेभ्यो वरुणेभ्योऽनुमत्यै स्विष्टकृते च पृथक् स्वाहाकारेण हुत्वा व्याहृतिभिश्च पुनः परिषिञ्चति समाप्ते चैव यजुषा तर्पयतीति अन्ते एताग्निसोमाद्या यजुषा पदेन सह तर्पयेत् । यद्वा भूर्देवांस्तर्पयामीत्यादियजुषा तर्पयित्वाऽग्न्यादींस्तर्पये-

दित्यर्थः । महार्णवः । एवमृग्वेदिनां काण्डऋष्यादिवर्जमाश्लिष्टक्रतस्तेषां स्थाने "शतर्चिभ्यइत्यादिमहानाम्नीभ्यइत्यन्तं प्राग्वत् । ततो वेदादिमारभ्य सन्ततमधीयीत नैतस्यान्तराऽनध्यायो नास्यान्तरा जननमरणे अशुचि आशौचं नेत्यर्थः । नान्तरा व्याहरेन्न विरमेद्यावन्तमधीयीत । यावत्पर्यन्तं पठेत्तावत्पर्यन्तं न विरमेन्नान्यच्च वदेदित्यर्थः । यदन्तरा विरमेत् त्रीन्प्राणानायम्य प्रणवं वा प्रविधाय यावत्कालमधीयीत । ततः सर्वनिशान्तरं सङ्ग्रामारण्यसलिलं लोप्य परिदध्यात् । निशान्तरं सन्ध्यानिशादींल्लोप्य विहाय समापयेदित्यर्थः । आदावन्ते च ब्राह्मणभोजनं दक्षिणां च दद्यादिति महार्णवोक्तं विधानम् ॥ अथ कमलाकरः । य एतेन विधिना वेदमधीयीत सन्ततः पूतो वेदो भवति मनः शुद्धिश्च भवति वेदरूपो भवतीत्यर्थः । द्वाभ्यां पारायणाभ्यां ऋग्भिस्त्राभोजन इहाधीतेऽनृतेभ्यः प्रमुच्यते त्रिभिर्वज्रभ्यः पतनीयपातकेभ्यः शूद्रायां रेतः सिक्त्वा गङ्गाऽप्सु वन्निमज्यश्च भवति चतुर्भ्यः शूद्रान्नभोजनात्स्त्रीसेवनाच्च पञ्चभिरयाज्ययाजनादग्राह्यग्रहणात् षड्भिर्ब्राह्मणस्य लोहितकरणात्पशुहननात्सुवर्णस्तेयात्पतिसंयोगाच्च सप्तभिः प्राजापत्यस्य हीनचरणाद्यज्ञोपवन्धनाच्चाष्टभिश्चान्द्रायणगुरुतल्पगमनाद्रजस्वलागमनाच्च नवभिः सुरापानादृशभिः पुनर्जन्मेह जन्मकृतैः सर्वैः पापैः प्रमुच्यते स्वर्गं लोकं गच्छतीति । अग्निष्टोमादिक्रतु-

भिरिष्टं भवति। पितॄन्त्स्वर्गं ल्लोकं गमयति। वेदाध्यायी सदैव स्यादपात्मा सत्यवाक् शुचिः । यं यं कामं कामयते तं तं वेदेन साधयेत् । असाध्यं नास्ति यत्किञ्चिद्ब्रह्मणो हि फलं महत् । ऋग्विधाने । आदावेव तु साविच्या कर्म कुर्वीत शान्तये । पुष्टये पशुलाभाय धनलाभाय भूतये । एषा हि संहिता देवैः सर्वब्रह्ममयी निचृत् । उग्रेण तपसा दृष्टा विश्वामित्रेण धीमता । होमांश्च जपयज्ञांश्च नित्यं कुर्वीत वै तथा । सर्वकामप्रसिध्यर्थं परं ब्रह्मेदमुच्यते । एषा वै प्रतिलोमोक्ता शत्रुपक्षविनाशिनी । अक्षरप्रतिलोमेयमभिचारेषु शस्यते । सर्वसंहितया प्रत्यृचं होम आज्येन तिलेन वा। "आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते" इति ब्राह्मोक्तेः। सर्वपापहरो होमस्तिलैः सर्वत्र शस्यते । इति विष्णुधर्मोत्तरात् । शातातपः । कृच्छ्रो देव्ययुतं चैव वेदपारायणं तथा । तिलहोमसहस्रं च सममेतच्चतुष्टयम् । इदं केवलम् । अन्त्ये चान्द्रमसम् । इति कमलाकरभट्टकृतो वेदपारायणविधिः समाप्तः । व्याख्या चरणव्यूहस्य आद्यखण्डस्य तेन वै । यथामति विरचिता महादेवप्रसादतः ॥

इति चरणव्यूहपरिशिष्टव्याख्यायां प्रथमखण्डस्य व्याख्या समाप्ता ॥

---

यजुर्वेदस्य षडशीतिभेदा भवन्ति त-

त्र चरका नाम द्वादश भेदा भवन्ति चरका आव्हरकाः कठाः प्राच्यकठाः कपिष्ठलकठाश्चारायणीया वारायणीया वार्त्तान्तवीया श्वेताश्वतरा औपमन्यवः पाताण्डनीया मैत्रायणीयाश्चेति तत्र मैत्रायणीया नाम षड्भेदा भवन्ति मानवा वाराहा दुन्दुभाश्छगलेया हारिद्रवीया श्यामायनीयाश्चेति तेषामध्ययनं द्वे सहस्रे शते न्यूने मन्त्रे वाजसनेयके । ऋग्गणः परिसङ्ख्यातं ततोऽन्यानि यजूंषि च, अष्टौ शतानि सहस्राणि चाष्टाविंशतिरन्यान्यधिकञ्च पादमेतत्प्रमाणं यजुषां हि केवलं सवालखि-

त्यं सशुक्रियं ब्राह्मणं च चतुर्गुणं।
तत्र तैत्तिरीयका नाम द्विभेदा भव-
न्त्यौखेयाः खाण्डिकेयाश्चेति तत्र
खाण्डिकेया नाम पञ्चभेदा भवन्ति
कालेता शाट्यायनी हैरण्यकेशी
भारद्वाज्यापस्तम्बी चेति तेषाम-
ध्ययनमष्टादशयजुःसहस्राण्यधीत्य
शाखापारो भवति तान्येव द्विगुणा-
न्यधीत्य पदपारो भवति तान्येव
त्रिगुणान्यधीत्य क्रमपारो भवति
षडङ्गान्यधीत्य षडङ्गविद्भवति।
त्रिगुणं पठ्यते यत्र मन्त्रब्राह्मणयोः
सह यजुर्वेदः स विज्ञेयः शेषाः शाखा-
न्तराः स्मृताः॥

अथ द्वितीयखण्डं व्याख्यायते॥ यजुर्वेदस्य षड-

शीतिर्भेदा भवन्ति अत्र शाखाभेदो ग्राह्यः । षट् अशीतिर्भेदादित्यर्थः । तत्र चरकानां द्वादश भेदा भवन्तीति स्पष्टार्थः । ते के भेदाः । चरकाः । आह्वरकाः । कठाः । प्राच्यकठाः कपिष्ठलकठाः । चारायणीया । वारायणीया । वार्त्तान्तवेया । श्वेताश्वतरा । औपमन्यवः । पाताण्डनीया । मैत्रायणीयाश्चेति । मैत्रायणीयानां केचित्सप्त भेदा भवन्ति इति वदन्ति श्यामा इत्यधिकं तदधिकमेव । मैत्रायणीयस्तु वाजसनेयवेदाध्यायी । मानवं कर्मसूत्रम् । तेषामध्ययनमष्टोत्तरशतं यजुः सहस्राण्यधीत्य शाखापारो भवति तेषामध्ययने द्विचत्वारिंशदध्यायाः । अष्टशताधिकसहस्रमन्त्रा इत्यर्थः । तान्येव द्विगुणान्यधीत्य पदपारो भवति । द्विवारपठनात्पदपारायणफलं भवतीत्यर्थः । तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति । त्रिवारपठनात्क्रमपारायणफलं भवतीत्यर्थः । पदक्रमाध्ययनं भवतीत्यर्थः । षडङ्गान्यधीत्य षडङ्गविद्भवति तानि कानि षडङ्गान्युच्यन्ते ॥

शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि । छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रो

त्रमुच्यते । शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते । तथा प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानि, तत्र परिशिष्टानि भवन्ति यूपलक्षणं छागलक्षणं प्रतिज्ञाऽनुवाकसङ्ख्या चरणव्यूह श्राद्धकल्पशुल्बकानि पार्षदमृग्यजूंषीष्टकापूरणं प्रवराध्यायोक्थशास्त्रक्रतुसङ्ख्या निगमा यज्ञपार्श्वहौत्रकं प्रसवोत्थानं कूर्मलक्षणमित्यष्टादश परिशिष्टानि भवन्ति, तत्र कठानां योगा येन विशेषस्तत्र प्राच्योदीच्यनैर्ऋत्यवाजसनेया ना-

म पञ्चदश भेदा भवन्ति जाबाला बौद्धायनाः काण्वा माध्यन्दिनेयाः शाफेयास्तापनीयाः कपोलाः पौण्डरवत्सा आवटिकाः परमावटिकाः पाराशरा वैणेया अद्धा बौधेयाश्चेति तेषामध्ययनं सौक्तिकं प्रवचनीयाश्चेति । मन्त्रब्राह्मणकल्पानामङ्गानां यजुषामृचाम् । षण्णां यः प्रविभागज्ञः सोऽध्वर्युः कृत्स्नमुच्यते ॥ २ ॥

शिक्षादीनि षड् भवन्ति, षडुपाङ्गान्यपि प्रतिपदादितर्कान्तानि भवन्ति, तस्मिन्यजुर्वेदे यूपलक्षणादि कूर्मलक्षणान्तान्यष्टादशपरिशिष्टसूत्राणि भवन्ति । एतेषां व्याख्यानान्यग्रे वक्ष्यामः । तत्र प्राच्योदीच्यां नैर्ऋत्यां निर्ऋत्यस्तत्र वाजसनेयानां पञ्चदशभेदा भवन्ति । प्राच्य उदीच्य नैर्ऋत्येषु तिसृषु दिक्षु वाजसनेयवेदोत्पत्तिरग्रे वक्ष्यामः । इतरदेशेषु वेदशाखयोर्वि-

भाग उच्यते । तच्च महार्णवे । पृथिव्या मध्यरेखा च नर्मदा परिकीर्तिता । दक्षिणोत्तरयोर्भागे शाखा वेदाश्च उच्यते । १ । नर्मदादक्षिणे भागे आपस्तम्ब्याश्वलायनी । राणायनी पिप्पला च यज्ञकन्याविभागिनः । २ । माध्यन्दिनी शाङ्खायनी कौथुमी शौनकी तथा । नर्मदोत्तरभागे च यज्ञकन्याविभागिनः । ३ । तुङ्गा कृष्णा तथा गोदा सह्याद्रिशिखरावधि । आ आन्ध्रदेशपर्यन्तं बह्वृचश्चाश्वलायनी । ४ । उत्तरे गुर्जरे देशे वेदो बह्वृच ईरितः । कौषीतकी ब्राह्मणं च शाखा शाङ्खायनी स्थिता । ५ । आन्ध्रादिदक्षिणाग्नेयी गोदा सागरआवधि । यजुर्वेदस्तु तैत्तिर्य आपस्तम्बी प्रतिष्ठिता । ६ । सह्याद्रिपर्वतारम्भाद्दिशां नैर्ऋत्यसागरात् हिरण्यकेशी शाखा च परशुरामस्य सन्निधौ । ७ । मयूरपर्वताच्चैव यावद्गुर्जरदेशतः । व्याप्ता वायव्यदेशात्तु मैत्रायणी प्रतिष्ठिता । ८ । अङ्गवङ्गकलिङ्गश्च कानीनो गुर्जरस्तथा । वाजसनेयी शाखाच माध्यन्दिनी प्रतिष्ठिता । ९ । वाजसनेऋषिणा याज्ञवल्क्येन सर्वदेशेषु विस्तृता । वाजसनेयवेदस्य प्रथमा काण्वसञ्ज्ञका । १० । व्यासशिष्यो वैशम्पायनो निगदाख्यं यजुर्वेदं पठित्वा शिष्याञ्चकार । तच्च भागवते(१) । वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् । यच्चेरुर्ब्रह्महत्याहः क्षपणाय गुरोर्व्रतम् । १ । याज्ञवल्क्यस्तु तच्छिष्य आहाहो भगवन्कियत् ।

(१) द्वादशस्कन्धे ६ अध्याये षड्विंशत्पद्यमारभ्य त्रयस्त्रिंशत्पद्यपर्यन्तम् ॥

चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् । २ । इत्युक्तो गुरुरप्याह कुपितोऽपि ह्यलं त्वया । विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति । ३ । देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम् । ततो गतोऽथ मुनयो ददृशुस्तान्यजुर्गणान् । ४ । भूत्वा तित्तिरयो ब्रह्मंस्तल्लोलुपतया ददुः । तैत्तिरीया इति यजुःशाखा आसन्सुपेशलाः । ५ । याज्ञवल्क्यस्ततो ब्रह्मन् छन्दांस्यधिगवेषयन् । गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् । ६ । याज्ञवल्क्य उवाच । ओं नमो भगवते आदित्यायेत्यारभ्य यातयामयजुः काम उपसरामीति । सूत उवाच । एवं स्तुतः स भगवान्वाजिरूपधरो हरिः । यजूंष्ययातयामानि मुनयेऽदात्प्रसादतः । ७ । यजुर्भिरकरोच्छाखा दशपञ्च तथा विभुः । जगृहुर्वाजसन्यस्ताः काण्वमाध्यन्दिनादयः । ८ । इत्यादिग्रन्थपर्यालोचनया यजुर्वेदत्यागानन्तरं देवरातसुतेन अब्राह्मणत्वभिया सविता सूर्यो वाजिरूपेण वाजेभ्यः केसरेभ्यः वाजेन वेगेन वा सन्यस्तास्त्यक्ताः शाखा वाजसनेयी सञ्ज्ञा । शाखारण्डत्वपरिहारार्थं चातुर्वैद्यत्वसञ्ज्ञासंरक्षणार्थं च वाजिरूपेण सूर्येणायातयामानि (२)यजूंषि मुनये दत्तानि तैर्यजुर्भिरुपरतैः समुचिता (३) वाजसन्यः पञ्चदश-

(१) जीर्णभुक्ते उच्छिष्टवान्ते यातयामशब्द इति निघण्टुः ॥

(२) अयातयामानि अगतसाराणि वीर्यवन्तीत्यर्थः ॥

(३) वाजसनः सूर्यस्तत आगताः शाखा वाजसन्यस्ताः शाखाः काण्वादयो माध्यन्दिनादयश्चेत्यर्थः कृतो भागवतव्याख्याकारेण विजयध्वजेनेति स्फुटमवलोकयन्तु

शाखा अकरोत् । तस्माच्च मुनेः सकाशात्काण्वा माध्यन्दिनादय अध्ययनं चक्रुः । ते पञ्चदश भवन्ति । अथ प्रसङ्गाद्यजुर्वेदस्य शाखाप्रणयनविचारः किञ्चिदुच्यते । तत्र यजुर्वेद एव प्रथमः । तथा च विष्णुपुराणे । एक एव यजुर्वेदस्तं चतुर्द्धा व्यकल्पयदिति । यजुर्वेदो यज्ञोपयोगित्वस्वप्रयोगात्सर्वोऽपि वेदो यजुर्वेद इत्युच्यते । यजुर्वेदस्य शाखाभेदं सविस्तरमाह । यजुर्वेदतरोः शाखाः सप्तविंशन्महामुने । वैशम्पायननामासौ व्यासशिष्यश्चकार वै । १ । शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेऽप्यनुक्रमात् । याज्ञवल्क्यस्य तस्याभूद्ब्रह्मरातः सुतो द्विजः । २ । शिष्यः परमधर्मज्ञो गुरुवृत्तिरतः सदा । ऋषिर्यश्च महामेरौ समाजेनागमिष्यति । ३ । तस्य वै सप्तरात्रं तद्ब्रह्महत्या भविष्यति । पूर्वमेनं मुनिगणैः समयोऽयं कृतो द्विजं । ४ । वैशम्पायन एकस्तु तं व्यतिक्रान्तवांस्तथा । स्वस्त्रियं बालकं सोऽथ पदाघृष्टमघातयत् । ५ । शिष्यानाह च भोः शिष्या ब्रह्महत्यां परादृते । चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा । ६ । अथाह याज्ञवल्क्यस्तं किमेतैर्बहुभिर्द्विजैः । क्लेशितैरल्पतेजोभिश्चारिष्येऽहमिदं व्रतम् । ७ । ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामुनिम् । मुच्यतां यत्त्वयाधीतं मत्तो विप्रावमानकः । ८ । निस्तेजसा वदस्येतान्यस्त्वं ब्राह्मणपुङ्गवान् । तेन शिष्येण नार्थो-

---

नरयः ॥

ऽस्ति ममाज्ञाभङ्गकारिणः । ९ । याज्ञवल्क्यस्ततः प्राह भक्त्यैतत्ते मयोदितम् । ममाप्यलं त्वयाऽधीतं यन्मया तदिदं द्विज । १० । श्रीपराशर उवाच । इत्युक्त्वा रुधिराक्तानि सरूपाणि यजूंष्यथ । छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः । ११ । यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विजः । जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ततः स्मृताः । १२ । ब्रह्महत्याव्रतं चीर्णं गुरुणा नोदितं तु यैः । चरकाध्वर्यवस्ते तु चरणान्मुनिसत्तम । १३ । याज्ञवल्क्योऽपि मैत्रेय प्राणायामपरायणः । तुष्टाव प्रणतः सूर्यं यजूंष्यभिलषंस्ततः । १४ । अस्यार्थः । यजुर्वेदतरोरित्यादिना सप्तविंशतिः । इयं च प्रधानशाखानां सङ्ख्या । ब्रह्माण्डपुराणोक्तषडशीतिशाखाभेदस्तु प्रतिशाखविवक्षया ताश्च शुक्लयजुः पञ्चदशकं सहेत्येकशाखा आपस्तम्बोक्ता इति द्रष्टव्यम् । याज्ञवल्क्येन छर्दितैर्यजुर्भिस्तैत्तिरीयशाखा बभूव । ते याज्ञवल्क्यव्यतिरिक्ता वैशम्पायनशिष्या याज्ञवल्क्येन छर्दितं विप्ररूपेण गृहीतुमनुचितमिति तित्तिरपक्षिणो भूत्वा याज्ञवल्क्यविसृष्टानि यजूंषि जगृहुः । ततस्ताः शाखास्तैत्तिरीया बभूवुरित्यर्थः । याज्ञवल्क्यव्यतिरिक्तानां चरकाध्वर्युसञ्ज्ञां निर्वक्ति । चरकाध्वर्यवस्ते वै चरणान्मुनिसत्तम । वरकाध्वर्यवइति पाठे वरणाद्यजुषां ग्रहणात् । आध्वर्यवं चक्रुरित्यर्थः । यजूंषि वैशम्पायनेनाधीतानि । याज्ञवल्क्यस्ततो ब्रह्मञ्छन्दांस्यधिगवेषयन् ।

गुरोरविद्यमानानि स्वपतस्येऽर्कमीश्वरम्। इति भागवतोक्तेः। याज्ञवल्क्य उवाच। नमः सवित्रे द्वाराय मुक्तेरमिततेजसे। ऋग्यजुःसामरूपाय त्रयीधामात्मने नमः। १५। इत्येवमादिभिस्तेन स्तूयमानः स वै रविः। वाजीरूपधरः प्राह व्रीयतामभिवाञ्छितम्। १६। याज्ञवल्क्यस्तथा प्राह प्रणिपत्य दिवाकरम्। यजूंषि तानि मे देहि यानि सन्ति न मे गुरौ। १७। पराशर उवाच। एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः। अयातयामसञ्ज्ञानि यानि वेत्ति न तद्गुरुः। १८। यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम। वाजिनस्ते समाख्याताः सूर्याश्वाः स भवेद्यतः। १९। शाखाभेदस्तु तेषां वै दशपञ्च च वाजिनाम्। कण्वाद्यास्तु महाभाग याज्ञवल्क्यप्रकीर्त्तिताः। २०। इति। तद्गुरुर्वैशम्पायनो यानि न वेत्ति तेषां व्यासेनानुपदिष्टत्वादिति भावः। वाजिनः समाख्याता वाजिरूपसूर्यप्रोक्तसंहिताध्यायित्वात्। अग्निपुराणेऽपि। काण्वामाध्यन्दिनीसञ्ज्ञा कठी माध्यकठीतथा। मैत्रायणीयसञ्ज्ञा च तैत्तिरीयाभिधानका। वैशम्पायनिकेत्याद्याः शाखा याजुषसञ्ज्ञिता इति। आदिशब्देनएतदन्यशाखाग्रहणम्। तदुक्तं नृसिंहपराशरे। प्रथमो याज्ञवल्क्यश्च आपस्तम्बो द्वितीयकः। तृतीयो मूलघटकश्चतुर्थो वारुणः स्मृतः। पञ्चमः सहवासश्च षष्ठः स्याद्गोत्रपण्डितः। समानुजः सप्तमोक्त अष्टमश्च गयाबलः। चित्रखण्डो नवमः प्रोक्तो नवशाखाः प्रकीर्त्ति-

ता: । तन्मध्ये सह्यवासस्तु कर्मनिष्ठो द्विजाग्रणी: । एवं शाखादेशभेदाद्बह्वस्तु द्विजातय: । तत्रापि कर्मनिष्ठाश्च ग्राह्या यज्ञादिकर्मसु । हीना द्विजातय: सर्वे त्याज्या: सर्वत्र कर्मसु । हीना द्विजातय: अभीरादय:, । परदेशे त्रिदण्डवेषधारिण: । सन्यासिन: स्वग्रामे परिग्रहयुक्तास्ते त्रिदण्डिन:, । गोलपण्डितो वैश्ययाजक: । मूलघटको नागवल्लीरोपक: । निर्गूला इति प्रसिद्धा: । अन्ये वाणसादि प्रसिद्धा: । केचिद्धर्मशास्त्रानभिज्ञा वानप्रस्थाज्जाता वाणसा इति वदन्ति तद्वाक्यमारूढपतितपरम् । तदुक्तं कूर्मपुराणे वानप्रस्थाश्रमधर्मे । यस्तु पत्न्या वनं गत्वा मैथुनं कामतश्चरेत् । तद्व्रतं तस्य लुप्येत प्रायश्चित्तीयते द्विज: । तत्र यो जायते गर्भो न संस्पृश्यो द्विजातिभि: । न हि वेदेऽधिकारोऽस्य तद्वंशेऽप्येवमेव हि । आरूढपतित: प्रोक्तो मुनिभिस्तत्वदर्शिभिरिति । वाजसनीयवेदोत्पत्तिरित्यर्थ: । काण्वा: । माध्यन्दिना: । शापेया: । तापायनीया: । कपोला: । पौण्डरवत्सा: । आवटिका: । परमावटिका: । पाराशर्य्या: । वैणेया: । वैधेया: । अद्धा: । बौधेया: । (१) इति पञ्चदशशाखा इत्यर्थ: । प्रतिपदे अनुपदे अन्यत्पदं कर्तव्यमित्यर्थ: । छन्द: शास्त्रं पिङ्गलोक्तमध्यायाष्टकम् । भा-

(१) 'क' 'ख' पुस्तकयो: पाठा यथा । शावेया: । स्थापनीया: । कपाला: । पौण्ड्रवत्सा: । पराशरा: । वैनेया:, । वैजवा: । गालवा: । कात्यायनीयाश्चेति । शाखात्रितयस्थाने मूले न दृश्यन्तेऽतो मूलोक्ता: प्रामाणिका: पाठा इति बुधैरवगन्तव्या इत्यर्थ: ।।

षाशब्देन भाष्यतेऽर्थः पर्यायशब्दैर्निघण्टुरध्यायपञ्च-
कः ॥ त्रयोदशाध्यायात्मकं निरुक्तम् । धर्मशास्त्रं
मन्वाद्यनेकमहर्षिप्रणीतम् । मीमांसा जैमिनिमह-
र्षिकृतमध्यायद्वादशकम् । न्यायशब्देन काणादसूत्र-
म् । तर्कशब्देन गौतमसूत्रम् । इति षडुपाङ्गानि ।
उपज्यौतिषं ज्यौतिः शास्त्रं साङ्गलक्षणं सामुद्रका-
दि ॥ यूपलक्षणं छागलक्षणं च यज्ञे प्रसिद्धम् । प्रति-
ज्ञासूत्रं खण्डत्रयात्मकम् । अनुवाकाध्यायः । वेदशा-
खापरिज्ञानम् । श्राद्धसूत्रं नवखण्डात्मकम् । श्रौत-
यज्ञार्थमण्डपरचनात्मकं शुल्वसूत्रम् । पार्षदप-
रिशिष्टसूत्रम् । ऋग्यजुर्निर्णयात्मकम् । इष्टकापूर-
णपरिशिष्टसूत्रम् । गोत्रप्रवरनिर्णयार्थः । प्रवराध्या-
यः । उक्थशास्त्रपरिशिष्टम् । निगमयज्ञपार्श्व,हौत्र,-
क,प्रसवोत्थान,कूर्मलक्षणपरिशिष्टपञ्चकं यज्ञेषु प्र-
योजनं प्रसिद्धम् । एतानि परिशिष्टान्यष्टादशस-
ङ्ख्यकानि कात्यायनमहर्षिप्रणीतानि । द्वे सहस्रे श-
ते न्यूने मन्त्रे वाजसनेयके । ऋग्गणः परिसङ्ख्यातमेत-
त्सर्वं सशुक्रियम् । वाजसनेयके वेदे नवशताधिकसह-
स्रमन्त्रा इत्यर्थः । एतत्सकलं शुक्रियमंत्रस्त्रचँवाचमि-
ति षट्त्रिंशदध्यायोक्तचतुर्विंशद्दचात्मकसहितं, मध्या-
न्हे शुक्लवर्णेन सूर्येण दत्तः सशुक्रयजुः परिसङ्ख्यात
इत्यर्थः । वेदोपक्रमणे चतुर्दशीपौर्णिमाग्रहणाच्छुक्ल-
यजुः । प्रतिपदायुक्तपौर्णिमाग्रहणात्कृष्णयजुरिति
वा । ऋक्सङ्ख्या १९०२५ । पञ्चविंशत्युत्तरैकोनविं-

शतिः। खिलमन्त्रा अग्निश्चेति षड्विंशत्यध्यायोक्ताः। यजुःसङ्ख्या अष्टाविंशत्युत्तराष्टशतान्यष्टौ सहस्राणि। वेदचतुर्गुणं शतपथब्राह्मणमित्यर्थः। यजुर्वेदतरोरासन् शाखा एकोत्तरं शतम्। तत्रापि च षिवाः शाखाः दशपञ्च च वाजिनाम्। तत्रापि मुख्या विज्ञेया शाखा या कण्वसञ्ज्ञका। इति। ग्रन्थान्तरे,। तैत्तिरीयकानां द्विभेदा भवन्ति। औखेया। खाण्डिकेयाश्चेति। खाण्डिकेयानां पञ्चभेदा भवन्ति। आपस्तम्बी। बौधायनी। सत्याषाढी। हिरण्यकेशी। भारद्वाजीति, कात्तेता शाट्यायनीति द्वे मूलोक्ते तयोः स्थाने बौधायनी औधेयाइति बोध्ये। तेषामध्ययनपरिमाणम्। काण्डास्तु सप्त विज्ञेयाः प्रश्नाश्चाधिक्यकास्तुः। चत्वारिंशत्तु विज्ञेया अनुवाकाः शतानि षट्।१। एकपञ्चाशदधिकाः सङ्ख्याः पञ्चाशदुच्यते। द्विसहस्रञ्चैकशतमष्टानवति चाधिका।२। लक्षैकं तु द्विनवति सहस्राणि प्रकीर्त्तितम्। पदानि नवतिश्चैव तथैवाक्षरमुच्यते।३। लक्षद्वयं त्रिपञ्चाशत्सहस्राणि शताष्टकम्। अष्टषष्ठ्यधिकं चैव यजुर्वेदप्रमाणकम्।४। काण्डाः।७। प्रश्नाः।४४। अनुवाकाः।६५१। पञ्चाशी।२१६८। पदानि १६२६०। अक्षराणि।२५३८। शाखावाक्यान्ययुतानि सहस्राणि नवानि च। चतुःशतान्यशीतिश्च अष्टौ वाक्यानि गण्यते १। इति ब्राह्मणे अष्टौ वाक्यसङ्ख्या।१६४८०। इति तैत्तिरीयनिगदवेदा-

ख्यं सङ्ख्योक्ता इत्यर्थः । तत्र कठानां तूपगा यजुर्विशेषश्चतुश्चत्वारिंशदुपग्रन्थाः । मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते । यजुर्वेदः स विज्ञेय अन्ये शाखान्तराः स्मृताः । चतुश्चत्वारिंशदुपग्रन्था अध्यायाः समीपे उक्ताः । मन्त्रश्च ब्राह्मणं च मन्त्रब्राह्मणे तयोर्मन्त्रब्राह्मणयोर्वेदइति सञ्ज्ञा । तदुक्तं मन्त्रब्राह्मणयोर्वेदइति नामधेयमित्यृग्वेदीयप्रातिशाख्यभाष्यकारेणोव्वटेन । आपस्तम्बसामान्यसूत्रभाष्यकारेण कपर्हिना धूर्त्तस्वामिना च । तथा मन्त्रो नाम संहितामन्त्रस्ताद्दङ्मन्त्ररूपसंहितायास्तन्मध्ये एव तदग्रे ब्राह्मणत्वेन पठनमित्युभयथाऽपि संहितात्वेन पदत्वेन क्रमत्वेन च पठनं त्रिगुणं पठनमिति, मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यत इत्यस्यार्थः । एतादृशपठनं शाखायां अध्ययनं स यजुर्वेदस्तच्च तैत्तिरीयशाखायामेवास्ति । तथा हि । सम्पश्यामि । "प्रजाऽअहमिह प्रजसो मोमकीरिति" संहितामन्त्रः । एतस्यैव ब्राह्मणसंहितायामेव तदग्रे-सम्पश्यामि । "प्रजाअहमित्याह यावन्त एवेति" ब्राह्मणमित्युभयोरपि संहितात्वेन पदत्वेन क्रमत्वेन पठनं त्रिगुणितं पठनं भवति । एतादृशमुदाहरणान्तरमाह । "इमामगृभ्णन्रशनामृतस्य पूर्वऽआयुषि विदथेष्विति संहितामन्त्रः । "इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त"इति ब्राह्मणम् । अनयोरपि त्रिगुणत्वेन पठनम् । "उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रय"इति त्रिगुणेन पठनं भवति । एते त्रिगुणाः क-

स्यां अपि शाखायां न भवन्ति किन्तु गाथा सङ्ग्रन्थत्वा-त् । एवमन्यान्यपि बहूनि वाक्यानि सन्ति तानि वि-स्तरभयान्नोक्तानि । अतः कारणादन्ये शाखान्तराः स्मृताः । 'तेषामध्यनं प्रवचनीयास्चेति" तेषां शुक्लकृष्ण-यजुषां पठनं प्रवचनीयाः प्रतिवचनत्वेन आर्षीयपाठत्वे-न च समाप्तमित्यर्थः ॥ इति महिदासद्विजन्मना कृते च-रणव्यूहपरिशिष्टसूत्रव्याख्याने द्वितीयखण्डः समाप्तः ॥

अन्यान्यपि पुराणवाक्यानि सङ्गृहीतानि । अग्निमीडे नमस्तुभ्यमिषे त्वोर्ज्जे त्वसत्तनुः । अग्नऽआयाहि वीतये शन्नो देवी स्वरूपवान् । १ । इषे त्वोर्ज्जे यजुर्वे-दशब्दः पुरुष एव च । नभश्च पूर्णिमासूर्य उदयव्यः-पिनी तथा । २ । सङ्गृह्यमाणश्च वेदं प्रतिवर्षंव्रतं चरेत् । यातयामनिष्टत्यर्थं वेदस्य च विशेषतः । ३ । तस्योष्णिक्छन्दसा मेदा गायत्री च त्वचा स्मृता । मां-सेषु त्रिष्टुभं विद्यादनुष्टुब्रुधिरः स्मृतः । ४ । अस्थिषु जगती चैव मज्जासु पङ्क्तिरेव च । प्राणेषु बृहती छन्दो यजुर्वेदस्य लक्षणम् । ५ । एतदर्थे ऐतरेयश्रुतिः । "शुक्लकृष्णकनीनिकेति स यद्यपि ह्यषा वदति । यएवमेतं छन्दसां छन्दस्त्वं वेदेत्यन्तम्" । पुण्याहवा-चने मन्त्राग्मोच्चये कङ्कणस्य च । सभायां ब्रह्मयज्ञे च इषे त्वोर्ज्जे यजुः पठेत् । शाङ्ख्यायनं ब्रह्मयज्ञे इषे त्वोर्ज्जे यजुः स्मरेत् । श्रौते स्मार्त्ते च पूर्त्ते च सर्वक-र्मसु योजितः । २ । ऋग्यजुःसामाथर्वांश्च सभायां कुण्डमण्डपे । ब्रह्मयज्ञे प्रतिसरे पठेद्वै स्वस्तिवाच-

ने । ३ । अन्यत्र समुदायस्य प्रायश्चित्ते सभासु ते । यजुर्वेदोपनिषदे मन्त्राः शाकलसञ्ज्ञकाः । ४ । उपदिष्टाः शौनकेन आत्मशिष्याय हृद्ये । तेषां शाकलमन्त्राणां यजुःसञ्ज्ञा समीरिता । ५ । व्याख्या चरणव्यूहस्य यजुःखण्डस्य तेन वै ॥ विस्तारिता यथा बुद्धि महादेवप्रसादतः । ६ ॥ इति शौनकोक्तयजुर्वेदीयद्वितीयखण्डस्य चरणव्यूहपरिशिष्टसूत्रस्य व्याख्या समाप्ता ॥

## अथ तृतीयखण्डस्य व्याख्या प्रारभ्यते ॥

सामवेदस्य किल सहस्रभेदा भवन्त्येष्वनध्यायेष्वधीयानास्ते शतक्रतुवज्रेणाभिहताः शेषान्व्याख्यामस्तत्र राणायनीया नाम सप्त भेदा भवन्ति राणायनीयाः शाट्यमुग्राः कालोपा महाकालोपा लाङ्गलायनाः शार्दूलाः कौथुमाश्चेति तेषामध्ययनमशी-

त्रिशतमाग्नेयं पावमानं चतुः शतमै-
न्द्रं तु षट्शतिर्यानि गायन्ति साम-
गास्तान्यधीत्य चण्डात्प्रचण्डतरो भ-
वति शिष्टान्यधीत्य शिष्टाऽऽविंशति-
को भवति तत्र कोचित्पुनर्ऋक्तन्त्रं
सामतन्त्रं सञ्ज्ञाधातुलक्षणमिति
विधीयन्ते। अष्टौ सामसहस्राणि सा-
मानि च चतुर्द्दश। अष्टौ शतानि न-
वतिदशतिर्वालखिल्यकम् । सरहस्यं
ससुपर्णं प्रेक्ष्यस्तत्र वालखिल्याः ।
सारण्यकानि सौर्याणि ह्येतत्साम-
गणं स्मृतम् ॥ इति शौनकोक्तचरण-
व्यूहपरिशिष्टसूत्रे तृतीयखण्डः स-
माप्तः ॥

# अथ तृतीयखण्डस्य व्याख्यानम् ॥

सामवेदस्येति । किलेति प्रसिद्धौ सहस्रभेदा आ-सीत् । सहस्रभेदमध्ये शक्रेण वज्रेणाभिहताः प्रण-ष्टाः । अनध्यायेष्वधीयाना मीयन्ते विद्युताः खलु इति । शेषान् शाखापाठकान्व्याख्यास्यामः । आसु-रायणीया । वासुरायणीया । वार्त्तान्तरेया । प्राञ्ज-ल ऋग्वैनविधाः । प्राचीनयोग्याः । राणायनीयाश्चे-ति, तत्र राणायनीयानां नव भेदा भवन्ति । राणाय-नीयाः । शाट्यायनीयाः । शाट्यमुग्राः । खल्वलाः । महाखल्वलाः । लाङ्गलाः । कौथुमी । गौतमी । जै-मिनीयाश्चेति । (१) । तेषामध्ययनं अष्टौ सामसहस्रा-णि सामानि च चतुर्दशान्यष्टौ शतानि दशभिर्दशस-प्तसु वालखिल्यः सुपर्णः प्रेक्ष्यसेतत्सामगणं स्मृतम् । अथ प्रकारान्तरेणाह । तत्र राणायनीयानां सप्त भे-दा भवन्ति । राणायनीयाः । सासत्यमुग्राः । कालेयाः । महाकालेयाः । लाङ्गलायनाः । शार्दूलाः । कौथुमा-श्चेति । तत्र कौथुमानां षड्भेदा भवन्ति कौथुमाः । आसुरायणाः । वातायनाः । प्राञ्जलिद्वैनभृतः । प्रा-चीनयोग्याः । नैगमीयाः । इति तेषां कौथुमादीना-मध्ययनम् । अशीतिशतमाग्नेयं पावमानं चतुःश-

---

(१) कालेया । महाकालेया । इत्यनयोर्द्वयोः स्थाने, खल्वला महाखल्वला इति 'ख' पुस्तकपाठः । अपरं मूले सप्त भेदा, व्याख्यायां नव भेदा भेदद्वयमधिकं च दत्तमिति 'ग' पुस्तकपाठ इति ॥

शिष्या आसन्पञ्चशतानि वै । पौष्यञ्ज्यावन्त्ययोश्चापि तांश्चोदीच्यान्प्रचक्षते । ३७ । लौगाक्षिर्लाङ्गलिः कुल्यः कुसीदः कुक्षिरेव च । पौष्यञ्जिशिष्या जगृहुः संहितास्ते शतं शतम् । ३८ । कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः । शिष्य ऊचे स्वशिष्येभ्यः शेषा आवन्त्य आत्मवान् ३९ अस्यार्थः । सामगस्य जैमिनेः पुत्रः सुमन्तुर्नाम तस्य सुमन्तोः सुतः सुमन्वान्नाम ताभ्यां सुमन्तुसुमन्वभ्यां पुत्रपौत्राभ्यां क्रमेणैकैका प्राह । सुकर्मापि तस्य जैमिनेः शिष्यो महानतिप्रज्ञावान् सामवेदाख्यतरोः साम्नां सहस्रसंहितारूपं भेदं चक्रे । कोसलपुत्रो हिरण्य नाभश्च पौष्यञ्जिश्च सुकर्मणः शिष्यौ सामशाखां जगृहतुः । अन्ये आवन्त्य उदीच्यश्च सामशाखां जगृहतुः, पौष्यञ्ज्यावन्त्ययोश्चापि सामगाः पञ्चशतानि शिष्या आसन् । तेषां समुदितानां मतानां नामानीति पौष्यञ्जिशिष्या लौगाक्ष्यादयो नाम्ना शतं शतं संहिता जगृहुः, हिरण्यनाभस्य शिष्यो नाम्ना कृतश्चतुर्विंशतिसंहिताः स्वशिष्येभ्य ऊचे शेषाश्चान्या संहिता आत्मज्ञानवानावन्त्यः स्वशिष्येभ्य ऊचे । इत्यर्थः ॥ व्याख्याचरणव्यूहस्य सामखण्डस्य तेन वै ॥ विस्तारिता यथाबुद्धि महादेवप्रसादतः ॥

इति चरणव्यूहपरिशिष्टसूत्रस्य तार्तीयकखण्डस्य व्याख्या समाप्ता ॥

अथ चरणव्यूहपरिशिष्टसूत्रस्य च-
तुर्थखण्डः प्रारभ्यते ॥

अथर्ववेदस्य नव भेदा भवन्ति पि-
प्पलाः शौनका दामोदात्तोत्ताय-
ना जावाला ब्रह्मपलाशा कुनखी
देवदर्शी चारणविद्याश्चेति द्वादशैव
सहस्राणि पञ्चकल्पानि भवन्ति
कल्पे कल्पे पंचशतानि भवन्ति न-
क्षत्रकल्पो विधानकल्पः संहिता-
विधिरभिचारकल्पः शान्तिकल्प-
श्चेति तत्र वेदानामुपवेदाश्चत्वारो
भवन्त्यृग्वेदस्यायुर्वेद उपवेदो यजुर्वेद-
स्य धनुर्वेदउपवेदः सामवेदस्य गा-
न्धर्ववेदोऽथर्ववेदस्यार्थशास्त्रं चेत्याह

भगवान्व्यासःस्कन्दो वा य इमे वे-
दाश्चत्वारस्तेषामेकैकस्य कीदृशं रू-
पं वर्णविधोच्यते ऋग्वेदः पद्मपत्रा-
क्षः सुविभक्तग्रीवः कुञ्चितकेश-
श्मश्रुः श्वेतवर्णो वर्णेन कीर्त्तितं प्र-
माणं तावत्तिष्ठन्वितस्तीः पञ्च; य-
जुर्वेदः पिङ्गाक्षः कृशमध्यस्थूलगल-
कपोलस्ताम्रवर्णः कृष्णवर्णो वा प्रा-
देशमात्रःषड्दीर्घत्वेन सामवेदो नि-
त्यं स्रग्वी सुप्रयतः शुचिवासाः श-
मी दान्तो बृहच्छरीरः शमीदण्डी
कातरनयन आदित्यवर्णो वर्णेन न-
वारत्निमात्रोऽथर्ववेदस्तीक्ष्णः प्रच-
ण्डकामरूपी विश्वकर्त्ता क्षुद्रकर्त्ता

स्वशाखाध्यायी प्राज्ञश्च महानीलो-
त्पलवर्णो वर्णेन दशारत्निमात्र ऋ-
ग्वेदस्यात्रेयसगोत्रं सोमदैवत्यं गा-
यत्रीछन्दो, यजुर्वेदस्य काश्यपस-
गोत्रमिन्द्रदैवत्यं त्रिष्टप्छन्दः; साम-
वेदस्य भारद्वाजसगोत्रं रुद्रदैवत्यं ज-
गतीछन्दोऽथर्ववेदस्य वैतानसगो-
त्रं ब्रह्मदैवत्यमनुष्टुप्छन्दो, य इमे वे-
दानां नामरूपगोत्रं प्रमाणं छन्दो-
दैवतं वर्णं वर्णयन्ति । अविद्यो ल-
भते विद्यां जातिस्मरोऽथ जायते ।
जन्मजन्मवेदपारगो भवत्यव्रतीव्रती
भवत्यब्रह्मचारी ब्रह्मचारी भवति न-
मः शौनकाय नमः शौनकाय ॥

य इदं चरणव्यूहं गर्भिणीं श्रावये-
त्स्त्रियम् ॥ पुमांसं जायते पुत्रमृषि-
भिर्वेदपारगम् । य इदं चरणव्यूहं
श्राद्धकाले पठेद्द्विजः । अक्षय्यं तद्भ-
वेच्छ्राद्धं पितॄँश्चैवोपतिष्ठते । य इदं
चरणव्यूहं पठेत्स पङ्क्तिपावनः ।
तारयेत्प्रभृतीन्पुत्रान्पुरुषान्सप्तसप्त-
च । य इदं चरणव्यूहं पठेत्पर्वसु प-
र्वसु । विधूतपाप्मा स स्वर्गी ब्रह्म-
भूयाय गच्छति । रतिर्धृतिश्शिवा
श्यामाश्चत्वारो वेदपत्निकाः । ज्ञा-
तव्या यज्ञकालेषु ईशानादिव्यव-
स्थिताः । लक्षं तु चतुरो वेदा लक्षं

# चतुर्लक्षं तु ज्यौतिषं चतुर्लक्षं तु ज्यौतिषम् ॥ ५ ॥

## इति शौनकोक्तचरणव्यूहपरिशिष्टसूत्रे चतुर्थपञ्चमखण्डः समाप्तः ॥

## अथ चतुर्थपञ्चमखण्डस्य विवृत्तिरारभ्यते ॥

अथर्ववेदस्येति। अथर्ववेदस्य नव भेदा भवन्ति नव शाखा भवन्तीत्यर्थः। तानाह। पैप्पला। दान्ता। दामोदान्ता। औतापना। जाबाला। शौनका। ब्रह्मपलाशा। कुनखी। देवदर्शी। चारणविद्याश्चेति(१)॥ तेषामध्ययनं द्वादशैव सहस्राणि मन्त्राणाम्। कीदृशानि पञ्चकल्पानि भवन्ति। अत्र बहुवचनात्ते बहवः। यत्र एकवचनं स एकः। तेषामध्ययनं शाखया उच्यते। द्वादशसहस्राणि मन्त्राणां कीदृशानि। एकस्मिन्कल्पे कल्पे पञ्चशतानि मन्त्राणाम्। कल्पान्याह। नक्षत्रकल्पः। विधानकल्पः। संहिताविधिकल्पः। अभिचारकल्पः। शान्तिकल्पः। इति

(१) दान्ता प्रदान्ता इति 'ख' पुस्तकेऽधिकपाठो मूलसूत्राद्बोध्यः॥ वेददर्शीति 'ग' पुस्तकपाठः। चरणविद्याश्चेति 'घ' पुस्तकपाठः। 'ब्रह्मदायशाद्वीति 'क' पुस्तकपाठश्च॥

पञ्चकल्पाः । तत्र वेदानां चत्वारउपवेदा भवन्ति । यथा ऋग्वेदस्योपवेद आयुर्वेदः चिकित्साशास्त्रम् । यजुर्वेदस्योपवेदो धनुर्वेदो युद्धशास्त्रम् । सामवेदस्योपवेदो गान्धर्ववेदस्सङ्गीतशास्त्रम् । अथर्ववेदोऽर्थशास्त्रं नीतिशास्त्रम् । शस्त्रशास्त्रं विश्वकर्मादिप्रणीतंशिल्पशास्त्रम् । इति भगवान्वेदव्यासः स्कन्दः कुमारो वाऽऽह । य इमे चत्वारो वेदा उक्तास्तेषां मध्ये एकैकस्य कीदृशं रूपं आकारः । तत्तद्वर्णं सितासितादि । वर्णविधः प्रकारस्सोच्यते । तत्रादौ ऋग्वेदस्वरूपमाह । ऋग्वेदः पद्मपत्रायताक्षः । पद्मपत्रं कमलदलं तद्वदक्षिणी नेत्रे यस्य सः । सुविभक्तः । सुविभक्ता रेखात्रयाङ्किता ग्रीवा यस्य सः । कुञ्चितकेशश्मश्रुः । कुञ्चितावलीमन्तः केशाः शिरसिजाः श्मश्रूणि मुखरोमाणि यस्य सः । श्वेतवर्णो । वर्णेन तु ककुब्वर्णो न, श्वेतवर्णः श्वेतो वर्णो यस्य सः । कीर्त्तितं प्रमाणं तावत्तिष्ठन्वितस्तीः पञ्च, तावत्साकल्येन, पञ्च वितस्तीर्भवन्ति ह्येतत्प्रमाणमृग्वेदस्य कीर्तितमुक्तं' वितस्तिशब्दो द्वादशाङ्गुलात्मकः । सार्द्धहस्तद्वयप्रमाणमित्यर्थः । यजुर्वेदस्वरूपमाह । यजुर्वेदः पिङ्गे पीते अक्षिणीयस्य सः । कृशं मध्ये कटिप्रदेशे यस्य सः । स्थूलौ गलकपोलौ यस्य सः । ताम्रवद्राचरितो रक्तो वर्णो यस्य सः । यद्वा कृष्णवर्णो यस्य सः । दीर्घत्वेनोच्चत्वेन षट्प्रादेशमात्रप्रमाणं यस्य सः । प्रादेशस्तु प्रदेशिन्येत्यभिधानोक्तेः । अङ्गुष्ठप्रदेशिन्योर्विहितत्वात्प्रमाणप्रादेशो दशाङ्गुलः ।

ताहशाः षट्प्रादेशाः प्रमाणं षण्ण्यङ्गुलं सार्द्धद्वयहस्त-मित्यर्थः । सामवेदस्वरूपमाह । सामवेदो नित्यं स्रग्वी स्रजो माला यस्य सन्तीति स्रग्वी । "अस्मायामेधास्रजो विनिः" । इति सूत्राद्विनि प्रत्ययः । नित्यं पुष्पमालाधारी । यमनियमवान् । सुप्रयतः शुचिः । पवित्रः । शुचि शुद्धं वासो वस्त्रं यस्य स शुद्धवस्त्रधारी । शमः शान्तिरस्यास्तीति शमी शान्तमनाः । दान्तो नियतबाह्येन्द्रियः । बृहन्महच्छरीरं यस्य सः । शमीतरोर्दण्डो यस्य सः शमीदण्डो ॥ (१) कातरेऽल्पेऽ-

(१) श्रीमद्भागवतेऽपि अथर्ववेदाचार्याः कथिता यथा । अथर्वविदसुमन्तुश्च शिष्यमध्यापयत्स्वकम् । संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान् । १ । शौक्लाय निर्ब्रह्मत्रालिर्मोदोषः पिप्पलायनिः । वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो शृणु ।२। कुमुदः शौनको ब्रह्मन् जाजलिश्चाप्यथर्ववित । बभ्रुः शिष्योऽप्यङ्गिरसः सैन्धवायनएव च । ३ । अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथाऽपरे । नक्षत्रकल्पः शान्तिश्च कश्यपाङ्गिरसादयः । ४ । एते आथर्वणाचार्याः शृणु पौराणिकान्मुने । टीकाकारः । शुनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे । द्वितीयां संहितां प्रादात्सैन्धवायनसञ्ज्ञिते ५ ।। इति अथर्ववेदाचार्याः सम्यगुदीरिताः द्वादशस्कन्धे ६ अध्याये ।। अन्यान्यपि ऋग्वेदयजुर्वेदसामवेदाथर्वायुर्वेदधनुर्वेदगान्धर्ववेदार्थवेदानां शिक्षादिषडङ्गानां, च धर्मशास्त्राद्युपाङ्गानां पुराणेतिहासादिनां च लक्षणानि हेमाद्र्युक्तानि लिख्यन्ते । ऋग्वेदः श्वेतवर्णः स्याद्द्विभुजो रासभाननः । अक्षमालामयः सौम्यः प्रीतश्चाध्ययनोद्यतः । १ । अजास्यः पीतवर्णः स्याद्यजुर्वेदोऽक्षसूत्रधृक् । वामे कुलिशपाणिस्तु भूतिदो मङ्गलप्रदः । २ । नीलोत्पलदलाभासः सामवेदो हयाननः । अक्षमालान्वितो दक्षे वामे कम्बुधरः स्मृतः । ३ । अथर्वणाभिधो वेदो धवलो मर्कटाननः । अक्षसूत्रं च खट्वाङ्गं बिभ्राणोऽयं जपप्रियः । ४ । आयुर्वेदो हरिद्राभो वानरास्यो विशालदृक् । अक्षसूत्रं सुधाकुम्भं बिभ्रदारोग्यदो भृशम् । ५ । अस्य धन्वन्तरिर्भगवान्कर्त्ता । पीतवर्णो धनुर्वेदः पिकवक्त्रो महातनुः । रत्नमालावलिं धत्ते मस्तके भूषिता जटा । ६ । अस्य कर्त्ता महर्षिर्विश्वामित्रः । गीतशास्त्रं सितं रम्यं मृगं वक्त्रं जटाधरम् । अक्षसूत्रं त्रिशूलं च बिभ्राणं च त्रिलोचनम् । ७ । अस्य कर्त्ता महर्षिर्भरतः । अर्थशास्त्रं भवेद्गौरं सारिकास्यं सुचन्दनम् । अक्षसूत्रं पृदाकुं च धारयन्कुण्डला-

दैवत्यं सोमादि ६ वर्णं श्वेतादि च ७ इत्यादि यो जानाति स अविद्यो विद्याहीनः सन्विद्यां लभते प्राप्नोति जातिस्मरोऽथ जायते । अथ जन्मान्तरे उत्तमजातिर्जायते पूर्वजातिं स्मरति । जन्मजन्म प्रतिजन्मवेदपारगः । वेदपाठी भवति । अव्रती व्रती भवति । व्रतहीनोऽपि व्रतवान्भवति व्रतम् ब्रह्मचर्यहीनो ब्रह्मचर्यफलं प्राप्नोति । शौनकाचार्याय नमः । पदाष्टत्तिर्ग्रन्थसमाप्त्यर्थः । श्रवणपठनफलमाह । यइदमिति । यः पुमान् इदं चरणव्यूहं गर्भिणीं स्त्रियं श्रावयति सा स्त्री पुमांसं पुरुषलक्षणोपेतं पुत्रं जनयेत् यः श्राद्धकाले द्विजः इदं चरणव्यूहं पठेत् तच्छ्राद्धं पितृन्तर्पयतीत्यर्थः । य इदं प्रत्यहं पठेत्स पङ्क्तिपावनो भवति । यस्यां पङ्क्तौ द्विजा आस्ते तां सर्वां पङ्क्तिं पावयतीत्यर्थः । स च पुरुषः पुत्रान्प्रभृतीन्पुत्रादिकान्सप्त सप्त च पुनः सप्तवारानाद्यादीन्पित्रादींश्च आत्मानं चैव पञ्चदशपुरुषान्तारयति । यइदं पठेत्पर्वसु । अष्टमीभूतदर्शपौर्णमासीसङ्क्रान्तिषु च पठति सधूतपाप्मा दूरीकृतः पापं येन सः । स स्वर्गवासी पवित्रः सन् ब्रह्मभावाय गच्छति । "कर्मणि चेति" चतुर्थी । ब्रह्मभावं प्राप्नोतीत्यर्थः । 'ख' पुस्तके पाठविशेषो यथा । यो नामानि पुरा वेदा अमृतत्वं च गच्छति । लोकातीतं महाशान्तममृतत्त्वं च गच्छति । ओं नमः इत्याह भगवान्पाराशर्य्यः । ओं नमः परमर्षिभ्यो नमः । तं वेदशास्त्रपरिनिश्चितशुद्धबुद्धिं च-

मीश्वरं सुरमुनीन्द्रतनुं कवीन्द्रम् । कृष्णद्विपं कनकपिङ्गजटाकलापं व्यासं नमामि शिरसा तिलकं मुनीनाम् । १ । इति शौनकमहर्षिप्रणीतचरणव्यूहपरिशिष्टसूत्रभाष्ये चतुर्थपञ्चमखण्डव्याख्या समाप्ता ॥ त्रिद्शाङ्कधरा १९१३ मिते गतेब्दे मधुमासे दशमीतिथौ सुधांशौ ॥ महिदासबुधः परोपकृत्यै चरणव्यूहमिदं व्यकारि काश्याम् ॥ १ ॥ विद्वद्भिः प्रार्थितेनेयम्महिदासद्विजन्मना ॥ चरणव्यूहविवृत्तिर्विधिना तु मया कृता ॥ २ ॥

---

तां संविशोध्य सहसा विदुषा पाठके न तु ।
युगलप्राक्किशोरेण ख्यापिता विवृतिर्मुदा ॥ १ ॥
श्रीकाश्यां वैश्यवर्येण कन्नूलालाभिधेन वै ।
मुद्रिता सीरीजभागी थीबो शिष्टानुसारतः ॥ २ ॥

संवत् १९४५ श्रावणशुक्ल ७ सप्तम्यां भौमवासरे ॥

# अथ शुद्धाशुद्धिसूचीपत्रम् ॥

| शुद्ध | अशुद्धि | पङ्क्ति | पृष्ठ |
|---|---|---|---|
| प्रयोजनपूर्वकाणा | पूर्त्रकाणा | १ | २ |
| विभूतिर्या | विभातिर्या | २० | ७ |
| यकाराकारयोः | यकारवकारयोः | १४ | १४ |
| गृहीतौ | ग्रहीतौ | ७ | २३ |
| अग्नेपूर्वं | पूवं | ९ | २५ |
| भवति | भवति | १५ | ३६ |
| इहाकारः | इहेकारः | ४ | ५० |
| आविर्निरिढः | अविर्निरिढः | ५ | ७३ |
| सकारो ढकारमा | सकारमा | ३ | १०२ |
| ओकारमितः | उकारमितः | ५ | १२० |
| व्याकरणस्य | व्यारणस्य | ४ | १२९ |
| उदात्ताच्चानुदात्तं | उदात्तानुदात्तं | १७ | १२९ |
| परेश्च सिञ्चतेः | परेःसिञ्चतेः | १३ | १३१ |
| परीत्येतत्पदं | परोत्येतत्पदं | १३ | १३४ |
| अवग्रहवर्जिते | अवग्रवर्जिते | ४ | १५२ |
| लक्ष्माग्राघारा | लक्ष्माघारा | १ | १६१ |
| चतुर्थोऽध्यायः | तृतीयोऽध्यायः | १ | १६५ |
| औणादिकशप्रत्यये | औणादिकशप्रत्यये | ९ | १६५ |
| जहीमोऽम्बिके | जहीमोम्बिक | ८ | १९९ |
| स्पर्शैर्भवन्ति | स्पर्शैर्भवन्ति | १४ | २०० |
| त्वकारमात्रे | त्वकारात्रे | २४ | २४४ |
| विसर्ज्जनीयाद्व्यञ्जनपरः। १०६ सू०। | पङ्क्तौविस्मृतम् | १२ | २५० |
| पुरोऽनुवाक्या | राऽनुवाक्या | ८ | २६५ |
| श्रुतिधरा | श्रुतितरा | ९ | २६६ |
| सु नः | पदद्वयं विस्मृतम् | ७ | २७१ |
| प्रत्ययेषु | सुप्रत्ययेषु | १२ | २७१ |
| ऋॣवर्णे | ऋॣवर्णा | ८ | ३२२ |
| गोपतौ | गौपतौ | ११ | ३३९ |
| कनीनाम् | कनीनम् | २ | ३६४ |

| शुद्ध | अशुद्धि | पङ्क्ति | पृष्ठ |
|---|---|---|---|
| अति | विस्सृतम् | ३ | ६६६ |
| पाङ्क्त्रानिति | पाङ्क्त्रामिति | ३ | ३७५ |
| पञ्चमोऽध्यायः। | चतुर्थोऽध्यायः | नामपङ्क्तौ | ३२९ |
| ,, | ,, | ,, | ३३१ |
| ,, | ,, | ,, | ३३३ |
| ,, | ,, | ,, | ३३५ |
| ,, | ,, | ,, | ३३५ |
| ,, | ,, | ,, | ३३७ |
| ,, | ,, | ,, | ३३९ |
| ,, | ,, | ,, | ३४१ |
| ,, | ,, | ,, | ३४३ |
| साधारण्येन | साधारण्यंन | ४ | ४१९ |
| भाषिक | प्रतिज्ञा | नामपं. | ४६५ |
| भाषिक | प्रतिज्ञा | ,, | ४६७ |
| भाषिक | प्रतिज्ञा | ,, | ४६९ |
| आस्मिन्न्हव्या | आस्मम्न्हव्या | ५ | ४९२ |
| आस्मिन् | आस्मभन् | ५ | ४९२ |
| अस्मिमन्न्हव्या | आस्मिन्हव्या | ६ | ४९२ |
| शिखामुतक्ता | शिखामुत्कवा | ९ | ४९२ |
| चतुरवसाना | चतुरवना | १६ | ४९७ |
| वाशुस्त्रिवृदेका | वाशुस्त्रिवृदेका | २३ | ५०३ |
| अनुवाकाध्यायपरिशिष्टम् ५०५ | शुक्लयजुःप्रातिशाख्ये ५०४ | नामपङ्क्तौ | ५०५ |
| अपाघं | अपाद्यं | १३ | ५०५ |
| शुक्लयजुःप्रातिशाख्ये ५०६ | ऋग्यजुःपरिशिष्टम् ५०५ | नामपङ्क्तौ | ५०६ |
| ५०७ | ५०६ | ,, | ५०७ |
| वैशम्पायन | बैसम्यायन | १२ | ४ |
| त्रीण्यद्धार्चाया | त्रीण्यूर्द्धर्चाया | १७ | १७ |
| कण्वाद्यास्तू | कण्वाद्यस्तु | १३ | ३७ |

इति शुभम्।